# "भारतीयदर्शनेषु मनस्तत्त्वसमीक्षा"

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

विद्यावारिधि ( पी-एच्०डी० ) इत्युपाधये प्रस्तुतः

शोध - प्रबन्धः




निर्देशकः-
डॉ० महाप्रभुलाल गोस्वामी
आचार्योऽध्यक्षश्च
तुलनात्मकधर्मदर्शन विभागस्य

गवेषकः
जयप्रकाश त्रिपाठी
दर्शन विभागाध्यक्षः
शास्त्रार्थ महाविद्यालयस्य
वाराणसीस्थस्य

सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य, वाराणसीस्थस्य

माघपूर्णिमा वि० सं० २०४१ फरवरी सन् १९८५

# "भारतीयदर्शनेषु मनस्तत्त्वसमीक्षा"

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

विद्यावारिधि ( पी-एच्०डी० ) इत्युपाधये प्रस्तुतः

शोध - प्रबन्धः




निर्देशकः-
डॉ० महाप्रभुलाल गोस्वामी
आचार्योऽध्यक्षश्च
तुलनात्मकधर्मदर्शन विभागस्य

गवेषकः
जयप्रकाश त्रिपाठी
दर्शन विभागाध्यक्षः
शास्त्रार्थ महाविद्यालयस्य
वाराणसीस्थस्य

सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य, वाराणसीस्थस्य

माघपूर्णिमा वि० सं० २०४१ फरवरी सन् १९८५

श्रीमता जयप्रकाशत्रिपाठिना "भारतीयदर्शनेषु मनस्तत्त्व-समीक्षा" इति विषयमादाय सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय विद्यावारिधि (पी-एच० डी०) इत्युपाधिमधिकर्तुं महतापरिश्रमेण स्वोपज्ञतया च यथाविधि यथासमयं मम निर्देशने शोधनिबन्धः पूरितः ।

शोधनिबन्धस्यास्य पर्यालोचनेन इदं ज्ञायते यदयं निबन्धः परीक्षणार्हतां बिभर्तीति संस्तौति -

महाप्रभुलाल गोस्वामी

दिनाङ्कः १०/२/८६

(डॉ० महाप्रभुलाल गोस्वामी)
आचार्योऽध्यक्षश्च
तुलनात्मकधर्मदर्शनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये,
वाराणस्याम् ।

## कार्तज्ञ्याभिव्यक्तिः

आनुवंशिकसंस्कारेण संस्कृतवाङ्मयस्य प्राचीननवीनपरम्परायां मयाऽध्ययनं सम्पादितम् । तत्र दर्शनशास्त्रे आचार्यपरीक्षोत्तीर्णानन्तरं नूतने पथि गवेषणायाः प्रबलत्वात् सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य दर्शनविभागाध्यक्षमहोदयानां प्राच्यपाश्चात्य उभयदर्शनपारावारपारंगतानां श्रीमता डा०महाप्रभुलालगोस्वामिमहानुभावानां निर्देशकत्वे "भारतीयदर्शनेषु मनस्तत्त्वसमीक्षा" इति विषयमधिकृत्य विद्यावारिधिपुपाधिमधिकर्तुं अशीत्यधिक एकोनविंशतिशततमे ईसवीये वर्षे पञ्जीकरणमभूत् ।

बाल्यकालादेव पदवाक्यप्रमाणपारावारीणेभ्यः विद्वत्शेखरायमाणेभ्यः साक्षात्प्रत्यक्षीकृतव्याकरणादिशास्त्रेभ्यः प्रख्यातशेमुषीकेभ्यः स्वपितृचरणेभ्यः श्रीमद्भ्यः पं०श्रीरामप्रसादत्रिपाठिमहोदयेभ्यः सकाशादेव अहर्निशं व्याकरणदर्शनादीनि शास्त्राणि मया अधिगतानि । सर्वतः प्रथमं परमपूज्य पितृपादेभ्यः स्वकीयं हार्दिकं कार्तज्ञ्यं विनिवेदयामि येषां चरणकमलयोः प्रेमभाजनो भूत्वा एतस्मिन् महतिकार्ये निमग्नोऽस्मि ।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदान्तविभागाध्यक्षेभ्यः परमश्रद्धास्पदेभ्यः विद्वत्तल्लजेभ्यः शास्त्रार्थमहारथिभ्यः व्याकरणन्यायवेदान्ताद्यनेकशास्त्राब्धौ निलीयं विचरद्भ्यः अस्मद्गुरुवर्येभ्यः श्रीमद्भ्यः पण्डितश्रीदेवस्वरूपमिश्रमहोदयेभ्यः हार्दिकं कार्तज्ञ्यं समर्पयामि ये सततं वेदान्तादिशास्त्राध्यापनेन मां

परितोषयन्ति ।

एतस्य शोधप्रबन्धस्य निर्देशकपदमलङ्कुर्वद्भ्यः स्वकीयं कार्यजातं परित्यज्य एतस्मिन् कार्ये साहाय्यं ददद्भ्यः दर्शनशास्त्राचार्यवारीणेभ्यः निरन्तर-शोधकार्यसम्पादनेदत्तावधानेभ्यः डा० महाप्रभुलालगोस्वामिमहोदयेभ्यः स्वकीयं हार्दिकं कार्तज्ञ्यं समर्पयामि येषां वैदुष्यपूर्णनिर्देशनेन इदं कार्यं पूर्णताङ्गतम् ।

एतस्य शोधनिबन्धस्य परिपूर्तौ सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य व्याकरणविभागाध्यक्षेभ्यो वेदवेदाङ्गसंकायाध्यक्षेभ्यश्च श्रीमद्भ्यः रामयत्नशुक्ल-महोदयेभ्यो हार्दिकं कार्तज्ञ्यं विनिवेदयामि, येषां महान्सहयोगः प्राप्तो भूत् ।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य भूतपूर्ववेदान्तविभागाध्यक्षेभ्यः व्याकरणवेदान्ताद्यनेकशास्त्रपारङ्गतेभ्यः गुरूणां गुरुभ्यः श्रीमद्भ्यो विद्वच्छि-रश्शेखरायमाणेभ्यः श्रीरघुनाथशर्ममहानुभावेभ्यः स्वीयं हार्दिकं कार्तज्ञ्यं समर्पयामि, येषां चरणकमलयोः साक्षात्कृपया मदीयो यं शोधप्रबन्धः पूर्णतामगात् ।

काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालयस्य भूतपूर्व नव्य-व्याकरणविभागाध्यक्षेभ्यः साक्षात्कृतव्याकरणादिशास्त्रेभ्यः श्रीमद्भ्यो निरी-क्षणपतिमिश्रमहोदयेभ्यो हार्दिकं कार्तज्ञ्यं विनिवेदयामि येषां सहयोगेनायं शोध-निबन्धः परिपूर्णतामगात् ।

मम सुहृद्वरेभ्यः श्रीमद्भ्यः केशवप्रपन्नशर्मभ्यो हं हार्दिकं कार्तज्ञ्यं समर्पयामि येषाममूल्येन सहयोगेनायं शोधप्रबन्धः पूर्णतामगच्छत् । अन्ते च, एतस्य शोधनिबन्धस्य टङ्कणकार्यसम्पादकेभ्यः श्रीबल्लभदासशाहमहानुभावेभ्यः स्वकीयं

हार्दिकं विनिवेद्यं विनिवेदयामि, येषां स्वभावजन्यसारल्येनेदं टङ्कणकार्यम-त्यन्तं समीचीनतया परिसमाप्तमिति पतितपावनीं भागीरथीगङ्गां प्रणम्य साम्बशिवपार्वत्योश्च चरणकमलयोः दैनन्दिनं प्रणतिततिं परिसमर्प्य विरमति -

जयप्रकाश त्रिपाठी

## प्रकृतनिबन्धे प्रवृत्तिबीजानि

माननीया मनीषिप्रवराः

जानन्त्येव भवन्तः यद् जानाति, इच्छति, यतते ततः प्रवर्तते इति ज्ञानेच्छा कृतिप्रवृत्तीनां पूर्वपूर्वस्य उत्तरं प्रति हेतुता सर्वत्र प्रख्याततरै-वास्ति । अत एतन्निबन्धलेखने मदीया प्रवृत्तिं प्रतिमम कृतिः तत्र च मत्समवेतेच्छा कारणम् । सा चेच्छा यद्विषयिका स्ति, तद्विषयकमिष्टसाधनताज्ञानं तत्र कारणतायां वहति, इति कृत्वा तादृशेष्टसाधनता ज्ञाने मया बीजानि प्रदर्श्यन्ते। तस्मिंश्च सति प्रवृत्तिबीजानि स्वतः प्रदर्शितानि भविष्यन्ति -

1 – यदा हं तर्कसंग्रहम् अधीयानः आसम् तदा द्रव्यगुणकर्मसामान्यविशेष-समवायाभावाः सप्तपदार्थाः परिचयपथं आगताः, पुनश्च पृथिव्यप्तेजो वायवा-काशकालदिगात्म मनांसि नवद्रव्याणि ज्ञात्वा सुखदुःखान्यतर साक्षात्कारसाधनं मनः इति मनसः स्वरूपं ज्ञातम् । तस्मिन्नेव काले एका जिज्ञासा समजायत यत् सुखायैव सर्वे प्राणिनः चेष्टन्ते, न तु दुःखाय, इति सुखदुःखयोः प्रत्यक्षताकारणीभूतस्य मनसो विषये विशेषतो अध्ययनं विधेयम्, अतश्च मनः शरीरमध्ये क्व तिष्ठति, किमिदं नित्यं वा नित्यं वा इत्यादिकं निश्चेतुं जिज्ञासा समुदिता इति निबन्धलेखने प्रथम बीजं मन्तव्यम् ।

2 – पुनश्च दर्शनाचार्यपरीक्षाप्रदानावसरे श्रीमद्भगवद्गीतायाः अध्ययनं कुर्वता मया -

"चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ।।"

इति श्लोकः पठितः, तदर्थश्चावगतः तदनु सा प्राथमिकी जिज्ञासा सम्पुष्टा अभूत् यत् गुडाकेशो महामनीषी अर्जुनोऽपि मनो निग्रहविषये महदाश्चर्यमभि-व्यनक्ति । अतः सकलशास्त्रदृष्ट्या मनसः स्वरूपं निश्चित्य तद्विषयकः एको निबन्धः लेखनीयः इति द्वितीयो बीजः ।

3 – एकदा दर्शनाचार्यपरीक्षोत्तरणानन्तरं वाराणस्यामेव समाहूतायाम् एकस्यां पण्डितसभायां अहमपि गतवानासम्, तत्र च एकेन विद्वद्वरेण अयं प्रश्नः समुपस्थापितः यत् मृत्युकाले एतस्माद् स्थूलशरीरात् निःसृत्य शरीरान्तरे यत् गच्छति तत्किमिति प्रश्नमिमं श्रुत्वा अपरेण पण्डितवरेण उत्तरितं यत् सूक्ष्मं शरीरं एतस्माद् शरीरात् निर्गत्य गच्छति । सूक्ष्मं च शरीरं ज्ञानेन्द्रियपञ्चकस्य कर्मे-न्द्रियपञ्चकस्य तन्मात्रापञ्चकस्य, मनोबुद्ध्यहंकारत्रितयस्य समष्टिरूपम् । समा-धानमिदं श्रुत्वा पूर्वपक्षिणा विदुषा उक्तं यत् मनसः बुद्धेश्च कीदृशो भेदः, ततः उत्तरपक्षिणा द्वयोः लक्षणपुरस्सरं भेदः निर्वाचितः अग्रे च पुनः न्यायदर्शन-दृष्ट्या मनसः परमाणुरूपत्वे नित्यत्वे च चर्चां प्रसारयता पूर्वपक्षिणा मुक्ति-दशायामपि मनसो विनाशं न भवति इत्युक्तम्, उत्तरपक्षिणा च वेदान्तदर्शन-रीत्या तस्मिन्काले मनसो विनाशः प्रतिपादितः, इदं सर्वं शृण्वता मया निश्चयो विहितः यत् मनस्तत्त्वमाधारीकृत्य दीर्घकायो निबन्धः अवश्यलेखनीयः इति तृतीयं प्रवृत्तिबीजम् ।

५ - अग्रिमे च काले यदा वाराणसेय दशाश्वमेधघट्टस्य शास्त्रार्थमहाविद्यालये दर्शनविभागाध्यक्षपदे नियुक्तो अभवम् तदा एकस्मिन् विद्वत्समाजे मन एव मनुष्याणां कारणं बन्धमोक्षयोः इति विषयमुद्दिश्य भूयसी चर्चा कृता । तदा विचारितमेतद् यत् कस्यचिद् विषयस्य निश्चये तस्यैव तत्र निग्रहानुग्रहादिकं कर्तुं शक्येत, अतः मानवजीवनं सम्प्राप्य जन्ममरणाविच्छेदलक्षणायाः संसृतेः पारम् अवश्यं गन्तव्यं ततः एव परमानन्दावाप्तिः सम्भाव्यते, इति कृत्वा मनसः स्वरूपं यथार्थतया निश्चेतव्यं ततश्च तन्निग्रहणेन उक्तलक्ष्यावाप्तिः कर्तुं शक्यते, अतो मनोविषयकः निबन्धग्रन्थः अवश्यं विरचनीयः एतद्व्याजेनैव सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय विद्यावारिधिउपाधिरपि लभ्या इति चतुर्थबीजम् । इति शम् ॥

---

## प्राक्कथनम्

मनस्तत्त्वस्य विवेचनं भारतीयतात्त्वदर्शनपाश्चात्त्यतात्त्वदर्शन-चिन्तनयोः प्रायः एकं प्रधानमङ्गमस्ति । भारतीयदार्शनिकचिन्तनधारायां केवलं मनो ऽधिकृत्य पार्थक्येन चिन्तनं नोपलभ्यते । पश्चिमायामपि दिशि मनो-विज्ञाननामकस्य शास्त्रस्योत्पत्तिः एकोनविंशतिशताब्द्याः पूर्वं नाभूत् । भारतीयतत्त्वचिन्तनधारायां केवलं बौद्धदर्शनस्य विज्ञानवादनामिकायां शाखायां विज्ञानं वा बुद्धिमेव वा ऽधिकृत्य चिन्तनमभूत् । तथा तत्र "मनोविज्ञान"पदस्य प्रयोगो ऽप्युपलभ्यते ।

यतो हि प्रस्तुतशोधप्रबन्धस्य विषयः "भारतीयदर्शनेषु मनस्तत्त्वम्" इत्यस्ति, अत्र च भारतीयं दर्शनमास्तिकनास्तिकभेदेन द्विधा विभक्तमस्ति तत्रा-स्तिकस्य नास्तिकदर्शनस्य चाभिधेयो नितान्तं विवादास्पदमासीत् । अतः सर्व-प्रथममेतस्य विषयस्य सीम्नि संक्षेपेण विचारो ऽत्यन्तमुपयुक्तं भविष्यति - यत् "आस्तिक" शब्दस्य को ऽर्थः, कतो च "आस्तिकदर्शन" शब्देन कानि कानि दर्शनानि अभिप्रेतानि सन्तीति यत्किञ्चित् सूक्ष्मेक्षिकया विचारः प्रस्तूयते ।

### 1. आस्तिकशब्दस्य व्युत्पत्तिरर्थश्च

व्याकरणस्य सुप्रसिद्ध आचार्यो महर्षिपाणिनिः । यस्य कालः डा० वासुदेवशरणअग्रवालमतानुसारं ई० पूर्वं 480 तः 410 यावदस्ति । यस्य च कालं

मैक्डोनलमहोदयः 500 ई0 पूर्वं स्वीकरोति । स्पेकूनद्वारा "आस्तिक"शब्दस्य व्युत्पत्त्यर्थं पैतर्किमन् स्वल्पे प्रकाशं पातितवान् –

"अस्ति नास्ति दिष्टं मतिः" [4/4/60]

अस्य सूत्रस्य भाष्यं भाषमाण आचार्यकैयटः प्रदीपटीकायां लिखति – "अस्तीत्यस्येति । परलोककर्तृका च सत्ता विवक्षिता । तथैव विषये लोके प्रयोग-दर्शनात् । तेन परो लोकोऽस्तीति मतिर्यस्य स आस्तिकः । तद्विपरीतो नास्तिकः ।

इत्थमाचार्यकैयटस्य "प्रदीप"टीकानुसारमपि परलोकस्य सत्तां स्वीकर्तारः आस्तिकपदसंज्ञामलभन्त, एतद्विपरीतं परलोकसत्तां नङ्गीकर्तारो नास्तिकपदसंज्ञामलभन्त ।

इत्थमेवोपर्युक्तव्याख्यां व्याख्यापयन् वैयाकरणसिद्धान्तकौमुदीकारः श्रीमान् भट्टोजिदीक्षितमहोदयः [16 शताब्द्यां] लिखति –

"अस्ति परलोकः इत्येवं मतिर्यस्य सः
आस्तिकः । नास्ति इति मतिर्यस्य सः नास्तिकः ।"

अर्थात् यः "परलोकोऽस्ति" इत्यङ्गीकरोति स आस्तिकसंज्ञां लभते, यश्च पर-लोकं नाङ्गीकरोति स "नास्तिक"पदसंज्ञां लभते ।

स्मृतिकारो भगवान् मनुः नास्तिकशब्दस्य लक्षणं निम्नप्रकारेण कृतवान् –

"यो वमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः ।[1]
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ।।"

अर्थात् यो द्विजः केवलं हेतुशास्त्राश्रयात् श्रुतिं प्रमाणतया नाङ्गीकरोति सः, शिष्टजनैः सर्वथा बहिष्करणीयः, यतोहि यो वेदं निन्दति स नास्तिको भवति। अनेन स्पष्टं भवति यत् भगवन्मनुबुद्ध्या यो वेदेषु श्रद्दत्ते अपि च यो वेदान् न निन्दति सः "आस्तिक"पदसंज्ञां लभते ।

"शब्दस्तोममहानिधिः" नामके संस्कृतकोशे "आस्तिक"पदस्य व्याख्या इत्थम्प्रकारेण कृता यतो "अस्ति परलोक इति मतिर्यस्य [ठक्] परलोकास्ति त्ववादिनः । अस्तीत्युक्त्यागतो यस्मादास्तिकस्तेन कथ्यते । इति निरुक्तसंज्ञायां: जरत्कारुमुनिर्मुनिः ।[2]

अस्मिन् कोशे "आस्तिक"पदस्यार्थं कुर्वन् लिखति - आस्तिकस्य भावः कर्म वा । वैदिकधर्मे श्रद्धायाम् ।

एभिरुद्धरणैः "आस्तिक"पदस्य व्युत्पत्तौ- [1] परलोकस्य विश्वासः, [2] वैदिकधर्मे श्रद्धायाः समावेशश्च कृतो यतो ।

"वाचस्पत्यम् "बृहत् संस्कृताभिधानम्" इत्येतन्नामके ग्रन्थे "आस्तिक"पदस्यार्थो नेनप्रकारेण कृतो यतो -

अस्ति परलोक इति मतिर्यस्य [ठक्] तथा पूर्वोक्तपरलोके
अस्तीत्युक्ता गतो यस्मात् - - - - - -[3]।

---

1. मनुस्मृतिः - 2/11. 2. शब्दस्तोममहानिधि - पृ० 72.
3. वाचस्पत्यम् बृहत् संस्कृताभिधानम् - पृ० 893 चौखम्बा सं०सी०,1962 संस्क०

इत्थमेव पूर्वोक्तोभयोः कोशयोः "नास्तिक"पदस्यार्थो नेनप्रकारेण कृतो वर्तते ।

नास्ति परलोकस्तत्साधनमदृष्टं तत्साक्षीश्वरो वा इति मतिरस्य [ठन्] । 1- परलोका भाववादिनि, 2- तद् साधना दृष्टाभाववादिनि, 3- तत्साक्षिणईश्वरस्यासत्त्ववादिनि च चार्वाकादौ[1] ।।

अर्थात् यः परलोको नास्ति परलोकस्य च साधनमदृष्टं धर्माधर्मौ वा न भवतः एवं धर्माधर्मयोः साक्षी ईश्वरो पि नास्ति इति मतं स्थापयति, यश्च परलोकस्याभावं ज्ञापयति, परलोकस्य साधनमदृष्टस्याभावं कथयति यश्च तदीय साक्षिभूतस्येश्वरस्य असत्तां घोषयति सः "नास्तिक"पदसंज्ञां लभते । यथा- चार्वाक आदि । नास्तिकता पदस्यार्थः एतेन प्रकारेण कृतो वर्तते -

नास्तिकस्य भावः मिथ्यादृष्टी ।

शब्दस्तोममहानिधौ "नास्तिक्य" पदस्य व्याख्या अनेन प्रकारेण कृता वर्तते -

"नास्तिकस्य भावः कर्म वा, यत्
शास्त्रोक्तेषु फलवत् कर्मसु अफलाबुद्धौ[2] ।"

वाचस्पत्यं नामके कोशे नास्तिकपदस्यार्थोनेन प्रकारेण कृतो वर्तते -

"नास्ति परलोकस्तत्साधनमदृष्टंड तत्साक्षीश्वरो वा इति मतिर्यस्य [ठन्] । 1- परलोकाभाववादिनि, 2- तत्साधनादृष्टा भाववादिनि, 3- तत्साक्षि ईश्वरस्यासत्त्ववादिनि च चार्वाकादौ ।

अस्मिन् कोशे चार्वाकादिपदेन चार्वाक माध्यमिकयोगाचार

---

1/2. शब्दस्तोममहानिधि - पृ0 242.

तान्यास्तिकत्वाधिकरणभेदेन षड् गृह्यन्ते, एतानि षड्दर्शनानि, नास्तिक-पदस्य संज्ञामलभन्त । इत्थमेव "नास्तिक्यपदस्यार्थः नास्तिकस्य भावः (ष्यञ्) इति कथितोऽस्ति । तथा "नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्" इति महर्षिमनुश्लोके स्वमत परिपुष्ट्यर्थं समुद्धृतवान् । तथा "नास्तिकता" पदस्यार्थं निम्नलिखितेन प्रकारेण सूचितवान् – नास्तिकस्य भावः (तल्) मिथ्यादृष्टौ पर-लोकाद्यभावज्ञानस्य मिथ्यात्वात् ।

"अज्ञानात्मको मोहस्तथा धर्मार्थनाशकः ।
तस्मान्नास्तिकता चैव दुराचारश्च जायते ।।"[1]

उपर्युद्धृतकोशार्थेषु परलोकस्यास्तित्वमनङ्गीकुर्वतां दर्शनानां नास्तिकपदस्य संज्ञा-दत्ता वर्तते । महर्षिः मनुः वेदनिन्दकान् देवताकुत्सकांश्चापि "नास्तिक" पदेन व्यवहरति । एतस्मिन्नाधारे ईश्वरस्य सत्तामनङ्गीकुर्वतां चार्वाकबौद्धजैनदर्शना-नामपि नास्तिककोटावेव स्थापयति, किन्तु ईश्वरसत्तामनङ्गीकर्तृत्वात् यदि किमपि दर्शनं नास्तिकपदभाग्भवेत्तदा पूर्वमीमांसासांख्यदर्शनं चापि नास्तिक-पदान्तर्गतमागच्छेत्, यतो हि एतयोर्द्वयोर्दर्शनयोः ईश्वरस्य सत्ताऽनङ्गीकृता वर्तते । अस्मिन्शोधप्रबन्धे परलोक-पुनर्जन्मनोर्विश्वासत एवास्तिकपदाभिधेयो वर्तते। केवलं वेदमेव प्रमाणत्वेनाङ्गीकुर्वताम् आस्तिकपदेन कथनं वैदिकसम्प्रदायिकदृष्टि-र्वर्तते । शब्दशास्त्रस्य परमप्रामाण्यभूतपाणिनिमतानुसारमपि आस्तिकपदाभि-धेयस्य संकेतः उपरि वर्णितानुसारमेव वर्तते, अर्थात् परलोकस्य सत्तास्वीकर्ताजनः तन्मतन्यास्तिकपदभाक् परलोकास्वीकर्ता तन्मतश्च नास्तिकपदभाग्भवति ।

- - - - - - - - - - - - - - - - - - - - - - - - - -

1. महा० शा० – 123 30.

2. "आस्तिकदर्शन" शब्दस्याभिधेयम्

भारतीयदर्शनस्येतिहासकाराः दर्शनानां विभाजनं - [1] आस्तिकदर्शन [2] नास्तिकदर्शनमिति भेदद्वयेन कुर्वन्ति । एतेषां दर्शनानामितिहासकाराः आस्तिकदर्शनानां श्रेणिषु- सांख्य, योग, वैशेषिक, न्याय, पूर्वोत्तरमीमांसेति षड्विधान् स्थापयन्ति । तस्येदं विभाजनं वेदानां प्रामाण्य स्वीकर्तृवैदिकदर्शनान्येवास्तिकदर्शनं पदभाजो भवन्ति । तथा वेदप्रामाण्यमनङ्गीकर्तृपरलोकाविश्वसन्ति दर्शनानि नास्तिकदर्शनं पदेन अङ्गीक्रियन्ते । एतेषां दार्शनिकेतिहासकाराणां मतानुसारं नास्तिकदर्शनेषु चार्वाकजैनबौद्धदर्शनानि भवन्ति ।

प्रस्तुते शोधप्रबन्धे "आस्तिकदर्शन" शब्देन दर्शनेतिहासकाराणां प्रतिपादिताः विभागाः अस्वीकृताः भवन्ति । अत्रास्तिकदर्शनशब्देन तात्पर्यं तैः सर्वैः दर्शनैः वर्तते, यानि पुनर्जन्मनः परलोकस्य च सत्तायाः सिद्धान्तमङ्गीकुर्वन्ति । भवन्तु तानि वेदप्रामाण्यवादीनिः, अथवा न भवन्तु, भवन्तु तानि अनीश्वरवादीनि । तथापि तानि अत्रास्तिकदर्शनश्रेणीषु स्थापितानि सन्ति । अस्तु ।

उक्त प्रकारेण आचार्यपाणिनिमहाभाष्यकारपतञ्जलिप्रभृतिविदुषां मन्तव्यानुसारमत्र दर्शनानां विभाजनं परलोक सत्ता स्वीकृत्यस्वीकृत्याधारेण च कृतमस्ति । दर्शनेतिहासकारमतानुसारं "नास्तिकदर्शनान्तर्गतं यद् बौद्धजैनदर्शनञ्च स्थाप्यते, तदपि तन्मते स्वास्तिकदर्शनेषु अन्तर्भूतं भवति, यद् जैनबौद्धदर्शनयोः पुनर्जन्म परलोकयोश्च सिद्धान्तः स्वीकृतो वर्तते । केवलं चार्वाकदर्शनमेव प्रस्तुतशोधप्रबन्धस्य सीमातो बहिर्भवति, यतो हि एतस्मिन्दर्शने परलोकसत्ता स्वीकृतैः

सर्वथा अभावो वर्तते ।

इत्थञ्च चार्वाकदर्शनमेव प्रस्तुतशोधप्रबन्धे नास्तिकदर्शनरूपेणाङ्गीकृतमस्ति ।

3. "मनस्तत्त्व"पदस्य स्पष्टीकरणम्

शोधप्रबन्धशीर्षके "मनस्" पदमप्रयुज्य "मनस्तत्त्व"पदस्य प्रयोगो विशेषाभिप्रायेण कृतो वर्तते । "तत्त्व"शब्दस्य व्युत्पत्तिः तस्य भावस्तत्त्वम्" इत्थमस्ति । अर्थात् "तत्" शब्देन भावेऽर्थे "त्व" प्रत्ययविधानेन "तत्त्व" शब्दो निष्पद्यते । अतः शोधप्रबन्धे न केवलं मनसः स्वरूपमेव वर्णितं भविष्यति, अपितु मनसः स्वरूप [नैचर] गुणधर्मक्रियाकलापादिमनोवृत्तिषु सर्वेषु तथ्येषु प्रकाशो भविष्यति । अनेनैवाभिप्रायेण "मनस्" इत्यनेन सह "तत्त्व"पदस्यापि प्रयोगः कृतो वर्तते ।

4. शोधप्रबन्धस्य लक्ष्यम्

उक्तप्रकारेण "आस्तिकदर्शन" मनस्तत्त्व" प्रभृतिपदानां स्पष्टीकरणानन्तरमिदानीं शोधप्रबन्धलक्ष्यमधिकृत्यलेखितः कर्तव्यो भवति । एतस्य शोधप्रबन्धस्य मुख्यं लक्ष्यमिदमस्ति यत् मनस्तत्त्वविषयस्य स्वतन्त्रं यथासम्भवं सांगोपांगतया निरूपणं कृतं भवेत् । इदानीं यावत् पूर्वपश्चिमेषु सर्वेषु दर्शनेषु "मनस्तत्त्वस्य निरूपणमेकं गौणरूपेणकृतमस्ति । मनस्तत्त्वस्य गौणस्थानप्राप्तिकारणात् मनसि तथा तदीये धर्मे क्रियाकलापादिषु च पर्याप्तं ध्यानं नैव प्रदत्तमस्ति ।

2 - यद्यपि पाश्चात्त्यदर्शनानां चिन्तनधारायां इदानीं मनोविज्ञानमेकं स्वतन्त्रमस्तित्वं प्राप्तम् । तेन च दर्शनस्य चिन्तनक्षेत्रात् पृथग्भूय एकं नूतनं विज्ञानस्य स्वरूपं धारितमस्ति, तथापि समन्वयवादिभारतीयदार्शनिकचिन्तनधारायामित्त्थम्भूतपृथक्करणस्य कुतो किमपि स्थानं नास्ति । एतस्मिन् समीक्षात्मके तुलनात्मके चाध्ययने एतस्य दृष्टिकोणस्य औचित्यानौचित्ययोरपि प्रकाशपातनं प्रस्तुतस्य शोधप्रबन्धस्य लक्ष्यमस्ति ।

3 - संक्षेपेण मनोविषये समुपलब्धां सामग्रीमधिकृत्यसंकलनकरणमेतस्मिन् ऐतिहासिके परिप्रेक्ष्ये मनस्तत्त्वस्य तदीयमहत्त्वस्य च स्वीकृतेराकलनकरणमपि प्रस्तुतशोधप्रबन्धस्य मुख्यं लक्ष्यमस्ति । अनेन प्रकारेण मनोविज्ञानस्य दृष्ट्या मनस्तत्त्वस्य सांगोपांगनिरूपणं मानवजीवने मनसः सर्वोत्कृष्टं महत्त्वं तथा मनसो विविधभूमिषु समुपलब्धानामवस्थानां निरूपणं भविष्यति । शोधप्रबन्धस्येदमप्येकमुद्देश्यं वर्तते ।

४ - मनस उत्पत्तिं विकासस्य साधनं सम्भावनाश्चाधिकृत्य संकलनकरणम्, मनस अतिमनसश्च (सुप्रामाइन्ड) स्वरूपस्य निरूपणम्, मानवजीवनस्य विशालकार्यक्षेत्रे मनस्तत्त्वविकासस्योपयोगिता प्रकाशनम्, मनसश्च प्रयोगद्वारा इहलोके परलोके च प्राप्तव्यानां फलानामपि स्पष्टकरणमेतस्य शोधप्रबन्धस्य लक्ष्यमस्ति ।

अन्यच्च- भावनाकल्पनापक्षो (इमोशनल साईड) बुद्धिपक्षश्च (इंटलेक्चुअल साईड) एतस्य शोधप्रबन्धस्यान्तर्गतो विषयः समाविष्टो भविष्यति, यतश्च मनसः सांगोपांगनिरूपणं सम्भवेत् ।

पूर्वं प्रतिपादितमस्ति यत् प्रस्तुते शोधप्रबन्धे यत्रापयं ज्ञातव्यं भविष्यति, तत्र पाश्चात्त्यमनोविज्ञानद्वारा स्वीकृतैः मनोविषयकैः सिद्धान्तै-रपि उक्तास्तिकदर्शनद्वारा स्वीकृतमनोविषयकसिद्धान्तानां तुलनासंक्षेपेण प्रस्तुताऽस्ति । तुलनात्मकसमीक्षात्मकपदाभ्यामेष एव संकेतः कृतो वर्तते । इत्थञ्च पारस्परिकमनोविषयकसिद्धान्तानां तुलनया अयं शोधप्रबन्धः मनो-विज्ञानस्य क्षेत्रे नूतनतमानां विचाराणामुपलब्धीनाञ्च समावेशं करिष्यति, अपि च केवलरूढिवादिप्राचीनमनस्तत्त्वचिन्तनधारातः उन्मुक्तो भविष्यति ।

शोधप्रबन्धे विषयस्य स्पष्टता करणाय सन्दर्भस्य सुस्पष्टता-करणार्थं कुत्र कुत्रचित् कतिपयानामंशानामनेकवारमुल्लेखकरणमावश्यकतया आगतम्, यत्पुनरावृत्तिर्नोच्यते, यतो हि एतद्विना पूर्वं कथितमुद्देश्यं पूर्णतां नैव गच्छेत् ।

<u>शोधप्रबन्धस्य संक्षिप्ता पृष्ठभूमिः</u>

अयं शोधप्रबन्धः अष्टस्वध्यायेषु परिसमाप्तो भवति, अध्यायानां प्रारम्भात्पूर्वं विषयप्रवेशान्तर्गतं "मनसो महत्त्वं" ज्ञापितमस्ति । एतस्मिन् भूमिके मनस्तत्त्वविषये सन्देहप्रयोजने, मनस्तत्त्वस्य सत्तायाः स्वीकृतिः, मनसः करणता, ज्ञानं तदीयासाधारणकारणं मनः, आस्तिकदर्शनेषु प्रमाणानां वर्गीकरणस्य महत्त्वम्, अनुभूतिः प्रमाणञ्च, ज्ञानविज्ञानयोरन्तरम्, मनोविज्ञानस्य स्वरूपम्, मनोविज्ञान-स्याध्ययने कालक्रमस्य महत्त्वमित्यादि विषयेषु विचारोऽभिव्यक्तो वर्तते ।

प्रथमाध्याये - मनोविषयकसामग्रीणां वैदिकवाङ्मयस्य, संहिता-नामुपनिषदां पाश्चात्त्यदर्शनस्य च समीक्षात्मकं तुलनात्मकञ्चाध्ययनं कृतमस्ति । तत्पश्चात् आस्तिकदर्शनेषु मनोविषयकचिन्तनस्य च प्रयोजनं ज्ञापितमस्ति ।

द्वितीये तृतीयेऽध्याये च – मनसः स्वरूपम्, आस्तिकदर्शनेषु पाश्चात्यदर्शनेषु च किमस्ति ? एतस्य विषयस्य विवेचना कृता वर्तते । तत्पश्चात् मनस्तत्त्वलक्षणानां पारस्परिकी समीक्षा कृता वर्तते । अन्तःकरणस्यान्नमयता तथा मनसो निकृष्टं स्वरूपं ज्ञापयता मनसः आत्मना शरीरेण जगता च सहसम्बन्धोऽपि निरूपितो वर्तते ।

चतुर्थाध्याये – मनोबुद्धिचित्ताहंकाराणामास्तिकदर्शनाधारेण निरूपणमस्ति ।

पञ्चमाध्याये – मनसः क्षमतायाः प्रकाराणाञ्चास्तिकदर्शनेषु विवेचनं विवेचयत् पाश्चात्यदर्शनैः साम्यं वैषम्यमपि प्रदर्शितमस्ति ।

षष्ठाध्याये – प्रत्यक्षादिप्रमाणेषु मनसो महत्त्वं प्रतिपादयता स्मृतौ, प्रमायामप्रमाज्ञाने च मनसः स्थानस्यापि समीक्षणं कृतमस्ति ।

सप्तमाध्याये – भक्तिध्यानज्ञानेषु मनसः स्थानस्य गवेषणा कृता वर्तते । मनोऽतिमनसोः जीवनस्य विभिन्नाः अवस्थाः, मुक्तेस्तथाजीवन्मुक्तेरवस्थायां मनसः सत्ता, कार्याणां प्रतिपादनमपि एतस्मिन्नेवाध्याये कृतमस्ति ।

अष्टमेऽध्याये – विशिष्टाद्वैतवेदान्तानुसारं मनसः स्वरूपं प्रतिपादितं वर्तते ।

अन्ते – चोपसंहारान्तर्गतः शोधकार्यस्य निष्कर्षः प्रदत्तो वर्तते ।

---

## विषयानुक्रम:

पृष्ठ-संख्या

द्वितीयोऽध्यायः - पृ० ३८-११४

तृतीयोऽध्याय: - पृ० ११५-१६७

सप्तमोऽध्यायः - पृ० २२४-२५४

S
SSS
SSSSS
SSS
S

## मनसो महत्त्वम्

प्राचीनवैदिककालादद्ययावत् संस्कृतवाङ्मये मनस्तदीय कार्यकलापानां वर्णनं सर्वत्राप्यविच्छिन्नरूपेणोपलभ्यते, यद्वर्णनं तदीयं महत्त्वं समादधाति । वस्तुतस्तु मनो विना नैव कश्चन मानवः किमपि कार्यं कर्तुं शक्यति, नवा मननशीलः, मानवः मनुष्यपदवीं लब्धुं शक्यति, शुक्लयजुर्वेदे चतुस्त्रिंशत्तमाध्यायस्य प्रथमतः षण्मन्त्राणां देवता मन एव वर्तते । मनो विषयकैतादृशमालोकमयं सुन्दरं वर्णनं विश्वस्य साहित्ये दुर्लभप्रायमेवावलोक्यते । अस्याध्यायस्य तृतीयस्मिन् मन्त्रे स्पष्टमेवोक्तं वर्तते यत् मन एव विशेषप्रतिपत्तिरूपा प्रज्ञा वर्तते । मन एव सामान्यप्रतिपत्ति [ज्ञान] रूपं चेतोऽपि वर्तते । मन एव धृतिः तदेवान्तर्ज्योतिस्तदेव च सर्वेन्द्रियाणां प्रकाशकमपि भवति । मनो-मृतस्वरूपम्, अमरपदाभिस्वरूपम् आत्मा अपि वर्तते । मनो विना किमपि बाह्यम् आन्तरिकं वा कर्म मनुष्यैः नैव कर्तुं शक्यते । मनो विना चिन्तनमपि नैव भवितुमर्हति, मानसिकीं प्रेरणां विना शरीरस्य बाह्याश्चेष्टा अपि नैव भवितुमर्हन्ति । शुक्लयजुर्वेदस्य निम्नलिखिता मन्त्रा अतीवसुन्दरैः शब्दैः वास्तविकं तथ्यं प्रतिपादयन्ति -

"यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ।।"[1]

---

1. शुक्लयजुर्वेद - 34/3.

उपर्युक्ताः मनसो विविधाः पर्यायवाचकाः शब्दाः स्वीयं विशिष्ट-विशिष्ट अर्थं स्थापयन्ति, यतोहि एकस्य पदस्यानेकार्थस्वीकारो[1] नैव शास्त्रसम्मतो भवति, अत समभूतानि पदानि यानि एकार्थवाचकानि भवन्ति, तन्नूनमेतानि विभिन्नप्रवृत्तिनिमित्ताधारेण प्रयुक्तानि पृथक् पृथक् स्वतन्त्राणि पदानि भवन्ति, यद्यपि च समाधानतोऽयं तादृशं प्रतीतं भवेत् । कोषगतानि पर्यायवाचकान्यपि पदानि स्वकीय स्व-स्वनिर्वचन (प्रकृति + प्रत्यय) कारणात् भिन्नभिन्नार्थयुक्तधातुभिः निष्पन्नानि भवन्ति तथा च धातुगतार्थस्य वैशिष्ट्यकारणात् पर्यायवाचित्वेऽपि पृथक्पृथगर्थाभिव्यञ्जकानि पदानि स्वीकुर्युः, तदैव तेषां सार्थकताऽपि सिद्ध्येत् । संस्कृते समुपलभ्यमानमिदं पदाभिव्यक्तिवैशिष्ट्यमांग्लप्रभृति पाश्चात्यभाषासु नैवोपलभ्यन्ते ।

अमरकोश इव बृहदारण्यकोपनिषद्यपि काम, संकल्प, विचिकित्सा, श्रद्धा, अश्रद्धा इत्यादयोऽपि शब्दाः मनःपदाभिधेयाः भवन्ति । तथापि शब्दानां धातुगतार्थस्य वैशिष्ट्यं प्रत्येकस्मिन् पदे निहितं भवति । अतः तेषां पदानां मनसः पर्यायवाचित्वस्वीकारेऽपि श्रुतिः प्रत्येकपदस्य विशिष्टार्थं नैव निराकरोति =

"मनसा ह्येव पश्यति मनसा शृणोति । कामः संकल्पो-विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव[2] ।"

- - - - - - - - - - - - - - - - - - - - - - - -

1. "एकस्य शब्दस्यानेकार्थत्वानुपपत्तेः" - शां० भा० तत्त्वदीपनटीका.
2. बृहदारण्यक उपनिषद् - 5/3.

निगदित स्पष्टमेवोक्तं वर्तते -

"पुरुषस्य कर्तृत्वभोक्तृत्व सुखदुःखादिलक्षणः चित्तधर्मः[1] क्लेशरूपत्वाद् बन्धो भवति । तन्निरोधनं जीवन्मुक्तिः ।"

एवम्भूतस्य महत्त्वशालिनः मनस्तत्त्वस्य सांगोपांगं विवेचनं विविधविधिभिरेव एतस्मिन्नेवोपग्रन्थे प्रयासः कृतो वर्तते । मनस्तत्त्वस्य सम्यङ् निरूपणेन केन प्रकारेण मानवस्य समस्तसमस्यानां समाधानम्, यदि तल्लौकिकं पारलौकिकं वा भवेत्, सम्भाव्यते एतस्मिन्नेवोपग्रन्थे प्रदर्शितं भविष्यति । सम्पूर्णज्ञानविज्ञानोद्भवविकासस्य च मूले मनो विराजमानं भवति ।

संक्षेपेणाप्यसौ वैतादा एतद्वक्तुं शक्यते यद्विविधप्रकारेण उत्पद्यमानाः समस्तसमस्याः तदीयं समाधानञ्च सर्वं मन आश्रितमेव भवति ।

मनो विषये "प्राचीनभारतीय मनोविद्या" नामकांग्लग्रन्थस्य प्रणेतॄणां श्रीदिनेशचन्द्रभट्टाचार्यशास्त्रिमहोदयानां निम्नलिखितं कथनं मनसः महत्तां सम्यक् प्रकाशयति ।

यद्यपि मनसः आत्मनो ज्ञानादिकर्माणि करणस्वरूपमुक्तं वर्तते तथापि अस्माकं जीवनस्य सुख-दुःख, पाप-पुण्य, शुभाशुभ, क्षति-वृद्धि, बन्धन-मोक्षपर्यन्तं सर्वमपि मनोमूलकमेव भवतीति प्रतिपादयितुमलम्यते । अनेनास्माकं जीवने मनस एव प्राधान्यमधिकतया वर्तते । एतस्य मनसोऽथवा अन्तःकरणस्य स्वरूपम्, धर्मव्यापारयोश्च स्वरूपं सम्यक्प्रकारेणावगते सति तेषां सर्वेषां यथा-

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. मुक्तिकोपनिषद् - 2/1.

योग्यविकलनियन्त्रणाभ्यां धर्मार्थकाममोक्षाख्येति चतुर्णां पुरुषार्थानां साधने यदा मनः चतुरं भवति तदा पुरुषार्थस्य सम्पादनस्य सामर्थ्येऽपि वृद्धि-र्भवति । पुनश्च मनः स्वभावधर्माङ्गाते सति अन्यव्यक्तेरपि मनोभावं मनो-गतमाशयं ज्ञातुं शक्यते येन तेषु तेषु यथायोग्यव्यवहारः तथा व्यक्ति-सम्बन्धप्रमापणानामपि विस्तारः सम्भाव्यते, एवमेवार्थकामादीनि पुरुषार्थ-साधनान्यपि अनायासेन साध्यानि भवन्ति[1] ।

मनस्तत्त्वविषये सन्देहः प्रयोजनञ्च -

जीवने मनसो महत्त्वस्वीकारेऽपि स्वाभाविकोऽयं प्रश्नः समु-त्तिष्ठति यदेतस्य मनस्तत्त्वस्य निरूपणं प्रस्तुते शोधप्रबन्धे प्रस्तूयते किं तन्मनः प्रसिद्धम्, अप्रसिद्धं वा ? यतोऽत्र कश्चन सन्देहः अथवा न ? मनसः स्वरूपस्य प्रतिपादनेच्छायाः मूले किं प्रयोजनम् ? यतो हि यावत्पर्यन्तं कस्मिन्नपि विषये कश्चन सन्देहो न भवेत् अथवा तस्य विषयनिरूपणस्य किमपि प्रयोजनं न भवेत् तावत्पर्यन्तं मननशीलव्यक्तिः प्रतिपित्सां नैव करोति । यथाचार्य-वाचस्पतिमिश्रः ब्रह्मसूत्रशांकरभाष्यटीकाभामती प्रारम्भे कथयति -

"यद सन्दिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरः,
यथा समनस्केन्द्रियार्थसन्निकृष्टः स्फीतालोकमध्यवर्ती घटः करटदन्ता वा[2] ।"

---

1. प्राचीन भारतीय मनोविद्या (बंगलाग्रन्थ) श्री दिनेशचन्द्र भट्टाचार्य कृत भूमिका - पृ0 3-4.
2. ब्रह्मसूत्रशांकरभाष्य भामती - पृ0 1/1/1.

अर्थात् यद् वस्तु असन्दिग्धं सन्देहरहितं भवति अथवा यस्य किमपि प्रयोजनं नास्ति प्रेक्षावान् पुरुषो नैव प्रतिपिपादयिषति । यथोज्ज्वले प्रकाशे विद्यमानो घटः येन मम इन्द्रिययोः सन्निकर्षो भवत् असन्दिग्धं वस्तु भवति तस्य घटस्य विषये कस्यापि सन्देहो नैव जायते अत एव पुरोघटः कस्यापि बुद्धिगतः पुरुषस्य प्रतिपिपादयिषायाः विषयो न भवति । एवमेव काकदन्ताः भवन्ति वा नेति ? यद्ययं विषयो निष्प्रयोजनो भवति तदा सः पुरुषः काकदन्ता प्रतिपादने नैव कदापि प्रवर्तते ।

अतः एतस्मिन्शोधप्रबन्धेऽपि मनस्तत्त्वस्य विषये सन्देहप्रयोजनयोर्जातयोः तयोरेवायं विषयः प्रतिपित्सा विषयो भवितुमर्हति नान्यथा ।

<u>मनसः सन्दिग्धता</u>

मनसो विषये विभिन्नदार्शनिकानां विभिन्नानि मतानि सन्ति। कश्चन शरीरात्पृथक् मनस्तत्त्वं स्वीकरोति यतोहि मनः प्रत्यक्षज्ञानस्य विषयो न न भवति । पाश्चात्याः भौतिकवादिनो दार्शनिकाः भारतस्य चार्वाकशिरोमणयश्च मनस्तत्त्वं नाङ्गीकुर्वन्ति । चार्वाकस्य मते मनः पृथिवीजलतेजोवाय्वादि चतुर्भिः पृथक् कश्चन पदार्थो भवितुं नार्हति । चार्वाकस्य मते मन्यते या चेतना अवलोक्यते साऽपि एषां चतुर्णां भूतानां परिणाममात्र एव भवति । यथा यथोऽवस्था विशेषे तत्र मदशक्तिरुत्पद्यते तत्र च निर्मितं मद्यं समुत्पद्यते तथैवेदमपि एषां चतुर्णां भूतानां विशिष्टः परिणाम एव चेतना भवति ।

न्यायवैशेषिकाः मनः जडत्वमणुपरिमाणत्वञ्च प्रतिपादयन्ति। सांख्ययोगौ मनसः परिमाणं विभुत्वमङ्गीकुरुतः । वेदान्तिनः मनसोऽन्तःकरणस्य वा मध्यमपरिमाणत्वं स्वीकुर्वन्ति । विज्ञानवादिनो बौद्धाः विज्ञानमात्रमेव [बुद्धिमेव] एकमात्रं तत्त्वं स्वीकुर्वन्ति । इत्थञ्च मनो विषये बहुप्रकारकाः सन्देहाः दार्शनिकचिन्तकेषु वर्तमानाः सन्ति । पूर्वोक्तान् सर्वानपि सन्देहान् विनिवृत्य मनस्तत्त्वस्य यथार्थस्वरूपनिरूपणेन मनस्तत्त्वप्रतिपादनस्यावश्यकता भवति । यतो हि एकस्मिन् वस्तुनि इत्थं प्रकारकाः नानाविकल्पाः नैवयुक्तिमत्तामधिरोहन्ति ।

## १. <u>मनस्तत्त्वविवेचनस्य प्रयोजनम्</u>

काकदन्तस्य परीक्षायथा निष्फलास्ति तथा मनस्तत्त्वस्य निरूपणं निष्प्रयोजनमपि नास्ति । ज्ञानविज्ञानस्य सिद्ध्यर्थं सम्यक् चिन्तनद्वारा शाश्वतसुखाय दुःखनिवृत्त्या दार्शनिकलक्ष्य प्राप्त्यर्थं मनस्तत्त्वस्य निरूपणं सप्रयोजनकं निरूपणं भवितुमर्हति । एतन्निरूपणं निष्प्रयोजनं निरर्थकञ्च नैव भवितुमर्हति ।

इदानीमयं प्रश्नः जागरूको भवति यन्मनस्तादृशं स्वरूपञ्च किं प्रसिद्धोऽप्रसिद्धो वा ? यदि मनः एतस्य स्वरूपं लोकप्रसिद्धमेव भवति तदा तस्य निरूपणस्य नैव कापि आवश्यकता प्रतिभाति । यतो हि प्रसिद्धस्य वस्तुनो निरूपणं केवलं पिष्टपेषणमात्रमेव भविष्यति । यदि मनः सर्वथा अप्रसिद्धं वस्तु भवति तदा सर्वथा अप्रसिद्धस्य निरूपणमपि नैव सम्भावितम् । एतस्यैव समाधानं कर

अस्ति यल्लोके यद्यपि मनः प्रायः सामान्यत्वेन प्रसिद्धम् अस्ति किन्तु तदीय विशिष्टस्वरूपस्य विषये सन्देहकारणात् तस्य यथार्थस्वरूपस्य निश्चितत्वेन तदीय- विशेषज्ञाता स्वाभाविकैव वर्तते । अत एव मनस्तत्त्वस्य विश्लेषणमपि प्रयासो भवति अतोऽत्रापि अध्ययनस्य विषयो निर्मितो वर्तते ।

3. <u>मनस्तत्त्वस्वतन्त्रतास्वीकृति हेतुः</u>

मानवा रत्नगर्भायां वसुन्धरायां जन्मग्रहणात्परमेव संसारेण सह स्वकीयज्ञानेन्द्रियैः स्वकीयं सम्बन्धं स्थापयन्ति । "शिशूनां मनः स्वच्छपटलमिव भवति स जन्मना नैव कमपि संस्कारं आनयति" इति पाश्चात्त्यमनोवैज्ञानि- कानां मान्यतायाः इदं कथनं नैव युक्तिसंगतं प्रतिभाति, यतोहि अवलोक्यते यद् कतिपयनवजातशिशवः मातुः स्तनं मुखे न्यस्तान्तरमपि स्तनाद् दुग्धनिः- सारणार्थं नैव प्रयतन्ते, यदा च कतिपयनवजातशिशवः मुखेस्तनादानात्परमेव दुग्धादाने समर्थाः भवन्ति । कतिपयशिशूनां क्रन्दनहस्तपादादिसंचालनेन क्रोधादीनां ज्ञानं जायते । यदा च कतिपयशिशवः अंगाकुञ्चनक्रियान्ताः अत्यन्तप्रसन्नशीलाश्चानुभूयन्ते । "सर्वेऽपि शिशवः स्वच्छपटल इव भवन्ति यदि च तेषु जन्मगतसंस्काराणां भेदोऽपि नास्ति" इति पाश्चात्त्यमनोवैज्ञानिकाना- मिदं कथनं न युक्तिसंगतं प्रतीयते यदि च शिशूनां पारस्परिको भेदो न अभवत्तदा सर्वेषां शिशूनां व्यवहाराः शारीरिकचेष्टाश्चैकेनैव प्रकारेण भवितव्यमासीत् किन्तु यथा योगरिप्रतिपादितमपि यद् भिन्न-भिन्नशारीरिकचेष्टासु भेदो जायते अतस्तेषां चेष्टाद्वारा तस्य मनसः सत्तायाः अनुमानमपि कर्तुं शक्यते चक्षुरादीन्द्रियेषु शरीरेषु चानेकप्रकारकचेष्टानां सूक्ष्मप्रेरकतत्त्वमस्ति । मानवस्य

इत्थं कुर्वन्ति -

"साक्षात्कारे सुखादीनां करणं मन उच्यते"

अर्थात् सुखादीनां साक्षात्कारे यदन्तःकरणं भवति तदेव नाम मन इति भवति । एतस्यानुमानप्रक्रिया चेत्थम् - सुखसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवत् इत्यनुमानेन मनसः करणत्वसिद्धिः ।

अर्थात् सुखस्य साक्षात्कारः केनापि करणेनैव भवितुमर्हति । यतोहि एतस्य सुखस्य साक्षात्कारः रूपादिचाक्षुषविषयस्य साक्षात्कार इव भवति । एतेनानुमानेन मनसः करणत्वस्य सिद्धिर्जायते । अत्रायं प्रश्नो भवितुमर्हेत् यत् सुखस्य साक्षात्कारः दुःखस्य साक्षात्कारः इत्याद्यनेकप्रकारकाः साक्षात्काराः भवन्ति तदा प्रत्येकप्रकारकस्य साक्षात्कारस्य कृते पृथक् पृथगन्तः-करणानि कथं नाङ्गीकरणीयानि ? एतस्योत्तरमेव समाधानं भवति यत् लाघवस्य दृष्ट्या यदा सुखदुःखादिसकलसाक्षात्काराणामेकेनैव करणेन कार्यं सिद्धं भवितुं शक्यते तदा अनेक करणानां कल्पना गौरवग्रस्तत्वाद् व्यर्था । एवमेव नाने-न्द्रियैस्सह बाह्यविषयस्य सन्निकर्षे सत्येऽपि येन करणेनार्थाद्ज्ञानकारण-कारणद्वारा मानवानामेतेषां विषयाणां ज्ञानं भवति तदा तस्य नाम अन्तः-करणं मन इति प्रोच्यते ।

मानवस्य स्वप्नानुभूति, क्रोध, कामाद्यनुभूतीनां व्याख्या-नार्थमपि मनसः सत्ता आवश्यकत्वेन स्वीकरणीया भवति । एतस्यान्तः-करणस्य शरीरस्य च पारस्परिकः सम्बन्धः को वा भवति ? इत्यग्रे निरू-प्यते । गौतमप्रणीतन्यायसूत्रेऽपि मनसः सत्तायाः सिद्धिः इत्थम्प्रकारेण

निरूपयति -

"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" [1/1/16]

अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्तीति युगपच्च खलु घ्राणादीनां गन्धादीनां च संनिकर्षेषु सत्सु युगपद् ज्ञानानि नोत्पद्यन्ते तेनानुमीयते अस्ति तत्तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि यस्या-संनिधेर्नोत्पद्यते ज्ञानम्, संनिधेश्चोत्पद्यत इति । मनः संयोगानपेक्षस्य ही-न्द्रियार्थसंनिकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति ।

अर्थात् स्मृतिकल्पनादिज्ञानानि बाह्येन्द्रियद्वारा नोत्पद्यन्ते । अतस्तदर्थं कस्याप्यन्यस्यकरणस्यावश्यकता अस्ति । नासिकादीन्द्रियाणां गन्धादिविषयैः सहैकस्मिन्नेवकाले सन्निकर्षसत्त्वेऽपि तस्यैकस्मिन्नेव काले ज्ञानं न भवति । अनेनैतदनुमीयते यत् तत्तदिन्द्रियैः सह संयोगसंस्थापकः किञ्चिदन्य-त्सहकारिसाधनमस्ति यत् सर्वव्यापकं नास्ति । यस्य सम्बन्धाभावेन गन्धादि-ज्ञानं नोत्पद्यते अपि च यस्य सन्निकर्षेण गन्धादिज्ञानमात्मनि समुत्पद्यते । यदीन्द्रियवस्तुनोः सन्निकर्षे मनः संयोगस्यापेक्षा नाङ्गीक्रियेत, तदा गन्धा-दिविषयाणां ज्ञानमेकदैवोत्पन्नं भवितव्यम्, किन्तु तेषां सर्वेषां युगपज्ज्ञानं नोत्पद्यते येन मनसोऽनुमानं जायते ।

---

1. न्यायसूत्राणि - वात्स्यायन-भाष्य - उपोद्घात.

<u>ज्ञानं तदसाधारणं कारणमर्थात् करणम्</u>

दार्शनिकचिन्तनस्य मूले मानवस्य बौद्धिकी चेतनाकार्यं करोति । मानवः विश्वस्य नानाविधैः सह स्वज्ञानेन्द्रियैः अन्तःकरणद्वारा च सम्बन्धं स्थापयति, येन विश्वस्य वस्तूनां ज्ञानं भवति । तच्चेदं ज्ञानं प्रकार-द्वयेन भवति-1.यथार्थानुभवः, 2. स्मरणात्मकं ज्ञानञ्च ।

यथार्थानुभव एव प्रमाशब्दवाच्यो भवति । पञ्चज्ञानेन्द्रियाणि मनश्च प्रमाया उत्पादकत्वादसाधारणं कारणमर्थात् करणमपि तदेवोच्यते । अत एव प्रमाकरणं प्रमाणमित्युच्यते । मानवप्रमाणैरिदं स्वतर्कशक्तिसाहाय्येन स्वकार्य-ज्ञानं परीक्षते । यदि मानवस्य ज्ञानं प्रमाणस्य निकषायमाणतया सम्यग्रूपेण न सिध्यति तदा तज्ज्ञानमयथार्थज्ञानपदेन व्यपदिश्यते । अत एव दर्शनस्य विषये "तर्कप्रमाणाभ्यां वस्तुसिद्धिः" इति कथ्यते । अर्थात् व्यवहारे जगति तर्कप्रमाणा-भ्यामेव वस्तुनः सिद्धिर्भवति । न्यायदर्शने उक्तमपि "प्रमाणतोऽर्थ प्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम् । प्रमाणमन्तरेण नार्थप्रतिपत्तिः । नार्थप्रतिपत्ति-मन्तरेण प्रवृत्तिसामर्थ्यम् । प्रमाणेन खलु अयं ज्ञाताऽर्थमुपलभ्य तमर्थमभी-प्सति जिहासति वा[1] ।"

अर्थात् प्रमाणेन वस्तुनो ज्ञाने जाते सति यदा प्रवृत्तिः सफला भवति तदा प्रमाणं सार्थकं भवति । प्रमाणं विना वस्तुज्ञानं नैव सिध्यति ।

---

1. गौतमप्रणीत न्यायसूत्राणि - 1/1/16.

यज्ज्ञानं विना च समर्थ [सफल] प्रवृत्तिर्नैव जायते । अर्थात् फलेन सह प्रवृत्ति-सम्बन्धोऽपि नैव जायते ।

5. आस्तिकदर्शनेषु प्रमाणानां वर्गीकरणस्य महत्त्वम्

विश्वस्य सम्पूर्णदार्शनिकचिन्तनेषु यथार्थज्ञानप्राप्त्यर्थं प्रमाणानां स्वीकार आवश्यकः । प्रमा अर्थात् यथार्थज्ञानस्यासाधारणकारणस्य नाम प्रमाणमित्युच्यते; किन्तु प्रमाणानां संख्याविषये विभिन्नदार्शनिकसम्प्रदायेषु महान् मतभेदो वर्तते । चार्वाकदर्शनं केवलमेकमेव प्रत्यक्षं प्रमाणमङ्गीकरोति । बौद्धदर्शनं प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमेवाङ्गीकरोति । न्यायदर्शनं प्रत्यक्षा-नुमानोपमानशब्देति चत्वारि प्रमाणानि स्वीकरोति । मीमांसादर्शनस्य भाट्टसम्प्रदाये षट् प्रमाणानि स्वीकृतानि सन्ति । यथा- प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः, आगमो वा, अर्थापत्तिः अनुपलब्धिश्च । वेदान्तदर्शने "व्यवहारे भाट्टनयः" इत्युक्तदिशा भाट्टसम्प्रदायानुसारं स्वीकृतानि षट् प्रमाणान्येव सन्ति ।

पाश्चात्यदार्शनिकचिन्तनेऽपि प्रत्यक्षानुमानादिप्रमाणेषु अनेकानि प्रमाणानि स्वीकृतानि सन्ति । किन्तु तत्र प्रत्येके दार्शनिकाः स्व-चिन्तनारम्भात्पूर्वं नैव कदाचित्कथयन्ति यत्कानि कानि कतिपयानि च प्रमाणानि स्वीकुर्वन्ति । प्रमाणानामेतादृग्विभाजनाभावात् तदीयचिन्तन-धारासु अस्पष्टता सहजतया वर्तते । न्यायदर्शने चत्वारि प्रमाणानि स्वी-कृतानि सन्ति यैः प्रमात्मकं ज्ञानं यथार्थज्ञानं वा प्राप्तुं शक्यते । प्रमाणाना-

भेदादुपचतुर्णां विभागानां विषये पाश्चात्यो विद्वान् के मैक्समूलरः कथयति यद् "किमपि समीचीनमभविष्यद् यदि सर्वेषां दर्शनानां पूर्वस्मिन् अध्याये प्रमाणविषयको विभागः अस्वीकरिष्यत्" ।

उपर्युद्धरणेः भारतीयतत्त्वचिन्तनेषु सर्वप्रथमं प्रमाणानां विभाजनस्य महत्त्वं स्पष्टं भवति । पाश्चात्यतत्त्वचिन्तने सर्वप्रथमं स्वरूपेण प्रमाणविभाजनस्य प्रमाणानां स्वीकृत्यभावकारणात् बहुप्रकारकाः भ्रान्तधारणाः विरोधि-चिन्तनानि च प्रचलितानि सन्ति ।

मानवस्य पार्श्वे साधनद्वयमेव वर्तते येन सम्पूर्णेऽपि विश्वस्मिन् सः सम्पूर्णान् क्रियाकलापान् करोति- 1. मानवस्य बुद्धिबलः, 2. रागयुक्ता मानवस्य भावनापक्षो हृदयपक्षो वा । दार्शनिकचिन्तनं मानवस्य बुद्ध्याधारितं भवति । अतोऽयं विचारमार्गो वर्तते । मानवस्य बुद्धिः तदीयज्ञानेन विज्ञानेन च विकसति । अत एव श्रीमद्भगवद्गीतायामुक्तम्- "ज्ञानविज्ञानतृप्तात्मा" । ज्ञानसामान्यातिरिक्तं यदा मानवस्य मनसि विश्वस्य वस्तूनि प्रति सहजा जिज्ञासा उत्पद्यते तदा सः वस्तूनां स्वरूपोत्पत्तिस्थितिलयादि विभिन्नविषयाणां चिन्तनं प्रारभतेऽपि च सः स्वसंश्लेषणात्मक एवं विश्लेषणात्मक बुद्धि-द्वारा तत्त्वज्ञाने प्रवर्तते । एतादृग्विधजिज्ञासानां [विज्ञाना]धारेणैव सकलानां दर्शनानां [विचारशास्त्राणां] विज्ञानस्य समुद्भवो भवति । स्वेन्द्रियशक्ती

---

1. "इण्डियन फिलासफि, न्याय एण्ड वैशेषिक"
   - फ्रेड्रिक मैक्स मूलर, पृ० 13.

यदा सः वैज्ञानिकयन्त्राणामुपकरणानाञ्च साहाय्यमपि गृह्णाति तदा सः प्रत्यक्षप्रमाणानुमानप्रमाणयोराधारेण च स्वपूर्वाभ्यासाद्युपलब्धस्य ज्ञानं तदीयज्ञानस्य च विस्तारं करोति । पाश्चात्त्यमतेऽपि वैज्ञानिकानुसंधानपदेन कथ्यते । किन्त्वेतत्सर्वं व्याख्यानमात्रकं भवति यदनेकप्रकारकयन्त्राणां साहाय्येन सामान्येन्द्रियाणां सामान्यज्ञानेनाधिकं सूक्ष्मं विस्तृतं ज्ञानञ्च प्राप्नोति तस्य ज्ञानस्य करणमपि अन्ततोगत्वा मानवस्यैन्द्रियाण्येव सन्ति । विविधा-विष्कृतयन्त्रद्वारा मानवेन्द्रियाणामसामर्थ्यस्य तथा सीमायाः यत्किञ्चित् अंशे एव परिहारोऽपि भवति । यन्त्रद्वारा प्राप्ताः परिणामा अपि अन्ते इन्द्रियद्वारैव ग्रहणीयाः भवन्ति ।

कार्यकारणव्यवस्थानुसन्धानपरतया तस्य दार्शनिकं चिन्तनं वैज्ञानिकञ्च चिन्तनं सर्वत्र परिव्याप्तं भवति । न्यायसूत्राणां भाष्यकारो वात्स्यायनः प्रतिपादितवान् –

"त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः, उद्देशो लक्षणं परीक्षा चेति । उद्देशस्तु नाममात्रेण वस्तुसंकीर्तनम् - - - - - लक्षणं तु असाधारण-धर्मवचनं लक्षितस्य लक्षणमुपपद्यते न वा इति विचारः परीक्षा[1] ।"

यद्यपि भाष्यकारः न्यायशास्त्रस्य विषये एतेनां प्रक्रियां निर्दिशति तथाप्येषा प्रक्रिया सर्वेषु शास्त्रेषु सामान्यरूपेण संयुज्यते । प्रायः सर्वेषु शास्त्रेषु विषये च प्रतिपाद्यविषयाणामर्थाद्भिन्नविषयाणाञ्च मान्या

---

1. न्यायसूत्राणि, वात्स्यायनभाष्य - 1/1/2.

पुनरपि तस्यैव वस्तुनो ज्ञानस्य नाम अनुवाद इति भवति । यदि कस्यापि वस्तुनो ज्ञानं प्रमाणान्तरेण बाधितं भवति तस्य यथार्थज्ञानं नैवोच्यते । यतो ह्येतेनेदं स्पष्टं सिध्यति यद् वस्तुनः सर्वप्रथमं ज्ञानं जातं तद् यथार्थज्ञानं नासीद् । यतो ह्यन्यैः प्रमाणैस्तज्ज्ञानं बाधितमासीद् । अतः प्रमाणैरेवार्थ-प्रतिपत्तिः वस्तुनो ज्ञानं वा मानवः प्राप्नोतीति सिध्यति ।

मनस्तत्त्वस्य निरूपणेऽपि एतानि स्वीकृतानि प्रमाणान्युपयुज्यमानः साङ्गोपाङ्गनिरूपणस्य प्रयत्नो भविष्यति ।

7. ज्ञानविज्ञानयोरन्तरम्

[क] ज्ञानम् - उपरि प्रतिपादितमस्ति यन्मानवस्य जिज्ञासायाः तृप्तिः ज्ञानेन विज्ञानेन च सम्भवोऽस्ति । ज्ञानशब्दार्थः ज्ञानसामान्यमेव ज्ञातव्यः । एतस्यापि ज्ञानसामान्यस्य रूपद्वयं भवति -

[1] ज्ञानसामान्यमर्थात् विशुद्धं ज्ञानमथवा चितिः । वेदान्ते "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मणः लक्षणे ज्ञानपदेनैतस्याधारभूतस्य ज्ञानस्य ज्ञानसामान्यस्य वा निर्देशः संकेतः कृतो वर्तते ।

[2] दर्शनशास्त्रे ज्ञानपदस्य प्रयोगः तस्यापि ज्ञानस्य कृते कृतो वर्तते यन्मनसो वृत्तिमात्रं भवति । प्रायो द्वितीयस्मिन्नेवार्थे ज्ञानपदस्य प्रयोगः शास्त्रेऽधिकतया कृतो वर्तते ।

[ख] विज्ञानम् - विज्ञानपदस्यार्थः "विशिष्टज्ञानम्" इत्यस्ति । इदं विशिष्टं ज्ञानमिन्द्रियेण मनसा चोत्पन्नं ज्ञानमस्ति । ज्ञानसामान्या-

विज्ञानैः एका समग्रदृष्टिः समन्वयस्य च सम्भावनातिरोहिता वर्तते । भारतीय चिन्तनस्य प्रवृत्तिः समन्वयात्मकदृष्टेः प्रधानात्मिका वर्तते । भारतीयं चिन्तनं न केवलं ज्ञानाधीनं वर्तते, अपितु प्रयोजनविशेषं कांक्षितं चाऽभिलक्ष्य प्रवृत्तो वर्तते । एतादृश् समन्वयात्मकभावनायाः कारणात् एवं विज्ञानं धर्मं वा अन्य-विज्ञानेन दर्शनेन सह तुलनायां तत् किमपि लक्ष्यसामान्यं प्रति अग्रे सरो वर्तते ।

यथा च पूर्वं एव प्रतिपादितमस्ति, भारतस्य समग्रं चिन्तनं मानवसुखप्राप्त्यर्थं आत्यन्तिकदुःखनिवृत्त्यर्थमभिलक्ष्यैव प्रवृत्तं वर्तते । तदेव विकासस्येत्थमेव क्रमबद्धं समन्वितस्य चिरं भारतीयं चिन्तनस्वरूपमापयति । भारत एव एतस्य लक्ष्यस्याभावे पाश्चात्त्यचिन्तनेषु क्रमबद्धता समुपलभ्यते न च तदीयं चिन्तनं बौद्धिकीं परितृप्तिमेव ददाति, अपि तु यथा- यथा कालो गच्छति, यथा-यथा च विज्ञानस्य दर्शनस्य च क्षेत्रे विस्तारो गम्भीरता च वर्धते, तथा तथा तत्राधिकतया समस्याः वर्धन्ते ।

भारतीयचिन्तने शास्त्राणां प्रतिपादने च समन्वयात्मिका दृष्टिः प्रधानभूता वर्तते । मानवजीवनस्य धर्मार्थकाममोक्षरूपाश्चत्वारः पुरुषार्थाः परस्परमंगांगिभावयुक्ताः सन्तः एकं लक्ष्यं संकेतयन्ति । एतस्य शोध-प्रबन्धस्य मन्तव्यनिरूपणमपि भारतीयास्तिकदर्शनस्य विचारधारायाः एवं प्रधानलक्ष्यपूर्णं वर्तते । पाश्चात्त्यमनोविज्ञानमिदं सर्वथा स्वतन्त्रं दर्शनशास्त्र-विज्ञानिकचिन्तनाभ्यासस्य सर्वथा असंपृक्तमपि नास्ति ।

निखिलमपि विश्वमधिकृत्य चिन्तयन्तो सर्वे दार्शनिकनिकायाः सम्पूर्णं पदार्थजातं प्रमाणप्रमेयभेदेन द्विधा विभजन्ति । प्रमेयानामपि ते अनेकान्

पदार्थानुद्भावयन्ति यथा वैशेषिकदर्शनं षट्पदार्थान्तर्गतमेव विश्वस्य सम्पूर्णान् प्रमेयानन्तर्भावयन्ति । वेदान्तदर्शनं तु ब्रह्मात्मानात्मभेदेन वा विश्वमधिकृत्य विचारयति । एवमेव मूर्तामूर्त, कार्यकारणादि दृष्ट्या अपि विश्वस्य समस्तान् प्रमेयान् विभाजयितुं शक्यते ।

पाश्चात्यदर्शने तु प्रायः मनः पदार्थत्वेन चिरं चिन्तयितुं शक्यते । मनसो विषयमधिकृत्य पाश्चात्यदर्शने 'मनोविज्ञानस्य' उद्भवो विस्तारश्चाभवत् । यद्यप्येतदपि सत्यं यद् पाश्चात्यमनोविज्ञाने मनोविज्ञानविषयस्य सर्वसम्मतं लक्षणमिदानीं यावन्निश्चितं नाभूत् । पाश्चात्यमनोविज्ञाने बहवः सम्प्रदायाः विरचिताः सन्ति, ते च सम्प्रदायाः स्वविशेष-विशेषसिद्धान्त-प्रक्रियान्याधारीकृत्य मनोविज्ञानस्य लक्षणं स्व-स्वपद्धत्या कुर्वन्ति । देशभेदेन मनोविज्ञानस्य सम्प्रदायाः अपि उत्पन्नाः सन्तः एनां समस्यामधिकं परिपोषयन्ति । अतः कश्चन मनोविज्ञानमात्मनो विज्ञानं कथयति, कश्चन मनसो विज्ञानं कथयति, कश्चन सम्प्रदायः स्वचेतनायाः विज्ञानं प्रतिपादयति अपि च कश्चन व्यवहारस्य विज्ञानस्य नाम ददाति । यदीत्थं भवति तन्नाश्चर्यकरम्, यतो हि आधुनिके युगे मनोविज्ञानस्य प्रगत्यन्तं विस्तीर्णं जातं, स्व-स्वसम्प्रदायस्य च स्व-स्वमहत्त्वविशेषता अपि वर्तते ।

## ३. <u>मनोविज्ञानस्य स्वरूपम्</u>

उपरि प्रतिपादिते पथि सत्स्वपि बहुषु मतभेदेषु प्रायः सर्वेऽपि पाश्चात्याः मनोवैज्ञानिकाः अत्र सहमताः सन्ति यद् मनोविज्ञानस्य प्रधानो

समाधानकरणमस्ति तथा मानवस्य सामान्यपरिस्थितौ तस्यातिमानवस्य परिणतेः साध्यं शक्तिप्रदानञ्चापि कल्पितमस्ति ।

आस्तिकदर्शनानां मनोविज्ञानमशरीरात्मकमस्तं मनसः तत्त्वं स्वीकृत्यानुसन्धाने प्रवृत्तं । आस्तिकदर्शनानां मनोविज्ञानानुसारेण त्रिगुणात्मकयाथार्थ्यं वर्तते, यत्र च पाश्चात्यमनोविज्ञानं कुत्रापि आत्मनः पृथक्त्वेन नैव स्वीकरोति, कुत्रापि मनः आत्मनश्च एकत्वमेव सोऽवलोकयति, अपि च कुत्रापि प्रकृतेरेव गुणात्मकः परिणामः मनोऽस्या चेतनां प्रतिपादयति। पाश्चात्यमनोविज्ञाने मनश्शब्दाभिधेयार्थस्यापर्यन्तनिश्चयोऽनेक स्पष्टतायाः परस्परविरोधिमान्यतायाश्च कारणं सञ्जातं वर्तते ।

पाश्चात्यचिन्तने मन (Mind), साइक (Psyche), स्पिरिट (Spirit) तथा सोल (Soul) प्रभृतिशब्दानां प्रयोगः तदीयार्थपरि-विचारणानन्तरं तदीयार्थानामनिश्चयतायाः ज्ञानं जायते । ऑक्सफोर्ड इंगलिश डिक्शनरी नामके ग्रन्थे Mind शब्दस्यार्थः Regembrance, Attention, Way of Thinking, Seat at consciousness, Thought, Valition and feeling soul इत्यादयोऽर्थाः प्रदत्ताः वर्तन्ते ।

ऑक्सफोर्ड एडवान्स्ड लर्नर डिक्शनरी आफ करेण्ट इंगलिश नामके ग्रन्थेऽपि माइण्डशब्दस्यार्थः Memory, Remembrance, intellect इत्यादयोऽर्थाः प्रदत्ताः वर्तन्ते । एवमेव Psyche शब्दस्य इत्यस्यार्थः Human Soul, Spirit, Human Mind, Mentality प्रभृतिः प्रदत्तो वर्तते ।

प्रसङ्गे उपर्युक्तग्रन्थस्य निम्नलिखितैः शब्दैः सम्यकतया प्रकाशः प्रकाशितो अस्ति ।

"On one knows this better than the Psychologists themselves. They see with the eyes of familiar association not only the underiable poverty of their science, but the flimsiness and shoddiness of much of the material they are asked to accept as genuine fact. Psychologists are continually looking upon the work of their colleaglues and finding that it is not good. And with little hesitation, or with none at all, they expose the weaknesses and flawa they discover[1]."

किन्तु भारतीयतत्त्वचिन्तने मनः करणमेवार्थात् शरीराभ्यन्तरे वर्तमानमन्तःकरणमेव स्वीकृतं वर्तते । व्यवहारोपयोगार्थं शरीरमनसोरात्मनां सर्वथा निश्चितरूपेण लक्षणद्वारा स्पष्टीकरणं कृतं वर्तते । तदैक्यकारणात् भारतीयमनस्तत्त्वदर्शनानां मूले एका समन्वयात्मिका धारा प्रवाहिता वर्तते । मनोविषयेऽपि निश्चयधारणात्मकत्वात् एतस्य विषयस्य चिन्तनापेक्षा-कृतं सुस्पष्टत्वं वर्तते । इदं सत्यमस्ति यद् विभिन्नतत्त्वचिन्तने मनसः स्वरूपम्, मनसः उत्पत्तिः, मनो विभुत्वपरिमाणादिषु च मतभेदाः सन्ति. किन्तु मनसिन्द्रियात्मनां मध्ये ज्ञानोत्पादनार्थं करणस्य कार्यं अस्ति, प्रायः एतस्मिन् विषये नास्ति कश्चन मतभेदः । "प्रायः" इति पदोपादानस्याभिप्रायो वर्तते यद् विज्ञानवादिनो बौद्धाः विज्ञानमर्थात् मनस् बुद्ध्यतिरिक्तान्यः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. Seven Psychologies : By Edna Heidbreder - P. 3.

कश्चन पदार्थो वर्तते इति नैव स्वीकुर्वन्ति ।

पाश्चात्त्यमनोविज्ञानं बहिर्मुखनिरीक्षणकारणात् मनः प्रेरित-शारीरिकचेष्टाशरीरपर्यन्तमेव च सीमितं अस्ति । शरीरान्तर्गतान् नाडी-संस्थानमस्तिष्कस्य क्रियाव्यापारांश्चातिरिच्य सः मनसः पृथक् सत्तां नैवा-ङ्गीकरोति । उभयोः मनोविज्ञानयोरियमन्तरं विशेषरूपेण द्रष्टव्यमस्ति । आध्यात्मिकदृष्ट्या मनोविज्ञाने न केवलं मनस उत्पत्तिस्थितिचेष्टानामेवा-ध्ययनं भविष्यति अपितु मनोविलयस्य मनोनाशस्य च सम्भावना मनोनाश-स्यापि कारणेषु प्रकाशो भविष्यति । प्रस्तुते शोधप्रबन्धे एताः विशेषताः प्रतिपाद्यस्थानं लभेते ततः पुष्टी भविष्यति ।

९. <u>मनोविज्ञानाध्ययने कालक्रमस्य महत्त्वम्</u>

मनस्तत्त्वस्य क्रमिकविकासस्य सम्यक्प्रकारेण ज्ञातुं लेखकानां तदीयग्रन्थानामितिहासकालक्रमाणाञ्च (क्रोनोलॉजी) विशिष्टं महत्त्वं वर्तते। अंग्रेजीविश्वकोषे कथितञ्चाप्यस्ति –

"In more than any other science the questions discussed by contemporary writers and the answers they apper cannot by rightly understood without some knowledge of its history.[1]"

पश्चिमदेशस्य दार्शनिकलेखकानां कालक्रमानुसारमितिहासे तदीय-ग्रन्थेषु च मनस्तत्त्वसम्बन्धीनां बहूनां विचाराणामध्ययनं सरलतया कर्तुं

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. Encyclopaedia Brittanica - Vol. 18 P. 783.

अवधौ कतिहि यूनानीदेशेन तथा यूरोपदेशस्य बहूनां दार्शनिकानां ग्रन्थास्तत्र प्रचुरतया समुपलभ्यन्ते ।

दुर्भाग्यवशात् भारतीयलेखकानां तदीयग्रन्थानामैतिहासिकपूर्वा-पूर्वो स्वरूपतः कालक्रमः प्रायो निश्चित एव वर्तते । क्वोऽद्यापि विवादा-स्पद एव वर्तते । तत्र प्रधानमिदं कारणमस्ति यद् भारतीयाः विद्वांसः स्वविषये एवं स्वकालस्य विषये आत्मसंगोपननीतिमधिकृत्य गच्छन्तो वर्तन्ते । द्वितीयमिदमपि कारणं वर्तते यद् भारतस्य समृद्धतया धनसम्पन्नतया च आकर्षिताः सन्तः ये ये वैदेशिकाः एतस्मिन् देशे काले-काले आक्रान्तवन्तः, ते अनल्पान् संचितान् पाण्डुलिपीन् ग्रन्थागारांश्च भस्मसात्कृतवन्तः । भाग्यवशात् यावन्तो ग्रन्था एतस्मिन् देशे रक्षिताः सन्ति, अथवा येषामनु-वादः तिब्बती-चीनी अन्यासु भाषासु वा अभूद् तेषामाधारीकृत्य कालक्रमा-नुसारं भारतदर्शनस्य सामग्री संकलनं विधातुमशक्यमेवापि कर्तुं वर्तते । ग्रन्थ-लेखकानां तद् द्वारा लिखितग्रन्थानाञ्च कालस्य विषये पाश्चात्त्याः विद्वांसः विशेषरूपेण-यन्नपूर्वकं पर्याप्तमनुसन्धानं प्रयत्नञ्चापि कृतवन्तः किन्त्वेतेषां विदुषां मतं विषयकालेषु कालनिर्णये च प्रायः अत्यधिकतया विभिन्नता समु-पलभ्यते । भारतीय वाङ्मयस्य कृतितो विद्वान् मैक्समूलर कथयति: -

That all attempts at fixing the dates of the six recognized systems of philosophy, nay even their mütal relationship should hither to have failed.[1]

---

1. Indian Philosophy, Nyay and Vaisoshika : By friedrich Max Muller - P. 86.

भारतीय षड्दर्शनसूत्रकाराणां कालविषये पाश्चात्त्याः विद्वांसोऽत्यन्तं भ्रान्ताः । ते षड्सु सूत्रकारेषु कतिपयस्य व्यक्तित्वं कल्पितं तदीयान् ग्रन्थरचितान् कालांश्चापि अनिश्चितमेव मन्यते । जैकोबी-मतो न्यायदर्शनस्य ब्रह्मसूत्राणाञ्च रचनाकालः 200 ई० तथा 500 ई० मतः । वैशेषिकदर्शनानां मीमांसासूत्राणाञ्च ते न्यायदर्शनब्रह्मसूत्रेभ्यश्चापि किञ्चित् प्राचीनं मन्यते । तेषां मते योगसूत्रस्य कालः 450 ई० मतः सांख्यसूत्राणाञ्च रचना आधुनिकी मन्यते :-

During that period (200-500 A.D.) ~~ix~~ liked the old commentators; vatsyayana, Upa-varsa, the vrtti kara (Bodhyana ?) and probably sabara-svamin.[1]

Hindu Psychology - early Indian Psychology shous inits essentials many resemblances to that of the greek but occuing largely to geographical and climatic conditions, it tended to become mmore contemplative and subjective. For this reagon introspective analysis of mental states and Processes with it embodies deserve more attention than they usually receive. Almost every variety of theory is to be found. from extseme materialism to extreme idealism and; from complete pluralism to complete monism.[2]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. The ~~Xxxxxxx~~ General of the American Oriental Society. - P. 3.

2. En-cyclopaedia Brittanica - P. 783.

उपर्युक्तोद्धरणैः वार्ताद्वयं स्पष्टतां याति- 1. भारतीयदार्शनिकचिन्तकानां विज्ञानरतात्त्विकविषयचिन्तनधारायाः विविधतापूर्णं मनस्तत्त्वविषयकविपुलाध्यवसायेन प्रवाहमयत्वं पुष्टात्मकं मूल्यांकनं व्यापीतानीं यावद् पर्यवेक्षणेन नाभूत् । एतस्य प्रयत्नः एतस्मिन्शोधप्रबन्धे प्रारब्धो वर्तते । 2. द्वितीयं तथ्यमेतेनोद्धरणेनेदं पुरस्तादागच्छति यद् पाश्चात्त्यविदुषां दृष्टिः प्रधानतः सिग्मुन्ड तथा अन्य पाश्चात्त्यदार्शनिकानां ग्रन्थेषु उपलब्धः मनस्तत्त्वसम्बन्धि सामग्रीमवलम्ब्यैव वर्तते । भारतीयमनोविज्ञाने तेषां दृष्टिः प्रायः उपेक्षापूर्णैव वर्तते, किन्तु तदधिकृत्य सहानुभूतिपूर्वकं विचारकरणस्यापि आवश्यकतां नैते मन्यन्ते ।

प्रतीच्यदर्शनाध्यापकः श्रीमान् डॉ० वी० कारपानी महोदयस्य सम्मतिरपि उक्त कथनं पोषयति भारतीयमनोविज्ञानचिन्तनस्य च स्पष्टं महत्त्वमावहति -

The theory of Atma in the drawing state finds a few spx approachments about the modern "Psycho-analysis" Professor sigmund freud, the well.known discoverer of Psycho-analysis, is not in sympathy with the sacred wisdom of India. In a letter to me he writes : "Ancient India has remained a dark continent for me. I never felt tempted to intrude into that Puzzling labyrinth." Inspite of the numerous taxes on his time and labour, apart from his professional work as a Doctor of Medicine. I advise Professor freud to recognise the special features of 'his' psycho-analysis in the games of Indian Philosophical literature.

---

1. प्राचीन भारतीय मनो विज्ञानः, श्री हिमांशुचन्द्र भट्टाचार्य शास्त्री, प्राक्कथन, पृ० "ट".

एतद्विपरीतं भारतीयचिन्तकाः पाश्चात्त्यमनोविज्ञानमनुरोध्य समर्थैर्विद्वद्भिः आविष्कृतान् सिद्धान्तान् प्रक्रियाश्चापि न केवलं यथेष्टं ध्यानमेव प्रदत्तवन्तः, अपि तु तत्र कुत्रापि भारतीयमनोविज्ञानापेक्षया तदीया दृष्टिः पाश्चात्त्यान्प्रति अधिकमानायां दरीदृश्यते ।

दर्शनसूत्रकाराणां वेदसंहितानाञ्च विषये यः कालक्रमः शो-धविद्वद्भिः सुनिश्चितः सोऽपि कालक्रमः परस्परविरोधी विवादास्पद एव वर्तते । अतः कालक्रमानुसारं भारतीयतत्त्वचिन्तकानां मनोविश्लेष-विज्ञानस्य सुव्यवस्थिताध्ययनं नैव सम्भाव्यते, अपि तु विभिन्नभारतीयदर्शनेषु उपलब्धमनोविश्लेषणसामग्र्याधारेणैवाध्ययनं सम्भाव्यम्, अपि चाग्रेऽपि इत्थ-म्भावाध्ययनस्य लघुः प्रयासः कृतो वर्तते ।

।। इति विषयप्रवेशः ।।



शब्दानां प्रयोगं कुर्वन् मनसो विविधानां स्वरूपाणां निर्देशः कृतो वर्तते ।

1. <u>वैदिकवाङ्मये मनसो निर्देशः</u>

[अ] ऋग्वेदे मनः -

"मनोजविष्ठं ज्योतिर्ध्रुवं आहितं यत् ।"[1]

इत्युक्त्वा मनसः सत्ता स्वीकृता वर्तते, अपि च मनसो वेगः, आन्तरे मनसः प्रकाशः हृदये च स्थितिः ज्ञापिता वर्तते ।

[आ] शुक्लयजुर्वेदे मनः -

मनसः परिष्कारविधानन्तरेण मनसः समीचीनं वर्णनं तथा मनसः शक्त्यादीनां संकेतः समुपलभ्यते । यथा -

"यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । ।
दूरं गमं ज्योतिषां ज्योतिरेकं तन्मे मनःशिवसंकल्पमस्तु[2] ।।"

"येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यद पूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु[3] ।।"

[इ] सामवेदे मनः -

"आते वत्सो मनो यमत्परमाच्चित्सधस्थात्[4] ।
अग्ने त्वां कामये गिरा ।। ऋ० 8/11/7 ।।"

एवमेव मनशब्दस्य प्रयोगः सामवेदस्य पृ० 3, 3.4 इत्याद्यनेक स्थलेषु कृतो वर्तते । "मनीषा" शब्दः साम० पृ० 5, 6 तथा 12 इत्यत्र आयाति ।

---

1. ऋग्वेद - 6/9/5-6.
2. शुक्लयजुर्वेद - 34/1.
3. शुक्लयजुर्वेद - 34/2.
4. सामवेद - 1/1/8.

[ख] अथर्ववेदे मन्त्रः -

"यथा मनो मनस्केतैः परापतत्याशुमत् ।
एवा त्वं कासे प्र पत मनसोऽनु प्रवाय्यम् ॥"[1]

[ग] गायत्रीमन्त्रे मन्त्रः -

"धियो यो नः प्रचोदयात् - - - - - ।"

उक्त मन्त्रे "धी" शब्दस्य प्रयोगः मन[बुद्धि] रूपे वर्तते । उदाहरणार्थमेव कतिपयशब्दाः उद्धृताः सन्ति । अमरकोशे समागतानां मनसोऽन्यपर्यायवाचकशब्दानामपि वैदिकसंहितायामवलोकनं भवति । वैदिककोशे तु सर्वेऽपि शब्दाः सारल्येन समुपलभ्यन्ते । अतोऽत्र तेषां सर्वेषामुद्धरणदानं नावश्यकं प्रतिभाति ।

पाश्चात्यभाषासु साहित्ये च मनःशब्दस्य तुल्यानि पदानि समुपलभ्यन्ते । उदाहरणार्थं लैटिनभाषायां तथा ग्रीकभाषायां तथा आंग्लभाषायां इति पदमुपलभ्यते ।

ब्राह्मणोपनिषद्ग्रन्थेषु च मनोऽथवा मनसः पर्यायवाचकानां शब्दानां प्राचुर्येण प्रयोगः समुपलभ्यते, यथा -

[घ] उपनिषत्सु मन्त्रः -

1. अनेजदेकं मनसो जवीयो[2] ॥

---

1. अथर्ववेद - सू० 105/1.
2. ईशावास्योपनिषद् - 1/4/4.

2. केनेषितं पतति प्रेषितं मनः [1] ।।

3. इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् [2] ।।

4. परदेवे मनस्येकी भवति [3] ।।

5. अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् [4] ।।

6. मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि
भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः
प्रयन्त्यभिसंविशन्तीति [5] ।।

7. चन्द्रमा मनो भूत्वा हृदयं प्राविशत् [6] ।।

8. मनो ब्रह्मेत्युपासीत [7] ।।

9. तस्य शरीर एव मन आसीद् [8] ।।

10. प्राणबन्धनं हि सोम्य मन इति [9] ।।

2. <u>पुराणरत्ने श्रीमद्भागवतमहापुराणे मनः</u>

"एवं जिज्ञासयापोह्य नानात्वभ्रममात्मनि ।
उपारमेत विरजं मनो मय्यर्प्य सर्वगे ।।

यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ।
मयि सर्वाणि कर्माणि निरपेक्षः समाचर ।।

---

1. केनोपनिषद् - 1/1.
2. कठोपनिषद् - 6/7.
3. प्रश्नोपनिषद् - 4/2.
4. मुण्डकोपनिषद् 1/8.
5. तैत्तिरीयोपनिषद् - 4/1.
6. ऐतरेयोपनिषद् 5/4.
7. छान्दोग्योपनिषद् - 3/18/1.
8. बृहदारण्यकोपनिषद् 2/6.
9. छान्दोग्योपनिषद् - 2/8.

यस्य स्युर्वीत संकल्पाः प्राणेन्द्रियमनो धियाम् ।
वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ।।"

एवमेवान्येषु पुराणेषु स्मृतिग्रन्थेष्वपि उपलभ्यमानाः मनस्संकेताः प्रदत्ताः वर्तन्ते ।

3. <u>आस्तिकदर्शनेषु मनोविषयकाः संकेताः</u>

[अ] वैशेषिकदर्शने मनः –

वैशेषिकदर्शनस्य महर्षिः कणादः । एतस्य दर्शनस्यापरं नाम औलूक्यदर्शनमपि भवति । वैशेषिकदर्शनस्य प्रथमाध्यायस्य प्रथमाह्निके नव-द्रव्याणां वर्णनमस्ति । एतेषु नवसु द्रव्येषु मनोऽपि एकं द्रव्यत्वेन स्वीकृत-मस्ति । यथा –

"पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति
द्रव्याणि ।" [1/1/5]

वैशेषिकसूत्राणां प्रशस्तपादभाष्येऽपि मनसः पर्याप्तत्वेन चर्चोपलभ्यते ।

[आ] न्यायदर्शने मनः –

न्यायसूत्रस्य प्रणेता महर्षिः गौतमो वर्तते । प्रमेयान्वर्णयन्नसौ मनोऽप्येकं प्रमेयमित्यवर्णयत्, यथा –

"आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभाव फल-
दुःखापवर्गास्तु प्रमेयम् ।" [1/1/9]

इति सूत्रमधिकृत्यटीकां टीकयन्तः श्रीवात्स्यायनमहोदयाः लिखन्ति –

---

1. श्रीमद्भागवत् – 11/14, 21-22.

"सर्वविषयमन्तःकरणं मनः ।" (1/1/9)

(ख) सांख्यदर्शने मनः -

सांख्यसूत्रे मनसः उल्लेखः इत्थम्प्रकारेण वर्तते -

"महदाख्यमाद्यं कार्यं तन्मनः ।" (1/71)

अत्र अर्थात् प्रकृतेः महद्रूपं यत्कार्यमुत्पन्नं तन्मन इत्युच्यते । अयं हि लोकः केवलं समष्टिरूपं मनः संकेतयति । सांख्यदर्शने व्यष्टिमनः संकल्पविकल्पकारकं पृथगिन्द्रियरूपेणोच्यते ।

उपर्युक्तं सूत्रं व्याख्यापयन् अनिरुद्धवृत्तौ कथयति यत् -

"यत्प्रकृतेराद्यं कार्यं तन्महत्, महत्तत्त्वं बुद्धिः,
तदेव मननान्मन इति ।" (1/71)

अर्थात् प्रकृतेः सर्वप्रथमं कार्यं महत्तत्त्वं वर्तते, महत्तत्त्वस्यैव नाम बुद्धिरस्ति । अग्रिमे सूत्रे अहङ्कारस्योत्पत्तिः वर्णिता वर्तते । यथा -

"चरमोऽहंकारः" (1/72)

अनिरुद्धवृत्तौ "अनन्तरं बुद्धेः कार्यम् अहङ्कारः" इत्युक्तमस्ति । सांख्यकारिकायां सर्गक्रमस्य वर्णनमित्थं रूपं विद्यते । यथा -

"प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात्पंचभ्यः पंचभूतानि ॥"

अर्थात् प्रकृतेर्महत् बुद्धितत्त्वं वा, महतोऽहंकारः, अहङ्कारात् पञ्चतन्मात्राः

---

1. सांख्यतत्त्वकौमुदी, कारिका 22.

एकादशेन्द्रियाणि इति षोडशानां तत्त्वानां समूहः उत्पद्यते । एतेष्वेकादशेन्द्रियाणि इति षोडशानां तत्त्वानां समूहः उत्पद्यते । एतेष्वेकादशेन्द्रियेषु मनस उल्लेखः इत्थम्प्रकारेण कृतो वर्तते यथा -

"उभयात्मकमत्र मनः संकल्पकमिन्द्रियं च साधर्म्यात्[1] ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥"

अर्थादत्र मनः उभयप्रकारकमिन्द्रियं वर्तते । इदं संकल्पकत्वात् इन्द्रियसजातीयाच्च "इन्द्रियम्" इत्यप्युच्यते ।

[2] योगदर्शने मनः -

योगदर्शने महर्षिपतञ्जलिः चित्तशब्देन मनसो ग्रहणमस्ति ।

यथा -

"योगश्चित्तवृत्तिनिरोधः"[2]

योगसांख्यदर्शनयोर्दार्शनिकं विवेचनमेकमेवास्ति । अतः इदं समानतन्त्रमित्युच्यते । अतः सांख्यदर्शने मनोविषयकः संकेतः योगदर्शनेऽपि स्वीकृतो वर्तते ।

[3] पूर्वमीमांसायां मनः -

नारायणकृते मानमेयोदयनामके ग्रन्थे मनसः उल्लेखः इत्थम्प्रकारेण कृतो वर्तते -

"देहेन्द्रियादीनामात्यन्तिकपरिध्वंसानुगृहीतं मनः
तदनुभवसाधनम्" [पृ० 212]

---

1. सांख्यतत्त्वकौमुदी - कारिका 27.    2. पातञ्जलयोगदर्शन - 1/2.

सुखाद्यपारोक्ष्यसाधनेन्द्रियत्वेन कल्प्यमन्तरिन्द्रियं विभु परिमाणम्

अस्पन्दं च मनः ।। [पृ० 214]

[ऊ] उत्तरमीमांसायां वेदान्तदर्शने वा मनः -

पुरुषस्य प्रयाणकाले वाणी मनसि विलीयते, मनः प्राणे, प्राणस्तेजसि तथा तेजो देवतायां लीयते ।

अस्य सोम्यपुरुषस्य प्रयतो वाङ्मनसि संपद्यते,
मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्
इति । [4/2/2]

तन्मनः प्राण उत्तरात् ।। [4/2/3]

द्वितीयस्मिन् सूत्रे सर्वेषामिन्द्रियाणां मनसि सम्पत्तिः प्रतिपादिता अस्ति । अर्थात् वृत्तिद्वारैव सर्वाणीन्द्रियाणि मृत्युकाले मनसो नुपर्यन्ति, इत्युक्तमस्ति । तृतीयस्मिन् सूत्रे स्वरूपेण मनसः प्राणे विलयस्य निषेधः कृतो वर्तते । केवलं मनस एव वृत्तयः प्राणे विलीयन्ते, किन्तु वृत्ति-वृत्तिमन्मनसोश्च गौणभेदमङ्गीकृत्य सूत्रे मनसः प्राणे विलीनतायाः प्रतिपादनमस्ति ।

अन्येषु सूत्रेष्वपि मनसः उल्लेखः उपलभ्यते । आचार्यश्रीसुरेश्वराचार्यमहोदयः मनोबुद्ध्यादिनाम्नां व्याख्यापयन् मनसो व्युत्पत्तिं कृतवान् -

"मनोबुद्धिरहंकारश्चित्तं चेति चतुष्टयम्[1] ।
संकल्पाख्यं मनोरूपं बुद्धिर्निश्चयरूपिणी ।।"

---

1. सुरेश्वराचार्य वार्तिक - 33.

पञ्चदश्यां वृत्तिभेदेन मनसो द्वयोः रूपयोरित्थं प्रकारेण ज्ञापनमस्ति –

"तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद्द्विधा ।
मनो विमर्शरूपं स्याद् बुद्धिः स्यान्निश्चयात्मिका[1] ॥"

[ए] जैनदर्शने मनः –

जैनदर्शनस्य सुप्रसिद्धे ग्रन्थे "तत्त्वार्थाधिगमसूत्रे" ज्ञानानां वर्णनं कुर्वन् "मनसः" उल्लेखः इत्थम्प्रकारेण कृतो वर्तते –

"मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम्[2] ॥"

"ऋजुविपुलमती मनःपर्यायः[3] ॥"

"विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः[4] ॥"

[ऐ] बौद्धदर्शने मनः –

बौद्धदर्शनस्य सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकभेदेषु सम्प्रदायेषु विज्ञानवादस्तु मनः [बुद्धिम्] एव एकमात्रं तत्त्वमधिगच्छति । चित्त-चैतसिकेत्यनयोर्द्वयोः पदार्थयोः [कैटेगरीज़] विज्ञानवादिनो बौद्धाः समग्रमपि विश्वं व्याख्यापयन्ति । भगवतो बुद्धेस्मात्पूर्वमपि कतिपयदार्शनिकाः मनसः सत्तां स्वीकुर्वन्तो वर्तन्ते । "पंचविज्ञानकायसंयुक्तं सास्रवं मनोविज्ञानम्, एवं उच्यते विज्ञानधातुः[5]" बौद्धधर्मस्य प्रसिद्धे "धम्मपदे" नामके ग्रन्थे तृतीयवर्गः

- - - - - - - - - - - - - - - - - - - - - - - - -

1. पंचदशी तत्त्वविवेकप्रकरण - 20.
2. तत्त्वार्थाधिगमसूत्रम् - 1/9. 3. तथैव - 1/24.
4. तथैव - 1/26.
5. आर्यशालिस्तम्बसूत्रे - पृ० 8.

"चित्तवर्गस्य" नाम्ना प्रवर्तो वर्तते । तत्र मनसः उल्लेखः इत्थम्प्रकारेण कृतो वर्तते । यथा -

"फन्दनं चपलं चित्तं दुरक्खं दुन्निवारयम् ।
उजुकरोति मेधावी उसुकारो व तेजनम् ।।"[1]

अर्थात् यथा तीरनिर्माता तीरं ऋजुत्वेन स्थापयति, तथैव बुद्धिमान् पुरुषोऽपि स्वीयं मनः ऋजुत्वेनावस्थापयति, यन्मनः चपलं चञ्चलञ्चापि वर्तते, यदत्य-न्तमरक्ष्यम्, अत्यन्तकाठिन्येन च वशीकर्तुं शक्यते ।

"सुदुद्दसं सुनिपुणं यत्थकामनिपातिनम् ।
चित्तं रक्खेथ मेधावी चित्तं गुत्तम् सुखावहम् ।।"[2]

"दूरं गमम् एकचरम् असरीरं गुहासयम् ।
ये चित्तं संयमेस्सन्ति मोक्खन्ति मारबन्धना ।।"[3]

अर्थात् सुदूरं धावनशीलाः, एकाकिगमनशीलाः, शरीरविधुराः गुहाशयस्थिताः, ये मनः संयमितं कुर्वन्ति त एव मार (विषय) बन्धनान्मुच्यन्ते ।

५. <u>पाश्चात्त्यदर्शने मनः</u> -

पाश्चात्त्यदार्शनिकचिन्तने व्यक्तेः मानवस्य वा व्यक्तित्वं द्वाभ्यामेव दृष्टिभ्यां गृहीतो वर्तते । यथा च विषयपूर्वे प्रतिपादितमप्यस्ति यत्पाश्चात्त्याः दार्शनिकाः चिन्तने जगति मैटरमाइन्डेति पदार्थद्वयं विभा-जयन्ति । अतः मानवव्यक्तित्वस्य विश्लेषणमपि एतयोर्द्वयोस्तत्त्वयोरन्तर्गततेन

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. धम्मपद, चित्तवग्गो - 1. 2/3. तथैव - 4.

पाश्चात्त्यदार्शनिकाः भौतिकवादिपदेन आदर्शवादिपदेन चोच्यन्ते । आदर्शवादिसम्प्रदाये केवलं मनस एव सत्ता स्वीकृता वर्तते । तत्र मनसः पृथग्रूपेण आत्मनश्चेतनायाः वा स्वतन्त्ररूपेण निरूपणं नोपलभ्यते । अन्यतश्च भौतिकवादिनो दार्शनिकाः शरीरात्पृथग्रूपतः मनसः सत्तां नैवाङ्गीकुर्वन्ति । अत एव ते स्नायुसंस्थानान्मस्तिष्काद्वा पृथक्तया चेतनायाः स्वतन्त्रसत्तां नैवाङ्गीकुर्वन्ति । मार्क्सवादिदर्शने तु चेतनायाः भौतिकतत्त्वानां गुणात्मकपरिणाम एव स्वीकृतो वर्तते ।

पाश्चात्त्यदर्शनेष्वपि मनः कुत्रापि "माइन्ड" पदेन, कुत्र च "साइक" पदेन, अन्यत्र "सोल" पदेन, एकत्र "स्पिरिट्" पदेन, कुत्र च "बुद्धि" पदेनोच्यते । एतस्मात्कारणात् या अस्पष्टता या च समस्यासमुत्पन्ना वर्तते, सा समस्या भारतीयदर्शनचिन्तने नोपलभ्यते यतोहि भारतीयदार्शनिकचिन्तनधारायां साधनरूपेण करणरूपेण वा मनसः सत्ता स्वीकृता वर्तते । मनसः सत्ता आत्मनः पृथग्रूपेण वर्तते । बौद्धदर्शनस्य विज्ञानवादशाखायान्तु विज्ञानमेव [बुद्धिरेव] केवलं पदार्थरूपेण स्वीकृतं वर्तते यतोहि बौद्धदर्शनमनात्मवादिदर्शनमस्ति । बौद्धदर्शनं किमपि शाश्वतपदार्थरूपेण आत्मनामकं पदार्थं नैवाङ्गीकरोति । "सर्वं क्षणिकम्, सर्वं क्षणिकम्" सर्वमनात्म्यम्, सर्वमनात्म्यम्" इत्यादिरूपेण चोद्घोषाः वर्तन्ते बौद्धानाम् ।

आवेदात् आस्तिकदर्शनानां मूलग्रन्थेषूपलभ्यमानाः मनोविषयकाः यावन्तः संकेताः वर्तन्ते, ते सर्वेऽपि प्राचीनतादृष्ट्या संकलिताः सन्ति । परवर्तिकाले एतेषां सूत्राणां व्याख्योपव्याख्याटीकास्वपि मनस्तत्त्वस्य स्वरूपे

पूर्वार्धे च विचारः कृतो वर्तते यत्र च प्रस्तुते शोधप्रबन्धेऽपि यथास्थानं प्रस्तुतं भविष्यति ।

यथा चोपरिष्टुक्तमप्यस्ति, संस्कृतसाहित्ये वेदब्राह्मणोपनिषदादिषु च न केवलं मनसः उल्लेख एवास्ति, अपितु मनसः पर्यायवाचकानां शब्दानां निरुक्त्यनुसारं तदीयविविधक्रियाकलापानां वर्णनमपि तत्र कृतं वर्तते । परम्परातः प्राप्तवतीमिमां विपुलां सामग्रीमधिकृत्य प्रायः सर्वेऽपि भारतीयाः दार्शनिकाः मनोविषये स्वकीयं सिद्धान्तं स्थिरी कुर्वन्ति । प्रस्तुताध्ययनस्य विषयीभूतानि आस्तिकदर्शनानि अर्थात् न्यायवैशेषिक, सांख्य, योग, पूर्वमीमांसा, उत्तर-मीमांसा, वेदान्तदर्शनं वा, बौद्धदर्शन, जैनार्हतदर्शनं वा, एतानि अष्टौ दर्शनान्यपि नैतस्यापवादभूतानि । एतान्यपि दर्शनानि परम्परागतमनोविषयक-सामग्रीमुपायुञ्जन् स्व-स्वदृष्ट्यनुसारेण मनसो विवेचनं कृतमस्ति ।

[2] <u>आस्तिकदर्शनेषु मनोविषयकचिन्तनस्य प्रयोजनम्</u>

भारतीयास्तिकदर्शनेषु त्रिभिर्दृष्टिभिर्व्यक्तिरवलोक्यते -

1- व्यक्तेः शरीरम्,
2- व्यक्तेः मनः,
3- मनसो भिन्नं व्यक्तेः आत्मा ।

सर्वेष्वास्तिकदर्शनेषु शाश्वतसुखप्राप्तिं दुःखस्यात्यन्तिकनिवृत्ति-मेव जीवनस्य परमं पुरुषार्थं परमं प्रयोजनञ्चाङ्गीकृतं वर्तते, एतस्यैव प्रयोजनस्य प्राप्तेः अंगत्वेन साधनत्वेन वा तत्र मनोविषयकं चिन्तनमपि कृतं वर्तते । दर्शनस्य क्षेत्रं मानवस्य बौद्धिकः पक्षोऽस्ति अतो बुद्धिद्वारा मनोविषयकं चिन्तयितवोका-

प्रयोजनस्य सिद्ध्यर्थं पन्थानः प्रशस्ताः वर्तन्ते । भारतस्थेषु सर्वेषु आस्तिकदर्शनेषु प्राणिमात्रस्य सहजायाः उपर्युक्तायाः आकांक्षायाः पूर्त्तेश्च निरूपणं कृतं विद्यते, यस्मात् प्राणीनां केन प्रकारेणेदं शाश्वतसुखम्, यस्य द्वितीयस्मिन्शब्दे मुक्तिः, निर्वाणम्, मोक्ष इत्यादिरूपेण चोच्यते, प्राप्तुं शक्यते । एतस्य मोक्षस्य कीदृक् स्वरूपम् ? मोक्षप्राप्यजीवः कस्यां स्थितौ भवति ? केषामेषः लक्ष्याणां प्राप्तिर्जायते ? मानवस्य श्रेयः प्रेयस्त्वरूपादिकं वा दर्शनशास्त्रीयचिन्तनस्य प्रधानो विषयो भवति, एतस्य समग्रचिन्तनप्रक्रियायाः मूले विराजमानं तत्त्वं केवलं मनस्तत्त्वमेव भवति ।

1. न्याय तथा वैशेषिकदर्शने मनसः सत्तास्वीकृतेः प्रयोजनम्

न्यायवैशेषिकदर्शनस्य समानतन्त्ररूपेणोच्यते यतोहि उभयोः प्रमेययोरन्तरं किमपि नास्ति, चरमलक्ष्यञ्चाप्युभयोः दर्शनयोरेकमेवास्ति । न्यायवैशेषिकयोः समानतन्त्रतामवलोकयितुं न्यायसिद्धान्तमुक्तावल्यां यत्र 1- द्रव्य, 2- गुण, 3- कर्म, 4- सामान्य, 5- विशेष, 6- समवाय, 7- अभावेति सप्तपदार्थानां वर्णनं कृतं भवति तत्रैवतस्यापि तथ्यस्य निर्देशः एतेन प्रकारेण कृतो भवति -

"एते च पदार्थाः वैशेषिके प्रसिद्धाः नैयायिकानामप्यविरुद्धाः"[1]

अर्थान्न्यायशास्त्रे वर्णिताः षोडशपदार्थाः वैशेषिकशास्त्रे प्रतिपादित सप्तपदार्थान्तर्गतं सन्निविष्टाः भवन्ति । न्यायसिद्धान्तमुक्तावलीकारस्य आचार्य-

---

1. न्यायसिद्धान्तमुक्तावलिः, प्रत्यक्षखण्ड - श्लोक व्याख्या 2.

विश्वनाथस्यापि इदमेव मतं वर्तते । वैशेषिकदर्शने अभ्युदयनिःश्रेयसयोश्चरम-लक्ष्यरूपेण कथनमस्ति । "निःश्रेयस" शब्दार्थः अपवर्गः मोक्ष एव वा वर्तते । न्यायशास्त्रेऽपि निःश्रेयसः मोक्ष एव वा लक्ष्यरूपेण स्वीकृतो विद्यते । प्रमाणप्रमेयादि षोडशपदार्थानां तत्त्वज्ञानेन निःश्रेयसप्राप्तिर्भवति, इति न्यायशास्त्रस्य प्रथमसूत्रे एव प्रतिपादितमस्ति । यथा -

"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयव-
तर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रह-
स्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ।"

अर्थात् प्रमाणप्रमेयादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसस्य प्राप्तिर्जायते । एवम्प्रकारेणोभयोः दर्शनयोः प्रधानं लक्ष्यनिःश्रेयसप्राप्तिरेव वर्तते । न्यायदर्शनस्य द्वितीयस्मिन् सूत्रेऽपि अपवर्गस्य निःश्रेयसस्य वा उल्लेखो विद्यते । यथा -

"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्त-
रापाये तदनन्तरापायादपवर्गः ।"

अर्थात् तत्त्वज्ञानस्य मिथ्याज्ञानविरोधिकारणात् यदा तत्त्व-ज्ञानं मिथ्याज्ञानं विनाशयति तदा मिथ्याज्ञानरूपस्य कारणस्याभावत्वात् मानवस्य चित्ते रागद्वेषनामकौ दोषावपि निवर्तेते । एतेषां दोषाणां नाश-निवृत्तत्वात् धर्माधर्मोत्पादिकानां प्रवृत्तीनामपि सर्वथा अभाव एव जायते । धर्माधर्मोत्पत्त्यभावात् मानवस्य जन्माभावो भवति अर्थात् विशिष्टशरीरेण सह संयोगाभावो भवति यदा च मनुष्यस्य जन्माभावोऽर्थात् केनापि विशिष्टशरीरेण सह सम्बन्धाभावो जायते, तदा तस्माद् दुःखस्यापि अभावो भवति । अयं

"दुःखाभाव" एव न्यायशास्त्रे अपवर्गस्य निःश्रेयसयोर्वा स्वरूपं भवति । न्यायवैशेषिकयोश्चात्यन्तिकदुःखनिवृत्तिरेव नाम अपवर्ग इति निःश्रेयस इति वा भवति । न्यायवैशेषिकदर्शनचिन्तने आत्यन्तिकदुःखाभाव एव चरमं लक्ष्यमस्ति। एतस्य चरमलक्ष्यस्योपलब्धये प्रमाणप्रमेयादिषोडशपदार्थानां वैशेषिकदर्शनानुसारं सप्तपदार्थानाञ्च तत्त्वज्ञानं करणमेकमात्रोपायो वर्तते । एतेषां पदार्थानां विभजनार्थमेषां चिन्तनार्थञ्च बाह्यकरणेन्द्रियापेक्षयान्तःकरणस्य मनसश्चावश्यकता वर्तते । मन एव तेषां पदार्थानां तर्काधारेण विभाजनं करोति मन एव च तदीयां संख्यामपि निर्धारयति । एतेषां पदार्थानां साधर्म्यवैधर्म्यनिरूपणमपि मानसिकक्रियायामाधारितं वर्तते । नवसु द्रव्येषु अत एव मनसोऽपि सम्मेलनमस्ति । पृथ्वी, जल, तेज, वायु, आकाश, काल, दिक्, आत्मा, मन इत्यादि नवद्रव्याणि कथितानि सन्ति । यावत्पर्यन्तं सप्तपदार्थानां साधर्म्यवैधर्म्यज्ञानं न भविष्यति तावत्पर्यन्तं तदीयं तत्त्वज्ञानमपि नैव जायते । तत्त्वज्ञानाभावे च निःश्रेयसस्य प्राप्तिरपि नैव सम्भाव्यते । एतेनेदं स्पष्टमेव प्रतीयते सप्तपदार्थविभाजनस्य निश्चयार्थं मनसः आवश्यकता भवति । साधर्म्यवैधर्म्ययोः ज्ञानार्थमपि मनो परिहार्यमेवास्ति । इत्थञ्च निःश्रेयसस्य प्राप्त्यर्थं यत्तत्त्वज्ञानमावश्यकमस्ति तन्मनसः साधनद्वारैवोत्पादयितुं शक्यते । न्यायवैशेषिकदर्शने यद्यपि ज्ञानमात्मन एव गुणः स्वीकृतो वर्तते तथाप्येतस्य ज्ञानस्योत्पत्तिरात्ममनसोः संयोगेनैव स्वीकृता+ भवति । यदि मनसः सत्ता स्वीकृता न स्यात्तदा आत्मनि तत्त्वज्ञानस्योत्पत्तिरेव न स्यात् । एतयोर्द्वयोः दर्शनयोः तत्त्वज्ञानोत्पत्त्यर्थं मनसः सत्ता स्वीकृता वर्तते । एतदेवोभयोःदर्शनयोः मनसः सत्तायाः स्वीकृतेः प्रयोजनमस्ति ।

एतत्कारणार्थक्रियोजनातिरिक्तं संसारस्य समग्रव्यवहारार्थं व्यावहारिकार्थेऽपि मनसः सत्ता स्वीकृता वर्तते यतो हि मनसोऽभावे ~~ज्ञान~~-सर्वप्राणद्वारा प्रेक्षितक्लिष्टादिगुणानां वर्णनमेव कर्तुं नैव शक्यते ।

2. सांख्ययोगदर्शने च मनसः सत्तास्वीकृतेः प्रयोजनम्

सांख्ययोगदर्शनयोः चिन्तनेऽपि मनोविषयकं चिन्तनमभूत् । एतयोर्द्वयोर्दर्शनयोरपि मनसः सत्ता स्वीकृता वर्तते । एतस्यां चिन्तनधारायाम् "मनस्सत्तास्वीकृतिप्रयोजनम्" इत्यस्य निरूपणमावश्यकमस्ति । सांख्ययोगदर्शनमपि एकप्रकारेण समानतन्त्रदर्शनमेवास्ति । सांख्यस्य सम्पूर्णसृष्टिप्रक्रियाः मान्यताश्च योगदर्शनेऽपि स्वीकृता वर्तते । उभयोर्दर्शनयोः भेदः केवलमेतावानस्ति, किन्तु योगदर्शने पुरुषस्य पृथक्सत्तापेक्षया एकस्यान्यस्य पुरुषविशेषस्य सत्ता स्वीकृता विद्यते, योगदर्शने यस्य नाम "ईश्वर" इति प्रदत्तं वर्तते । ईश्वरस्य स्वीकृतिकारणादेव योगदर्शनस्य "सेश्वरसांख्यम्" इति नाम प्रचलितमस्ति ।

एतद्भेदातिरिक्तं दर्शनानां प्रमाणप्रमेयादिषु नास्ति कश्चन भेदः । सांख्ययोगोभयदर्शने प्रमाणत्रयमेव स्वीकुरुतः । उभयोरेव दर्शनयोश्चरमलक्ष्यं कैवल्यमस्ति, अर्थात् दुःखात्यन्तिकी निवृत्तिः यथा न्यायवैशेषिकयोश्चरमलक्ष्यं प्रतिपादितमस्ति, तदेव लक्ष्यं सांख्ययोगदर्शनयोरपि वर्तते । पुरुषस्य बन्धनकारणं प्रकृतिपुरुषयोरविवेकः मिथ्याज्ञानमेवास्ति । न्यायवैशेषिकदर्शने जीवात्मा केवलं भोक्ता एव वर्तते, न तु कर्ता । पुरुषप्रकृत्याख्यौ द्वौ प्रमेयौ सांख्यदर्शनस्य प्रधानभूतौ भवतः । योगदर्शने पुरुषप्रकृत्यतिरिक्तः पुरुषविशेषोऽर्थादीश्वरोऽपि

प्रमेयकोटावेव परिगणितो भवति । पुरुषस्य यथार्थस्वरूपं संगरहितमुदासीनञ्चापि भवति । पुरुषमर्थात् चितिशक्तिः सांख्ययोगदर्शनयोरप्यपरिणामी, अप्रति-संक्रमा, दर्शितविषया, शुद्धा अनन्ता चाप्युच्यते । परमार्थतः पुरुषः प्रकृत्य-पेक्षया सर्वथा असंगः उदासीन एव वर्तते, किन्तु अनादिकालात् प्रकृतिपुरुषयोः संयोग स्वरूपविवेकस्य कारणात् अर्थात् पुरुषस्य प्रकृत्या मिथ्यासम्बन्धस्य भावना-कारणात् पुरुषः आत्मानं बन्धने अनुभवति, किन्तु प्रकृतिः पुरुषस्य अन्यथा-ख्यातिरर्थात् विवेकख्यातिरुत्पन्नात्परं पुरुषः स्वपरमार्थस्वरूपे स्थितो भवति पुनश्च सः प्रकृत्या कामपि सम्बन्धिं नानुभवति । सः प्रकृतेः पृथक् स्वकैवल्यस्वरूपे स्थितो भवति । एतस्या स्वस्थितेर्नामकैवल्यं मोक्ष इति वा वर्तते । सांख्ययोगदर्शने त्रिप्रकारकस्य दुःखस्य उल्लेखः वर्तते - 1. आधिदैविक, 2. आधिभौतिक, 3. आध्यात्मिकदुःखञ्च । एषां दुःखत्रयाणामात्यन्तिकनिवृत्तये विवेकख्याते रुत्पत्तिरावश्यकी, यतो हि विवेकख्यातिरेवतस्या अविद्यायाः अविवेकस्य वा विरोधिनी वर्तते या अनादिकालादेव संगरहितमपि पुरुषं भोक्तृत्वरूपं प्रदायावस्थापयति ।

सांख्ययोगदर्शने प्रकृतिः त्रिगुणात्मिकात्वेन परिगणिता वर्तते । सत्त्वरजस्तमसामेषां त्रयाणां गुणानां साम्यावस्थायाः नामप्रकृतिः प्रधानं वा वर्तते । सर्ग [सृष्टि] क्रमे मूलप्रकृतेर्मुपादानं कारणमस्ति महत्तत्त्वमर्थात् समष्टिबुद्धिरुत्पद्यते । अहंकारादेव पंचज्ञानेन्द्रियाणि, पंचकर्मेन्द्रियाणि, मन-स्तथा पंचतन्मात्राश्च मिलित्वा एषां षोडशतत्त्वानाम् एको गणः उत्पद्यते। एतस्मिन् षोडशके गणे यो पञ्चभूतपंचशब्दः स्पर्शरूपरसगन्धाख्याः पञ्चतन्मात्राः

सन्ति, तेभ्यश्च क्रमाद् आकाश, वायु, तेज, जल, पृथ्वीत्यादिपञ्चमहाभूतानामुत्पत्तिर्भवति । इत्थञ्च शब्द तन्मात्रातः आकाशोत्पत्तिः शब्दतन्मात्रा सहित स्पर्शतन्मात्रातः वायोरुत्पत्तिः शब्दस्पर्शतन्मात्रा सहित रूपतन्मात्रातः तेजस उत्पत्तिः, शब्दस्पर्शतन्मात्रा सहित रसतन्मात्रातः जलस्योत्पत्तिः, शब्दस्पर्शरूपरसतन्मात्रा सहितगन्धतन्मात्रातः पृथ्वीभूतस्योत्पत्तिः जायते ।

इत्थमेतेषां स्थूलपंचभूतानामुत्पत्तौ स्व-स्वतन्मात्राभिः सह पूर्व-पूर्वस्य तन्मात्रा अपि स्वीयमंशप्रदानं करोति । इत्थञ्च शब्दस्पर्शरूपरसगन्धगुणवती पृथ्वीगन्धतन्मात्रायाः प्राधान्यदृष्ट्या गन्धतन्मात्रातः उत्पन्नेति वक्तुं शक्यते ।

सांख्यदर्शने प्रकृतेः कार्यं पुरुषस्य कृते भोगमोक्षप्रदानं स्वीकृतमस्ति । सत्कार्यमिव परिणामिनी प्रकृतिः महदहंकारादिक्रमेण प्रारभ्य स्थूलभूतपर्यन्तं परिणामं प्राप्नोति । भोगस्य विवेकस्य च कार्यसम्पादनानन्तरं प्रकृतिः पुरुषात् पृथग्भूता भवति । प्रकृतिपुरुषयोरनादिः संयोगः समाप्तो भवति पुरुषश्च स्वासंयोदासीनत्वे स्थितो भवति । एतस्य संयोगस्य नाशार्थं प्रकृतिपुरुषयोर्विवेकख्यातिरावश्यकी ।

प्रकृतेः परिणामेषु पंचज्ञानेन्द्रियपंचकर्मेन्द्रियमनसामप्युल्लेखः उपरि कृतो वर्तते । एतेषामेकादशवस्तूनां सृष्टौ अभिमानस्याहंकारस्यैव परिणामोऽथवा कार्यमस्ति । सांख्यदर्शने अहंकाराद् द्विप्रकारकः सर्गः स्वीकृतो वर्तते ।

अभिमानी अहंकारः तस्मात् द्विविधः प्रवर्तते सर्गः ।

एकादशकश्च गणस्तन्मात्रः पंचकश्चैव ।।[1]

सात्त्विकाहंकारनामकोपादानकारणात् ज्ञानेन्द्रियाण्युत्पद्यन्ते, रूपस्योपलब्धि-हेतुभूतं चक्षुः भवति, गन्धोपलब्धिहेतुर्नासिका भवति, एवमेवान्यानि ज्ञानेन्द्रि-याणि स्व-स्वविषयोपलब्धि [ज्ञान] हेतुभूतानि भवन्तीति कथितं भवति । मनसः उत्पत्तेः कारणमपि अहंकार एवास्ति, किन्तु एतदुभयात्मकेन्द्रिय [ज्ञान, कर्मे-न्द्रिय] योर्भेदोऽस्ति यतो हि मनः संकल्पविकल्पात्मकमुभयमपि भवति इन्द्रि-याणाञ्च सजातीयकारणादिन्द्रियमपि भवति । इत्थञ्च मनः ज्ञानेन्द्रियकर्मे-न्द्रियोभयात्मकमुच्यते । मनसा संयुक्तानि सन्ति चक्षुरादिज्ञानेन्द्रियाणि तथा वागादिकर्मेन्द्रियाणि स्व-स्वक्रियायां ज्ञाने प्रवर्तन्ते । अत एव सांख्यतत्त्व-कौमुदीकारः आचार्यवाचस्पतिमिश्रः उक्तवान् -

"संकल्पकमनः इति । संकल्पेनरूपेण मनो लक्ष्यते ।
आलोचितमिन्द्रियेण वस्तु "इदम्" इति सम्मुग्धम् ।
"इदमेवम्, नैवम्" इति सम्यक् कल्पयति विशेषणविशेष्य-
भावेन विवेचयतीति यावत्[2] ।"

सर्वतः प्रथमं चक्षुरादीन्द्रियाणि विषयेण सह संयुक्तानि सन्ति "किञ्चिदिदं वस्त्वस्ति" इति सामान्यविशेषाभ्यां रहितमेकप्रकारकमस्पष्टं ज्ञानं यन्निर्विकल्पकं ज्ञानमित्युच्यते उत्पादयन्ति, एतत्पश्चात् मनः इदमेतादृगस्तु

- - - - - - - - - - - - - - - - - - - - - - - - - -

1. सांख्यकारिका - 24.

2. सांख्यतत्त्वकौमुदी कारिका - 27 - पृ० 146.

कारणस्याहंकारात् अन्तःकरणस्याहंकारस्यैवोपादानत्वं उपादानकारणत्वमहं-कारस्तु कारणमस्ति, किन्तु अन्तःकरणस्याहंकारः स्वोपादानकारणभूताहंकार-स्य कार्यमस्ति ।

पुरुषस्य कैवल्यप्राप्त्यर्थमत्यन्तमौदासीन्यविशिष्टत्वमेव स्था-पयितुं विवेकख्यातिः अर्थात् पुरुषप्रकृतिविवेकस्य ज्ञानमावश्यकमस्ति । बुद्धि-द्वारैवायं विवेकः ज्ञानमुत्पद्यते । अतः सांख्ययोगदर्शनस्य परमलक्ष्यभूतकैवल्यस्य प्राप्त्यर्थं सर्वतः प्रधानभूतं साधनम् अन्तःकरणस्यांगभूतो बुद्धिर्भवति । अतः एतयो-र्दर्शनयोः कैवल्यनामकपरमलक्ष्यस्य प्राप्त्यर्थं मनसः सत्तायाः स्वीकृतिराव-श्यकी अङ्गीकृता भवति । ज्ञानेन्द्रियैरागतज्ञानार्थं कर्मेन्द्रियप्रवृत्त्यर्थञ्चापि मनसः सत्ता अवश्यं स्वीकरणीया भवति । एतदेवोभयोर्दर्शनयोः मनस्सत्ता स्वीकृतेः प्रयोजनमस्ति । योगदर्शने मनसः एकाग्रता एवं निरोधद्वारा साधन-पथे अनेकयोगविभूतीनामुत्पत्तेः कारणमपि मनस्तत्त्वमेवास्ति ।

3. पूर्वमीमांसायां मनस्सत्तायाः प्रयोजनम्

मीमांसादर्शनस्य परमलक्ष्यं कर्मद्वारा स्वर्गप्राप्तिरस्ति । वेद-विहितयज्ञादिभिः धर्मः उत्पद्यते तेनैव स्वर्गस्य प्राप्तिर्भवति । आचार्य-जैमिनिमते स्वर्ग एव निःश्रेयसपदवाच्यो भवति ।

"स्वर्गप्राप्तिर्मोक्षः इति मीमांसकाः"[1]

---

1. सर्वदर्शनसंग्रह, उपोद्घात - पृ० 78.

उपर्युक्ते वाक्ये स्वर्गादीत्यनादिपदेन स्वर्गप्राप्तिः निःश्रेयस् प्राप्तिश्चापि अवगच्छति । स्वर्गस्य लक्षणं च मीमांसाशास्त्रे इत्थमस्ति -

"दुःखासम्भिन्ननिरतिशयसुखात्मकः स्वर्गो"
[विश्वजित् यागस्य फलम्]

अर्थात् स्वर्गस्तत्र भूतं निरतिशयं सुखमस्ति यत्र दुःखस्य सर्वथा अभाव एव भवति। अयं स्वर्गः, यजमानस्य पुरुषस्य फलमस्ति यथा विश्वजिद्यागस्य फलं स्वर्ग इत्युच्यते। श्रमेणान्ये यागा एवम्भूताः सन्ति येषां किमपि फलं नास्ति तत्रापि स्वर्गफलस्य कल्पना क्रियते -

"विश्वजिन्न्याये अश्रुतस्यापि स्वर्गस्य कल्पयितुं शक्यत्वात् ।
यथा स स्वर्गः सर्वान् प्रत्यविशिष्टत्वात् ।"[1]

इत्थञ्च मीमांसायाः परमलक्ष्यं स्वर्गो निःश्रेयस प्राप्तिर्वा विद्यते । उभयो-रप्यवस्थयोः दुःखस्यात्यन्तिकनिवृत्तिः स्वीकृता यतो । एतस्मिन् सति स्वर्गस्य लक्षणमित्थं कृतमस्ति -

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ।।"[2]

स्वर्गस्य सुखतारतम्यत्वात् क्षयिष्णुः स्वीकृतो यतो । अतोऽ-भ्युदयान्तर्गतं स्वर्गस्य स्थापनमधिकं युक्तिसंगतं प्रतीयते । निःश्रेयस मोक्ष एव वा मीमांसायाः परमलक्ष्यत्वेनाङ्गीकरणीय इति कतिपयमीमांसकानां मतमस्ति।

---

1. जै० सू० - 4/3/13.
2. मीमांसादर्शन, आनन्दाश्रम प्रेस, पूना - पृ० 13.

"मीमांसादर्शने" श्रेयःपदार्थः द्विधा स्वीकृतो वर्तते । वेद-विहितप्रवृत्त्यर्थं प्रयुक्तसाधनामपि विधिरित्युच्यते । विधेः यो विषयस्तस्यैव नाम श्रेयस इति वर्तते । वेदे यन्निर्दिष्टं तदेवास्माकं काम्यं भवति । अयञ्च श्रेय-पदार्थः द्विधा विभक्तो वर्तते, यथा- 1. अभ्युदयः, 2. निःश्रेयस इति च । स्वर्गसुखप्रभृतिदिव्यसुखस्य नामाभ्युदयोऽस्ति । निःश्रेयसशब्दार्थो मोक्षः । मीमांसादर्शनं प्रपञ्चं पारमार्थिकं सत्यमङ्गीकरोति । अतो निःश्रेयसस्य मोक्षस्य वा अर्थः प्रपञ्चसम्बन्धविलयोऽस्ति, प्रपञ्चस्य विलयो नास्ति । प्रपञ्चः मिथ्याज्ञानजन्यो न भवति । अतः प्रपञ्चस्यात्यन्तिक विलयोऽपि मीमांसादर्शनं नैव स्वीकरोति । मीमांसादर्शनं न च नूतनां सृष्टिमङ्गीकरोति न चात्यन्तिकप्रलय एव वा । अतः एतस्मिन् दर्शने सृष्टिस्थितिविनाशार्थं-मीश्वरस्य कल्पनायाश्च किमपि स्थानं नास्ति । वैशेषिकदर्शनेऽपि श्रेयसः एतदेव-स्वरूपं लक्षितं वर्तते -

"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"[1]

अर्थात् धर्मस्तथाभूतः पदार्थो वर्तते येन- 1. अभ्युदयः, 2. निःश्रेयसस्य सिद्धिर्भवति । मीमांसादर्शनस्य प्रारम्भ एव धर्मजिज्ञासया भवति । उपर्युक्तमस्ति यज्जन्यस्वर्ग स्वाभ्युदयपदवाच्यो भवति ।

मीमांसादर्शने षट् प्रमाणानि स्वीकृतानि वर्तन्ते- प्रत्यक्षानुमानो-पमानशब्द [आगम] अर्थापत्ति अनुपलब्धयश्चेति । वैशेषिकदर्शने कथितानां नव-

---

1. कणादकृतं वैशेषिकसूत्रम् - 1/2.

द्रव्याणां स्थाने मीमांसकैः निम्नलिखितानि द्रव्याणि स्वीकृतानि सन्ति, यथा- पृथ्वी, जल, तेज, वायु, तम [अन्धकार], आकाश, काल, दिक्, आत्मा, मन तथा शब्दश्चेति । एतेषु एकादशपदार्थेष्वेव मीमांसकानां मनोन्यनुरक्ति ।

मीमांसादर्शनस्य चरमं लक्ष्यं निःश्रेयसप्राप्तिरेवास्ति । वैशेषिकदर्शने मोक्षावस्थायां जीवे सुखानन्दज्ञानानामभाव एव सर्वथा तिष्ठति । दुःखस्यात्यन्तिकनाशः [अभावः] अवश्यमेव भवति किन्तु भाट्टमते प्रपंचसंबन्धस्य विलय एव मोक्षोऽस्ति, प्रभाकरमते चात्यन्तिकदेहस्योच्छेदोनाश एव वा मोक्षपदवाच्यो भवति ।

"आत्यन्तिकस्तु देहोच्छेदो मोक्षः"[1]

इत्थञ्च मीमांसादर्शने यो हि मोक्षः प्राप्यते, तत्रानन्दसुखाभ्यां सम्बन्धाभाव एव जायते ।

"तस्मात् निःसम्बन्धो निरानन्दश्च मोक्षः"[2]

एतस्मिन् दर्शने मनुष्यस्य बन्धनस्य कारणं प्रपञ्च एवास्ति । अयं प्रपञ्चः त्रिधा बन्धनस्य कारणं भवति - 1. भोगायतनशरीर, 2. भोगसाधनेन्द्रिय, 3. भोग्यविषय - शब्दस्पर्शरूपरसादि । एभिस्त्रिभिः मनुष्याः सुखदुःखयोर्विविधैः तापाद्यनुभवनाः बन्धनबद्धाः भवन्ति । अतः एषां त्रयाणामात्यन्तिकसम्बन्धनाशादेव मुक्तिरुपलभ्यते । मुक्तौ जीवे आत्मज्ञानन्तु नैव कदापि

---

1. प्रकरणपंचिका - पृ0 156.   2. शास्त्रदीपिका - पृ0 125.

तिष्ठति, किन्तु ज्ञानशक्तिमात्रमवशिष्टं भवति, तथा जीवस्य सत्ताद्रव्यत्वादि-धर्मादयोऽपि तत्र तिष्ठन्त्येव । एतदीयास्मिन् दशि आत्मनो नित्यं स्वरूपमस्ति। शास्त्रदीपिकायामिदं तथ्यमेतेन प्रकारेणोक्तमस्ति –

"यदस्य स्वं नैजं रूपं ज्ञानशक्तिसत्ताद्रव्यत्वादिभिरन्वतिष्ठते"[1]

अभ्युदयनिःश्रेयसात्मकफलद्वयस्य प्राप्त्यर्थमस्मिन् दर्शने धर्मः सत्ता तथैव स्वीकृता यथा न्यायवैशेषिकदर्शने । देहस्यात्यन्तिकोच्छेदस्यार्थः जन्मनो नाश एवास्ति । कर्मफलानामुपभोगेन धर्माधर्मयोः क्षयो जायते तथा धर्माधर्मयोर्नाशे सति पुनः नूतनेन शरीरेण सह सम्बन्धोऽपि नैव जायते । जीवस्योपर्युक्त स्वरूपे अवस्थितो भवति । प्रभाकरस्येदं मतमस्ति यद्धर्माधर्मयोः क्षयः केवलमुपभोगेन नैव जायतेऽपि तु धर्माधर्मयोर्नाशार्थं शमदमब्रह्मचर्यादियोगाङ्गानामनुष्ठानद्वारा प्राप्तात्मज्ञानमपि आवश्यकमस्ति । स्वर्गेच्छुकस्य प्राप्त्यर्थं विहितनित्यनैमित्तिककर्मणामनुष्ठानं निषिद्धकर्मणां निषेधश्चापि भवति । धर्माधर्मोपभोगार्थं मन एकमात्रं साधनमस्ति यतोहि मनस्येव योगेन सुखस्येव दुःखस्योपभोगात् धर्माधर्मौ विनश्यतः । एवमेव मीमांसादर्शनेऽपि स्वाध्यायाध्ययनार्थं, यज्ञादिकर्मणामनुष्ठानार्थं, सुखदुःखादिभोगार्थञ्च मनसः स्वीकृतिरपरिहार्यैव वर्तते । मीमांसादर्शने स्वर्गसुखार्थं नरकादौ च आत्मदुःखभोगार्थं मन एकमात्रं साधनं वर्तते । केवलं दुःखात्यन्तनिवृत्तिरेव पुरुषार्थपदेन नैव वक्तुं शक्यते । नारायणभट्टमानमेयोदये एतत्तथ्यमेतेन प्रकारेणोक्तमस्ति-

---

1. शास्त्रदीपिका – पृ० 130.

"दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः ।
सुखस्य मनसा भुक्तिर्मुक्तिरुक्ता कुमारिलैः ॥"

मोक्षे सुखभोगस्य कारणं मनोऽस्ति यद् देहेन्द्रियादि आत्यन्तिकपरिध्वंसस्य-सहकारिकारणीभूतमस्ति ।

"देहेन्द्रियादीनां आत्यन्तिकपरिध्वंसानुगृहीतं मनः तत्सुखसाधनम्"

एतेन निर्देशेनेदं स्पष्टमेव प्रतिभाति यद् मीमांसादर्शने मनसः सत्तां स्वीकृतिं विना आत्मगतानन्दस्य सुखोपभोगस्यापि च सम्भावना नास्ति ।

न्यायवैशेषिकदर्शने मनो अणुरूपेण स्वीकृतमस्ति, किन्तु मीमांसादर्शनं मनः सांख्ययोगदर्शनमिव विभुरूपमङ्गीकरोति । यथा - "सुखाद्यपरोक्षसाधनेन्द्रियत्वेन कल्प्यमन्तरिन्द्रियं विभु परिमाणम्, अस्पन्दं च मनः ।"

अर्थात् सुखादेरपरोक्षज्ञानस्य साधनं यदन्तरिन्द्रियं वर्तते तन्मनः पदवाच्यं भवति, अस्य परिमाणं विभु अस्ति, इदञ्च मनः क्रियारहितमस्ति मनोविषयकान्यद्वर्णनं शोधप्रबन्धेऽस्मिन् यथास्थानं विधास्यते ।

५. उत्तरमीमांसायां (वेदान्तदर्शने) मनस्सत्तायाः प्रयोजनम्

वेदान्तदर्शनस्य परमं लक्ष्यमपि दुःखस्यात्यन्तिकनिवृत्तिपूर्वक-परमानन्दप्राप्तिरेवास्ति । वेदान्तदर्शने आचार्यबादरायणः ब्रह्मणः स्वरूपं

---

1. मानमेयोदयः - पृ0 212.

सच्चिदानन्दरूपं तत्त्वज्ञानानन्तरूपं च प्रतिपादयति । अतो जीवस्य बन्धन-कारणमविद्या अर्थात् माया भवति । जीवब्रह्मणोरभेदः शाङ्करदर्शने स्वीकृतो भवति । अतो जीवस्य बन्धनकारणमपि अविद्या अर्थात् मायैव भवति । एतस्या अविद्यायाः निवृत्तिः श्रवणमनननिदिध्यासनद्वारा आत्मज्ञानेनार्थात् तत्त्व-ज्ञानेन जायते । एतस्य तत्त्वज्ञानस्योत्पादनार्थं त्रयाणां साधनानां कृते मनसः स्वीकृतिरावश्यकी । श्रुतिवाक्यैरात्मनः स्वरूपं श्रूयते । मननार्थमुपपत्तिर्भवति अर्थात् श्रवणद्वारा आत्मस्वरूपस्य निर्णयो भवति । उपपत्तिस्तर्को वा मनः [अन्तःकरणम्] विना नैव भवितुमर्हति । तृतीयस्य साधनस्य निदिध्यासनस्याप्य-र्थो भवति श्रवणमननाभ्यां निश्चिते आत्मस्वरूपे मनस एकाग्रीकरणम् । अतः स्पष्टमिदमस्तियत् तत्त्वज्ञानोत्पत्तये अन्तःकरणस्य अन्तरिन्द्रियस्य मनसो वा परमावश्यकता भवति । वेदान्तदर्शने इदमन्तःकरणं मध्यमपरिमाणवत् स्वीकृतं भवति, न च विभु । महावाक्यश्रवणानन्तरमन्तःकरणस्य ब्रह्मात्मस्वरूपविषयिका वृत्तिरुत्पद्यते, सा आत्मविषयकाज्ञानमर्थात् अविद्यां विनाशयति । आचार्यः सुरेश्वरः अत एव मोक्षस्य स्वरूपमविद्यायाः नाशमात्रमङ्गीकरोति । आत्म-विषयिकामविद्यामेव च "बन्ध" इत्युच्यते ।

"अविद्यास्तमयो मोक्षः स च बन्ध उदाहृतः"

अर्थात् अविद्यायाः नाश एव मोक्षोऽस्ति, इयमेव चाविद्या बन्धस्वरूपा भवति । वेदान्तदर्शने तत्त्वमसीति महावाक्यादुत्पद्यमानया विद्यया अर्थात् ज्ञानेन अविद्यानिवृत्तौ आत्मा च स्वात्मस्वरूपावस्थितो अर्थात् सच्चिदानन्दस्वरूपे स्थितो भवति । पूर्वमीमांसायां प्रपञ्चसम्बन्धस्य विलय

एव मोक्षो भवति, किन्तु वेदान्तदर्शने प्रपञ्चस्य विलय एव मोक्षो भवति । विदुषां तत्त्वज्ञानं सम्पादयितुं अन्तः सत्तास्वीकारः परमावश्यकः । महावाक्यजन्यान्तःकरणस्य वृत्तिरेवाज्ञाननाशस्य कारणं भवति । अतः स्पष्टमस्ति यदस्मिन् दर्शने मोक्षप्राप्त्यर्थमन्तःकरणस्य मनसो वा स्वीकृतिरावश्यकी भवति ।

अस्मिन्नपि दर्शने मनसश्चत्वारो भेदाः स्वीकृताः सन्ति - 1. मनस्, 2. बुद्धिः, 3. चित्तम्, एवं 4. अहंकारश्चेति ।

मायाप्रकृतिरूपा त्रिगुणात्मिका च स्वीकृता वर्तते । सांख्ययोगदर्शनमिवास्मिन्नंशे सहमतिर्वर्तते । प्रकृतिस्त्रिगुणात्मिका, समग्रप्रपञ्चश्चैतस्याः त्रिगुणात्मिकायाः प्रकृतेः कार्यमस्ति । केवलमेतावानेव भेदो वर्तते यत् अत्र तु प्रकृतिपुरुषयोरनादित्वमनन्तत्वञ्च स्वीकृतमस्ति, प्रकृतिपुरुषयोरनाद्यनन्तत्वे द्वैतापत्त्या अद्वैततत्त्वव्याघातापत्तेः । अत्र तु केवलं सच्चिदानन्दस्वरूपस्य परस्य ब्रह्मणः स्वीकृतिरस्ति । ब्रह्मैव च प्रपञ्चस्यैककारणं तत्त्वं वर्तते, ब्रह्मैवाभिन्ननिमित्तोपादानकारणं सत् समग्रप्रपञ्चस्य मूले स्थितमस्ति । अतः एतस्य दर्शनस्य नाम अद्वैतदर्शनमित्यस्ति ।

5. <u>जैनदर्शने अन्तः सत्तास्वीकृतेः प्रयोजनम्</u>

अन्यास्तिकदर्शनानामिव जैनदर्शनस्य चरमलक्ष्यमपि दुःखस्यात्यन्तिकनिवृत्तिर्मोक्षस्य प्राप्तिश्चास्ति । जैनदर्शने मोक्षस्य त्रीणि साधनानि कथितानि सन्ति - 1. सम्यग्दर्शनम्, 2. सम्यग्ज्ञानम्, तथा 3. सम्यक् चरित्रम् ।

"सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः"[1] ।

जैनदर्शने सप्तपदार्था अङ्गीकृताः सन्ति – 1. आस्रव, 2. बन्ध, 3. संवर, 4. निर्जरा, 5. मोक्ष, 6. जीव, 7. अजीव ।

जैनदर्शने बन्धनस्य कारणं कर्म अङ्गीकृतमस्ति, किन्तु ते कर्माणि अपि परमाणुरूपेणाङ्गीकुर्वन्ति । एते कर्मपरमाणव एव जीवं सर्वाङ्गीणमभि-व्याप्य दुःखमयबन्धे पातिताः सन्ति । जैनदर्शने जीवः मध्यमपरिमाणी भवति, संकोचविकासशाली चापि भवति, किन्तु अयं जीवश्चैतन्यमयो भवति, ज्ञानं तस्य साधारणलक्षणं भवति । परमार्थतस्तु जीवोऽनन्तज्ञानविशिष्टः, किन्तु कर्मणः आवरणकारणात् तस्य शुद्धं चैतन्यस्वरूपं नैव प्रतिभाति । सम्यग्ज्ञान-सम्यग्दर्शन-सम्यक्चारित्रस्य सेवनेन यदा कर्मणां सम्बन्धो विच्छिद्यते तदा जीवस्योर्ध्वगतिर्भवति । तदा च स सिद्धशिलायां गत्वा स्थितो भवति । आचार्यः उमा-स्वातिमहोदयः स्वतत्त्वार्थाधिगमसूत्रे बन्धनस्य पञ्चकारणानि स्वीकृतानि सन्ति – 1. मिथ्याज्ञानम्, [अतत्त्वे तात्त्विकबुद्धिस्थापनम्]. 2. अविरतिः [दोषैरविरतः सन् तदा तस्य संयोगस्थापनम्]. 3. प्रमादः [कर्त्तव्याकर्त्तव्यापरिज्ञानकारणात् असावधानता]. 4. कषाय [समयस्य मर्यादायाः उल्लंघनम्, 5. योगः [मानसिक, कायिक, वाचिक प्रवृत्तिचेष्टाः वा] एतैः कारणैः जीवः कर्मपरमाणून् संचिनोति बन्धनञ्चापि प्राप्नोति । एतैः कर्मभिः सम्बन्धविच्छेद एव मोक्षस्य साधनमस्ति । कर्मभिः सम्बन्धविच्छेदश्च

---

1. तत्त्वार्थाधिगमसूत्र – 1/1.

निम्नलिखितौ ग्रौर्णिकपदकौ –

[1] संवरः, अर्थादागन्तुकानां कर्मणामवरोधः । अयमपि संवरः द्विप्रकारकः – [अ] भावसंवरः, [ब] द्रव्यसंवरश्च । भावसंवरस्यार्थो भवति- तः मानसिकोद्योगः नैतिकप्रयत्नश्च, येन मुमुक्षुः कर्ममार्गमवरुन्धति । द्रव्य- संवरस्यार्थो भवति अन्नूतन पुद्गलकर्मसम्बन्धस्य निरोधः । क्रियात् पूर्वं मानस- व्यापारोऽनिवार्यः, अत एव संवरोऽपि द्विप्रकारको भवति ।

[2] एतदनन्तरं मोक्षस्य द्वितीयं सोपानं निर्जरा भवति । कर्माणि निर्वीर्यं कारयित्वा क्रमशस्तेषां कर्मणां जीर्णनिर्जीर्णीकरणं निर्जरा इति भवति । निर्जरायाः फलमेव मोक्षो भवति । समग्रकर्मणामात्यन्तिकं क्षयं विना मोक्षो नैव सम्भवः । मोक्षमधिगच्छन्नेव जीवः स्वकीयं नैसर्गिकं शुद्धं स्वरूपं प्राप्नोति । तत्र च– 1. अनन्तज्ञान, 2. अनन्तवीर्य, 3. अनन्तश्रद्धा, 4. अनन्तशान्तिरिति सद्य एवानन्तचतुष्टयानामुत्पत्तिर्भवति ।

इत्थञ्च सम्यग्ज्ञान-सम्यक्चरित्रादिसिद्ध्यर्थं मनसो स्वच्छताव- श्यकता वर्तते यतोहि मनसः सतताभ्यासपूर्तिं विना सम्यक्चरित्र, सम्यग्दर्शन [अर्थात् जैनशास्त्रेषु अचला श्रद्धा] सम्यग्ज्ञानस्य च सिद्धिर्नैव भवितुमर्हति । सम्यक्चरित्रान्तर्गतं सार्वभौमपंचमहाव्रतानां पालनं नितान्तमनिवार्यं भवति । एतानि पञ्चमहाव्रतानीत्थम्भूतानि सन्ति– 1. अहिंसा [वाक्कायमनोभिः क्वापि प्राणिनं हानिर्न दानम्]. 2. सत्य [यद्वस्तु यस्मिन् स्वरूपे विद्य- मानमस्ति तस्यैव रूपेण कथनम्]. 3. अस्तेय [अन्यस्य कस्यापि वस्तुनः तदीयाज्ञां विना न कदापि ग्रहणम्]. 4. ब्रह्मचर्य [वीर्यं रक्षन् नैष्ठिकं जीवन-

यापनम्। 5. अपरिग्रहः कस्मिन्नपि पदार्थेऽनासक्त्या अग्रहणमर्थात् तेभ्यो विरक्तिः सर्वं वैराग्यम्।[1]

उमास्वातिकृते जैनदर्शनस्य सुप्रसिद्धे ग्रन्थे "तत्त्वार्थाधिगमसूत्रे" मानवानां चत्वारो भेदाः कथिताः सन्ति- 1. अधमाधम, 2. अधम, 3. मध्यम, 4. उत्तमपुरुषश्चेति । तत्रोत्तमपुरुषस्य लक्षणमित्थम्प्रकारकं कृतमस्ति -

"परलोकहितायैव प्रवर्तते मध्यमः क्रियासु सदा ।
मोक्षायैव तु घटते विशिष्टमतिरुत्तमः पुरुषः ।।

यस्तु कृतार्थो ऽप्युत्तममवाप्य धर्मं परेभ्य उपदिशति ।
नित्यं स उत्तमेभ्योऽप्युत्तम इति पूज्यतम एव ।।"[2]

अर्थात् स उत्तमः पुरुषो भवति यो विशिष्टो यतिः भवन्नपि केवलं मोक्षार्थमेव यततेऽपि च स्वयं कृतार्थः सन्नपि अन्येभ्यः पुरुषेभ्यः उपदेशं ददाति, सः पुरुषः "उत्तमोत्तमः" अर्थात् "अर्हन्" पदवाच्यो भवति । सः सर्वैः पूजनीयो भवति । इत्थमेतस्मिन् दर्शनेऽपि जीवस्य चरमं लक्ष्यं मोक्ष एव वर्तते मनसः सत्ता स्वीकृतिं विना च मोक्षस्य साधनानां सम्यग्दर्शनादीनां सिद्धिर्नैव जायते ।

6. <u>बौद्धदर्शने मनसः सत्तास्वीकृतेः प्रयोजनम्</u>

बौद्धदर्शने निर्वाणमेव परमलक्ष्यमुक्तमस्ति । बौद्धदर्शनस्य चत्वारः

---

1. भारतीयदर्शन, बलदेव उपाध्याय - पृ0 171.
2. तत्त्वार्थाधिगमसूत्रम् - 1/5-6.

सम्प्रदायाः सन्ति -

1. वैभाषिकसम्प्रदायः - बाह्यार्थप्रत्यक्षवादस्य समर्थकः ।

2. सौत्रान्तिकमतम् - बाह्यार्थानुमेयवादस्य समर्थकः ।

3. योगाचारमतम् - विज्ञानवादस्य समर्थकः ।

4. माध्यमिकसम्प्रदायः - शून्यवादस्य समर्थकः ।

वैभाषिकाणां संसारः निर्वाणञ्चोभयमपि सत्यमस्ति । सौत्रान्तिकाणां संसारः सत्यं निर्वाणञ्चासत्यमस्ति । योगाचारः विज्ञानवादस्य यो संसारे सत्यं निर्वाणञ्च सत्यमस्ति । माध्यमिकाणां संसारो सत्यं निर्वाणञ्च-सत्यमेव भवति । "सर्वं शून्यं शून्यम्" इत्येतदेव तदीयः सिद्धान्तः । एतेषु चतुर्षु सम्प्रदायेषु "सर्वं क्षणिकं क्षणिकम्, सर्वम् अनात्मम् अनात्मम्" इत्येव एकोद्घोषो भवति । शाश्वतभूतस्यात्मनः सत्ता बौद्धदर्शनं नैव स्वीकरोति अतएव सर्वाणि वस्तूनि क्षणिकान्येवाङ्गीकरोति । पंचस्कन्धातिरिक्तोऽस्मिन् दर्शने आत्मनामकं किमपि वस्तु स्वीकृतं न भवति । रूपवेदनासंज्ञासंस्कारविज्ञानाख्याः पञ्चस्कन्धाः सन्ति । बौद्धदर्शने द्वादशायतनानि अर्थात् ज्ञानसाधनानि कथितानि सन्ति, यथा- षडिन्द्रियाणि षड्विषयाश्च । चक्षुश्रोत्रघ्राणजिह्वाकायमनआदीन्द्रियाणि अभ्यन्तरवर्तित्वात् "अध्यात्म आयतन" पदवाच्यानि भवन्ति । बाह्यानामिन्द्रियाणां विषयभूतरूपशब्दगन्धरसस्प्रष्टव्यधर्मादीनि आयतनानि [अतीन्द्रियाणि] भवन्ति । इत्यञ्च अतः स्थानमिन्द्रियेष्वेव भवति ।

भगवान् बुद्धः "आर्यसत्यचतुष्टये" सिद्धान्तं निर्दिशति -

हे भिक्षवः ? यः प्रतीत्यसमुत्पादं जानाति सः धर्मं जानाति, यश्च जानाति स बुद्धं जानाति ।

प्रतीत्यसमुत्पादस्य स्वरूपमित्थं वर्णितमस्ति - प्रतीत्यसमुत्पादो नाम यस्मिन् अस्मिन् सति इति भवति । अस्योत्पादादिदमुत्पद्यते ।

बौद्धधर्मे आर्यसत्यभेदेन चतुर्णां वर्णनमस्ति- 1. दुःखम्, 2. दुःखस्य कारणम्, 3. दुःखनिरोधो निर्वाणप्राप्तिर्वा, 4. दुःखनिरोध-गामिनीप्रतिपद् [निर्वाणप्राप्तिसाधनकर्म बुद्धप्रचारार्थसितमध्यमप्रतिपदा] अर्थात् आर्याष्टांगिकमार्गेण निर्वाणस्य प्राप्तिः ।

प्रतीत्यसमुत्पाद बौद्धकार्यकारणपरम्परायां वा मानवस्य बन्धस्य मूलकारणमविद्या अस्ति । अविद्यातः संस्कारा उत्पद्यन्ते । संस्कारात् विज्ञानम्, विज्ञानान्नामरूपम्, नामरूपात् षडायतनम्, षडायतनात्स्पर्शः, स्पर्शाद्वेदना, वेदनातः तृष्णा, तृष्णात उपादानम्, उपादानाद्भवः, भवाज्जातिः जन्म वा, जातेः जरामरणश्चोत्पद्यन्ते । एतस्याः कार्यकारण-परम्परायाः निरोधेनैतस्य महतो दुःखस्कन्धस्य निरोधो भवति । अविद्या-निरोधात् संस्कारनिरोधः, संस्कारनिरोधाद् विज्ञाननिरोधः, विज्ञान-निरोधाद् नामरूपनिरोधः, नामरूपनिरोधात् षडायतननिरोधः, षडायतन-निरोधात् स्पर्शनिरोधः, स्पर्शनिरोधाद् वेदना निरोधः, वेदना निरोधात् तृष्णानिरोधः, तृष्णानिरोधात् उपादाननिरोधः, उपादाननिरोधात् भव-निरोधः, भवनिरोधात् जाति[जन्म]निरोधः, जातिनिरोधाज्जरामरणशोक-परिदेवदुःखदौर्मनस्य तथान्यापायानामपि निरोधो जायते इत्थमेतस्य दुःख-

स्कन्धस्य निरोधो भवति । तथा च निर्वाणस्य मुख्यकारणभूतायाः अविद्यायाः निरोधो भवति । बौद्धमतेऽपि दुःखात्यन्ताभावस्य निर्वाणमेव परमं लक्ष्यमस्ति । दुःखस्य मूलं कारणमविद्यैव वर्तते । एतदर्थं भगवता बुद्धेन आर्याष्टांगिकस्य मार्गस्य निरूपणं कृतमस्ति । यथा - 1. सम्यक् ज्ञानम् [आर्यसत्यानां ज्ञानम्]. 2. सम्यक् संकल्पः [दृढ-निश्चयः] 3. सम्यक् वचनम् [सत्यवचनम्]. 4. सम्यक् कर्मान्तः [हिंसाद्रोहदुराचरणादिरहितं कर्म]. 5. सम्यक् आजीव [न्यायपूर्वकजीविका]. 6. सम्यक् व्यायामः [सततं हितकरणं न तु कदापि अहितकरणम्]. 7. सम्यक् स्मृतिः [चित्तशरीरवेदना इत्यादितो शुचित्, अनित्यत्वोपलब्धेः लोभादिचित्तसन्तापाच्च पृथक् स्थापनम्]. 8. सम्यक् समाधिः [रागद्वेषादिदुर्भावनाविनिर्मुक्तस्य चित्तस्य शुभैकाग्रिकता] ।

एतस्य अष्टांगमार्गस्य सम्यक्सेवनेन प्रज्ञा उदेति निर्वाणस्य च सद्यः प्राप्तिर्भवति । शीलसमाधिप्रज्ञेति बौद्धधर्मे "त्रिरत्न" रूपेणोक्ता अस्ति। बाह्यप्रतीत्यसमुत्पादस्य षट्प्रत्ययोपनिबन्धेतिनाम प्रदत्तमस्ति. तत्र षड्धातूनां समवायस्य वर्णनमस्ति अनेन च समवायेन पृथ्व्यादिषड्धातवः तत्र उत्पद्यमानस्य शरीरस्य समापेक्षा भवति । आकाशधातोः कायोत्पत्तिः, पंचविज्ञानकायसंयुक्तसाश्रवसहितमनोविज्ञानस्याप्युत्पत्तिर्भवति, एतस्यैव च "विज्ञानधातुः" इत्युच्यते ।

"पंचविज्ञानकायसंयुक्तं साश्रवं च मनोविज्ञानम्" अयं उच्यते विज्ञानधातुः ।[1]"

---

1. आर्यशालिस्तम्बसूत्र - पृ0 8.

बौद्धधर्मे शाश्वततत्त्वेनात्मनः स्वीकृतिर्नास्ति । अस्मिन्नेव सूत्रे कथितमस्ति यत् पुद्गलसंज्ञा, मानवसंज्ञा, अहंकारममकारसंज्ञाः, अज्ञानादेवोत्पद्यन्ते । यथा -

"एवमविद्यायां सत्यां विषयेषु रागद्वेषमोहाः प्रवर्तन्ते । तत्र ये रागद्वेषमोहाः विषयेषु अमी अविद्या प्रत्ययाः संस्कारा उच्यन्ते ।"[1]

एवं वर्णनेनेदं स्पष्टमेव प्रतीयते यज्जन्मनः बन्धनस्य मुख्यं कारणमविद्या अज्ञानमेव वा भवति सम्यग्ज्ञानेनैव च तेषां बन्धनानां निवृत्तिरङ्गीकृता भवति । सांख्ययोगदर्शनमिव बौद्धदर्शनेऽपि अविद्या-तृष्णा इत्यादि क्लेशमलस्य कारणात् संस्कारादेः हेतुरूपेणोक्ताः सन्ति । अविद्यासंस्कारादेः इदं ज्ञानं नासीत् यत् अहं स्वीयं कर्मोपादायामि । अतः आत्मनः आवश्यकता नास्ति । अतः पंचस्कन्धाद्भिन्नः बौद्धधर्मं कमपि शाश्वतमात्मानं नैव स्वीकरोति ।

मनोविज्ञानयोरेतत्समग्रप्रक्रियायामत्यन्तमावश्यकतास्ति यतो मनोविज्ञानं विना प्रतीत्यसमुत्पाद एव न स्यात्, न च सम्यग्रूपेण अष्टाङ्गिकयोगस्य निर्माणमपि भवेत् यो हि निर्वाणहेतुः भवति । अतो बौद्धदर्शनेऽपि निर्वाणस्य परमलक्ष्यस्य प्राप्त्यर्थं मनसो विज्ञानस्य च स्वीकृतिरावश्यकी ।

विज्ञानवादिनो बौद्धास्तु केवलं विज्ञान (बुद्धि) मेव सत्तां स्वीकरोति । विज्ञानमेव ज्ञातृ-ज्ञेयरूपेण च बाह्यार्थरूपेणापि प्रतीयते । प्रति-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. आर्यशालिस्तम्बसूत्रे - पृ० 10.

क्षणभङ्गशीलाया एतस्याः धारायाः निरोध एव च निर्वाणोऽस्ति । शून्य-वादे विज्ञान सत्ता अपि स्वीकृतानास्ति । अतस्तेषां मते निर्वाणमपि शून्यं जगदपि शून्यरूपमेवास्ति ।

मनसो भावनाद्वारैव शून्यस्य भावना स्थिरा भवति । एत-स्याः भावनायाः परिपुष्ट्यर्थं बौद्धसाधनायां समाधेः महत्त्वपूर्णं स्थानं प्रदत्तमस्ति ।

इदानीं यावदास्तिकदर्शनानां परमलक्ष्यस्य मोक्षस्य सिद्ध्यर्थं मनस्सत्तास्वीकृतिस्तदीयप्रयोजनस्य च निरूपणं कृतमस्ति । वस्तुतः सामान्यरूपेण समस्तं दर्शनशास्त्रं विचारमार्ग एव वर्तते । मानवस्य बौद्धिकीं चेतनां विना न कस्यापि दर्शनस्य पदार्थनिरूपणमेव सम्भाव्यते न च बाह्ये-न्द्रियद्वारोपलब्धज्ञानप्रक्रियायाः व्याख्या अपि भवितुमर्हति । जीवनस्य जाग्रत् स्वप्नसुषुप्त्याद्यवस्थायाः व्याख्या अपि मनसः सत्ता स्वीकृत्या-धारिता वर्तते । अतो बाह्याः सर्वा अपि क्रियाकलापाः मनसः आधारेणैव सम्भाव्यते । मनसः महत्त्वं पूर्वं वर्णयन् निर्देशः कृतो वर्तते यद् मनोऽभावे "न किंचन कर्म क्रियते" अर्थात् किमपि कार्यं नैव कर्तुं शक्यते ।

उपरिनिर्दिष्टास्तिकदर्शनेषु मनसः सत्तास्वीकृतेः प्रयोजनं वर्णयित्वा समन्वयं प्रति अर्थात् तदीयामेकतां संकेतयति येन सर्वाण्यपि आस्तिकदर्शनानि एकस्यैव लक्ष्यप्राप्तेः विभिन्नाः मार्गाः सिध्यन्ति । व्यक्तीनां भिन्न-भिन्न मनः कारणात् तेषां मनसाञ्च भिन्न-भिन्न-विकासावस्थाकारणाच्चाधिकारिभेद स्वीकारः परमावश्यकः सञ्जातः ।

भारतीयदर्शने अधिकारिभेदानुसारमुपदेशभेदोऽपि स्वीकृतो वर्तते । पन्थानो विभिन्नाः, किन्तु गन्तव्यस्थानमर्थात् आत्यन्तिकदुःखनिवृत्तिद्वारा परमानन्दप्राप्तिरूपं लक्ष्यमेकमेवास्ति ।

एतन्मुख्यप्रयोजनातिरिक्तं सर्वेष्वास्तिकदर्शनेषु व्यावहारिकज्ञानक्रिया तथा चेष्टादीनां कृते मनसः सत्ता स्वीकृतिः स्वीकृता वर्तते । इत्थञ्च लौकिकपारलौकिकप्रयोजनद्वय सिद्ध्यर्थं मनस्तत्त्वमेकमपरिहार्यं समुक्तं वर्तते ।

॥ इति प्रथमोऽध्यायः ॥



सम्प्रदायेषु मनस उत्पत्तिमधिकृत्य विचारो भविष्यति ।

3. येषु दर्शनेषु मनसो नित्यसंस्काराणां वा प्रवाहोऽङ्गीकृतो वर्तते तस्य पृथग्विवेकं विवेचनीयं भविष्यति ।

4. मनसोऽन्तःकरणस्य ऐन्द्रियानिन्द्रियत्वे बहुदार्शनिकं विवेचनं जातम्, तत्रापि ध्यानदानं नितान्तमावश्यकं प्रतिभाति ।

5. येषु दर्शनेषु आत्मनः सत्ता स्वीकृता वर्तते, तथा च बाह्यसंसारस्य सम्बन्धोऽस्या बाह्यजगतो विषयाणां ज्ञानार्थं बाह्यकरणं, बाह्ये-न्द्रियं अन्तरिन्द्रियं [अन्तःकरण]दीनामसाधारणकारणताम[करण]-मधिकृत्यापि विचारः आवश्यक एव भवति ।

6. अतो भारतीयतत्त्वदर्शनस्य आत्मतृप्तिसुखदुःखादिज्ञानोत्पत्त्यादि-प्रमाणप्रमेयस्य सन्दर्भे मनस उपयोगिता स्थानमहत्त्वादीनां विवेचनमपि परममावश्यकमिव प्रतिभाति ।

इदं वस्तुतः तथ्यमस्ति यत् संस्कृतसाहित्ये यत्र चतुर्दशविद्यानां छान्दोग्योपनिषदि च नारदद्वारा अधीतविद्यानामुल्लेखो भवत् तत्र मनो-विज्ञानस्य मनोविद्यानामकस्य कस्यापि पृथक् शास्त्रस्योल्लेखो वा कस्यापि ग्रन्थरचनास्य नामोल्लिखितत्वेन नोपलभ्यते । एततथ्यमधिकृत्य "प्राचीन-भारतीयमनोविद्या" नामकग्रन्थस्य निवेदने श्रीजितेन्द्रचन्द्रभारतिमहोदयस्य निम्नलिखितपंक्तयोऽत्रावलोक्याः सन्ति ।

"सुदीर्घकालपर्यन्तं भारतीयदर्शनशास्त्राध्ययनकाले इयं वार्ता वारम्वारमुत्थिता आसीत् यद् भारतीयशास्त्रसमूहे अनात्मतत्त्वविषयकालोच-नायां जातायां विशेषेण पाते च सति संस्कृतसाहित्ये मनोविज्ञाननामकं मनो-विद्यानामकं वा किमपि शास्त्रं ग्रन्थो वा नास्ति।" [प्राचीनभारतीयमनो-

प्रिया [हिमांशुशास्त्री] "निवेदन" पृ० ११]

१. भारतीयदर्शनपाश्चात्यदर्शनानाञ्च भिन्नो भेदः

[क] भारतीयास्तिकदर्शनानां समन्वयात्मिका दृष्टिः -

अनादिकालादेव एतत्सत्यं भवति यत् सर्वेषु भारतीयतत्त्वदर्शनेषु सदैव समन्वयात्मिका दृष्टिरासीत् । धर्मशास्त्रन्यायशास्त्रादिविषया अपि भारतीयशास्त्रान्तर्गता एव विवेचिताः सन्ति, किन्तु पाश्चात्यदर्शनेषु धर्म-शास्त्रनीतिशास्त्रतर्कशास्त्रतत्त्वदर्शनादीनां पृथक्-पृथक् विभागाः कृताः सन्ति। अतएव प्रधानतया कारणमिदमप्यस्ति यत् सकलभारतीयदर्शनानां लक्ष्यमुद्देश्यं वा सुनिश्चितमेवास्ति । अर्थात् आत्यन्तिकदुःखनिवृत्तिपूर्वकं जन्ममरणचक्रात् विमुच्य शाश्वतसुखस्य प्राप्तिरेवान्तरात्मानां प्रायः सर्वेषां दर्शनानां सुनिश्चितं ध्येय-मासीत् । तस्मादेव कारणाच्च भारतीयानि सर्वाण्यपि दर्शनानि अनया-दृष्ट्या समन्वयात्मकान्येव भवन्ति । श्रीमान् मैक्समूलरमहोदयोऽपि एतत्तथ्यं स्वीकृतवान् -

भारतीय षड्दर्शन तथा जैनबौद्धदर्शनानामप्येकमेव लक्ष्यमस्ति दुःखत्रयात्यन्तिकनाशः, मोक्षप्राप्तिश्च । अनया दृष्ट्या वक्तुं शक्यते यत् सर्वेषु भारतीयास्तिकदर्शनेषु अन्तर्निहिता समन्वयात्मिका भावना वर्तते ।

In ~~xxx~~ this respect all the six systems of Philosophy are alike, they always promise to their fallowers or their believers attainment of the highest bliss that can be aftained by man. The approaches leading

to that bliss very and the character also of the promised bliss is not always the same; yet in each of the six-sys$ems philosophy is recommended not, as with us, for the sake of knowldege, but for the highest purpose that man can strive after in this life, that is, his own salvation.[1]

विचारयुगाने एवं भौतिकचेतनायुगाने विशिष्टे सत्यपि भारतवर्षस्य दर्शनशास्त्रं पाश्चात्यदर्शनशास्त्रमिव केवलं बौद्धिकचिन्तनमात्रमेव नास्ति। अतो यत्र पाश्चात्याः दार्शनिकसम्प्रदायाः [ Schools of Philosophy ] तदधीनाः सन्तः स्वतन्त्रविचारशक्तिप्रेरणया प्रवर्तिताः सन्तः, चिन्तनस्य विविधानामवस्थानामपूर्णतामन्वीक्ष्य विशालताम्प्राप्तवन्तः संकीर्णानि दर्शनशास्त्राणि स्वस्वसम्प्रदायगतकुटेरभावे केवलं बौद्धिकव्यायामरूपेण [इण्टेलेक्चुअल जिमनास्टिक] सिद्धानि सन्ति । पाश्चात्यस्य दार्शनिकं चिन्तनमधुनाऽपि केवलबौद्धिकतायाः अन्वेषणे भ्रान्तं दिशाहीनं च सत् इतस्ततः पर्यटनमनुभवति । एतानि दर्शनानि केवलं बौद्धिकविलासमात्ररूपेणैव सिद्धानि सन्ति । अनेन एतानि चिन्तनानि केवलं चिन्तनार्थमेव सन्ति यानि प्रायः प्रायः निरंकुशोत्प्रेक्षासु भावनासु चाधारितानि सन्ति । बौद्धिकोत्तेजनायाः प्रत्युत्पन्नतया विभाता तेभ्यः केवलं नव-नव दार्शनिकसम्प्रदायानां स्थापनायैव

---

1. Indian Philosophy : Nyaya nad Vaiseshika.
   - By Friedrich Max Mullar, P - 9.

Main problem and the chief type of solution are almost ar old as civilization. What has changed are ratherly methods of study and the attitude adopted. Little by little man's thoughts about his nature have developed from the crude speculations of primitive triber into the traditional thought and dogmas of local geology, than into a topic of critical and philosophical analysisand finally into a systematic branch of natural science, with laboratories, instruments and research techniques of its own.S To this progressive evalution almost every civilized nation has made some contribution varying with race, geography, climate and its history.[1]

किन्तु भारतीय मनीषिकृतां विकासस्योपरि किंचित् क्रमः प्रायः स्वीकृतो नास्ति अपितु एका धारणा विरुद्धा अपि वर्तते । भारते, मानवकल्याणमनोत्कृष्टमानसिक-आध्यात्मिकावस्थाभिः क्रमशः युगानुसारं ह्रास एव गतिशीलोऽभवत् इति धारणा वर्तते । सम्भवतः अत एव च भारतीयदार्शनिकचिन्तकाः आप्तवचनानां वेदोपनिषदादीनामध्ययनेन बलं ददति । भारतीयमनस्तत्त्वविषयेऽपि अत्यन्तोत्कृष्टतागर्भितविचारधारा च वेदेषु उपनिषत्सु चोपलब्धा वर्तते । मनस्तत्त्वविषयकान्तरिकविषये अपि अन्तर्दृष्टिमन्तो भारतीयाः मनीषिणः ध्यानयोगसाधनेन च बलं ददति ।

पाश्चात्त्यचिन्तने प्राकृतिकाः विद्वांसः पाश्चात्त्यचिन्तनं बहिर्मुखी, कृतवन्तः । अद्यापि च ते विद्वांसः मनस्तत्त्वमपि अन्तर्क्रियामपि

---

1. Encyclopaedia Brittanica - ~~Zyxkugz~~ Psychology Vol. 18, P. 783.

शरीरं परीक्षणानां साहाय्येन स्थूलरूपतो अवेतुं प्रयतन्ते । मस्तिष्कस्य चिकित्सकेन्द्राणां नाडीसंस्थानस्य च मनस्तत्त्वं प्रतिष्ठाप्य मनोविज्ञानस्य क्षेत्रे नूतनाः-नूतनाः उद्भावनाः उद्भावितवन्तः । भौतिकवादस्य पुनर्जागर्तिकारणात् शारीरिकविज्ञानस्य जीवविज्ञानस्य च साहाय्येन मनोविज्ञानिकस्य प्रयोगात्मकमनोविज्ञानस्य स्वरूपं प्रदत्तमस्ति । एतस्मिन् क्षेत्रे ते यथा अद्भुतसाफल्यं प्राप्तवन्तस्तत्सर्वदा अस्वीकरणीयमेव भाति ।

भारतीयमनोविज्ञानस्य दृष्टेः समन्वयात्मककारणात् यत्र भारतीय मनोवैज्ञानिकानामेकाः पाश्चात्त्यमनोवैज्ञानिकानामुपलब्धिविधिन्यासानां सहायता स्वीकारो परिहार्यो भविष्यति, तथैवान्यतः भारतीयपाश्चात्यदर्शनयोगानाञ्च विज्ञानैः भारतीयमनोविज्ञानं दृढभूमौ स्थापनीयं भविष्यति । तत्पक्षस्य विशाला अनुसन्धानस्य विज्ञानमदस्यार्यो भवति, अतः एतस्मिन् पथि भारतीयाः मनीषिणः समन्वयिताः आगन्तारं ज्ञानालोकं नैव कदापि उपेक्षितं कुर्वन्ति इयमेव भारतस्य समन्वयात्मिका दृष्टिः । तथैवतः उक्तपरिप्रेक्ष्ये मनस्तत्त्वस्य स्वरूपनिर्धारणकरणमपि एतस्य शोधप्रबन्धस्य विषयो भाति ।

2. <u>आस्तिकदर्शनेषु मनसः स्वरूपं लक्षणञ्च</u>

पुनर्जन्मपरलोकादि स्वीकर्तास्तिकदर्शनानि भागद्वयेन विभक्तुं शक्यते -

§1§ ईश्वरवादिदर्शनम् - न्यायदर्शनं वैशेषिकदर्शनं योगदर्शनमुत्तरमीमांसा-
दर्शनञ्च ।

§2§ अनीश्वरवादिदर्शनम्- सांख्यं, पूर्वमीमांसा, जैन-बौद्धदर्शनञ्च ।

इतः परं उपरिलिखितवादिदर्शनानां विभागानुसारं क्रमशः स्वरूपं लक्षणञ्च निर्धारितं भविष्यति ।

§1§ ईश्वरवादिदर्शनम्

§क§ न्यायदर्शने क्रमशः स्वरूपं लक्षणञ्च - भारतीयदर्शनेतिहासानुसारेण काल-क्रमानुसारं न्यायसूत्रकारस्य गौतमस्य कालः ईसापूर्वपञ्चमशताब्दी प्रारम्भः इति श्रीआठवलेमहोदयः स्वतर्कसंग्रहस्य आंग्लभूमिकायाः 33 पृष्ठे स्वीकृतवान् -

Gotama's work must therefore be assigned to the end 5th or the beginning of the 4th century B.C.[1]

न्यायदर्शने निम्नलिखितद्वादशप्रमेयाः स्वीकृताः सन्ति-
1- आत्मा, 2- शरीरम्, 3- इन्द्रियम्, 4- अर्थः, 5- बुद्धिः, 6- मनः, 7- प्रवृत्तिः, 8- दोषः, 9- प्रेत्यभावः, 10- फलम्, 11- दुःखम्, 12- अपवर्गश्च । एते प्रमाणैः प्रमातव्याः पदार्थाश्चप्रमेयोक्ताः सन्ति ।

"आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभाव-

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1. तर्कसंग्रह : अन्नम्भट्ट कृत - 'इण्ट्रोडक्शन पृ० 33.

-फलदुःखापवर्गास्तु प्रमेयम् ॥"[1]

अत्र षष्ठं प्रमेयं मतो भवति । एतत्सूत्रपर्यालोचनया एतत्स्पष्टं सिध्यति, यदेतद् दर्शने शरीरेण आत्मनामेतत्सम्बन्धानां सत्ता पृथक् पृथक्रूपेण स्वीकृता भवति । ततः आत्मना सहसम्बन्धं स्पष्टयितुमेतत्प्रमेयोपरि संक्षिप्त-विचार आवश्यक इवाभाति । समस्त सुखदुःखकारणानां द्रष्टा समस्तसुखदुःखानां भोक्ता आत्मैव भवति । स्वोपात्मा "सर्वज्ञः" अर्थात् सुखदुःखस्य समस्तकारणस्य समस्तसुखदुःखस्य च ज्ञातृत्वेन स्वीकृतो भवति । अतो वात्स्यायनभाष्ये आत्मा-सर्वानुभावी अर्थात् सुखदुःखादीयकारणानामन्यानुभवकर्ता प्रतिपादितो भवति । तस्यात्मनो भोगस्थानं शरीरमस्ति यद् "भोगायतनम्" इत्युक्तमस्ति, अर्थात् आत्मनः सुखदुःखस्य भोगस्य साधनमस्ति । शरीरस्य लक्षणं न्यायदर्शने इत्थ-मस्ति –

"चेष्टेन्द्रियार्थाश्रयः शरीरम्"[2]

अर्थात् चेष्टेन्द्रियार्थानामाश्रयो भवति ।

"घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः"[3]

अर्थात् घ्राणजिह्वाचक्षुस्त्वक्श्रोत्राख्यानामिन्द्रियाणां क्रमशः पृथ्वीजलतेजोवाय्वा-काशेभ्य उत्पत्तिर्भवति क्रमशश्च गन्धरसरूपस्पर्शशब्दाख्याः पृथिव्यादिपञ्चमहा-भूतानां गुणाः कथिताः सन्ति ये हीन्द्रियाणां विषयाः सन्ति । सांख्यदर्शने

---

1. न्यायदर्शन - 1/1/9.    2. न्यायदर्शन - 1/1/11.
3. ,, - 1/1/12.

तदा एकस्मिन्नेव काले अनेकेन्द्रियजन्यानेकविजातीयं प्रत्यक्षमुत्पद्येत, किन्तु न तथा भवति । एतदेव तथ्यं वात्स्यायनभाष्ये इत्थं प्रतिपादितमस्ति -

"अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ताः भवितुमर्हन्तीति । युगपच्च खलु घ्राणादीनां गन्धादीनां च सन्निकर्षेषु सत्सु, युगपज्ज्ञानानि नोत्पद्यन्ते तेनानुमीयतेऽस्ति तत्तदिन्द्रियसंयोगि सहकारिनिमित्तान्तरम् अव्यापि यस्यासंनिधेर्नोत्पद्यते ज्ञानम्, संनिधेश्चोत्पद्यते इति ।"[1]

अत एव सूत्रकारो भगवान् गौतमः मनसो लक्षणमित्थं प्रदत्तवान्, यस्याधारे वात्स्यायनभाष्यं प्रदत्तमस्ति ।

"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ।"[2]

अर्थात् बहिरिन्द्रियाणां विषयैः सहसन्निकर्षे जातेऽपि तैरिन्द्रियैः आत्मनः सन्निकर्षे सत्यपि यतो हि स्मृत्यादिज्ञानगन्धादीनाञ्च ज्ञानमेकदैव न जायते अतः इन्द्रियातिरिक्तस्यान्यकरणस्य [अन्तःकरणस्य] ज्ञानं भवति ।

एतद्भाष्यसूत्रानुसारं निम्नलिखितानि तथ्यानि पुरतः परिस्फुरन्ति -

1. आत्मेन्द्रियविषयाणां सन्निकर्षे सत्यपि अनेकविजातीयप्रत्यक्षाणां ज्ञानमेकदैव न जायते । अतो युगपदेतेषां ज्ञानानामनुत्पत्तिरेव मनसो ज्ञापिका । अर्थात् मनोऽनुमानसाध्यं न तु प्रत्यक्षसाध्यम् ।

---

1. न्यायसूत्र : वात्स्यायनभाष्य - 1/1/16.
2. न्यायसूत्र - 1/1/16.

2. द्वितीयमिदं तथ्यं स्पष्टायते यदन्तःकरणं मनो वा बहिरिन्द्रियेभ्य आत्मनश्च भिन्नमस्ति ।

3. तदात्मा इव सर्वव्यापकं विभु न भवति न च समस्ते शरीरे व्यापकं सत् मध्यमपरिमाणवद् वर्तते । अत एतस्य परिमाणमणुपरिमाणमेव अङ्गीकुर्वन्ति ।

4. बाह्येन्द्रियापेक्षया मनोऽपि एकमिन्द्रियमस्ति, किन्तु तदन्तरिन्द्रियमस्ति, न च बाह्यमिन्द्रियम् ।

5. भोगायतनशरीराभ्यन्तरे मनसः स्थितिर्भवति ।

इत्थमात्मा मनसा संयुज्यते अणुपरिमाणत्वाच्च मनसश्च चक्षुरादिबाह्येनापीन्द्रियेण सह सन्निकर्षो भवति । इन्द्रियस्य यदा केनापि स्वेन विषयेण सह संयोगो [सन्निकर्षः] भवति, तदा आत्मनि रूपादेः ज्ञानमुत्पद्यते ।

न्यायशास्त्रस्य परवर्तिग्रन्थेष्वपि स्मृतिस्वप्नादिज्ञानकारणात् युगपज्ज्ञानानुत्पत्तिकारणाच्च मनोऽणुपरिमाणवद् अनुमेयत्वादपि स्वीकृतमस्ति । आचार्यो विश्वनाथः वात्स्यायनभाष्यवृत्तौ मनोविषये इत्थं प्रतिपादितवान्-

"मनो लक्षयति । युगपदेककाले एकात्मनीति पूरणीयं, ज्ञानानुत्पत्तिर्यतः स एव धर्मो ज्ञानकरणायुक्तं मनसो लिङ्गं लक्षणमित्यर्थः । तथाहि चक्षुरादिषु विषयसंबद्धेषु अपि मनोऽसत्त्वभावाद् एकं न ज्ञानं जनयति । यत्संबन्धाधारं च ज्ञानं जनयति तदेव चाणु निखिलज्ञानजनकं युगपज्ज्ञानात्कार साधारणकारणं तदेकमेव साधयन्तीदं मन इत्यर्थः । ---- इत्थं च मनः सिद्धौ निःस्पर्शत्वादिकं सर्वं सुकरमित्यवधेय इति दिक् ।"

---

1. गौतममुनि प्रणीत : न्यायसूत्राणि - पृ० 33-34

उक्त व्याख्यातः, मनः [1] अणु परिमाणवद्, [2] निखि-लज्ञानस्य जनकं [3] सुखदुःखाद्युपलब्धेः साधारणं कारणं तर्कदृष्ट्या [4] एकस्मिन्शरीरे एकमेव मनः तिष्ठति । अतः एकस्मिन् शरीरे नैकमनः कथनस्य कल्पनाऽपि न प्रतिभाति । इत्थञ्च मनसः सिद्धे सत्यां मनसो - स्पर्शत्वाभावाद्यन्यलक्षणानि अथवा असाधारणधर्माश्च तारतम्येनानुमातुं शक्यन्ते। यतोहि मनोऽणुपरिमाणवद् भवति अतः परमाणुमिव सूक्ष्मत्वकारणात् मनः एकस्मिन् काले केनाप्येकेनेन्द्रियेण सह संयुज्यते क्षणे एव येन मनः सूक्ष्मत्वकारणात् एकेनेन्द्रियेण अन्येनेन्द्रियेण च सह संयोगं विधातुमपि गच्छेत् । अत एव एकदैव गन्धादीनां युगपज्ज्ञानोत्पत्तिः भवितुं नार्हति ।

भिन्नभिन्नविषयाणां प्रत्यक्षज्ञानं क्रमशः उत्पद्यन्ते । इन्द्रिय-गतरूपादयो मनोविषयत्वेन स्वीकृताः नैव भवन्ति, अत एव वात्स्यायनभाष्ये मनसे "इन्द्रियसंयोगि" इति पदं प्रयुक्तमस्ति । अर्थात् मनः इन्द्रियेण सह-संयोगवद् वस्तु भवति । इन्द्रियगतरूपादयो धर्माः इन्द्रिये समवायसम्बन्धेन तिष्ठन्ति, यतो हि गुणगुणिनोः सम्बन्धः समवायसम्बन्धोऽङ्गीकृतो भवति । आकाशादि पदार्थोऽपि मनो नास्ति, इति सूचयितुं भाष्ये "सहकारि" पदं प्रयुक्तमस्ति । आलोकः मनो नास्ति इति सूचयितुं भाष्ये "निमित्तान्तरम्" इति पदं प्रयुक्त-मस्ति अर्थात् प्रकाशादिप्रत्यक्षस्य साधारणकारणैः भिन्नं मनः एकमसाधारणं कारणं [करणम्] अस्ति । आत्मा मनो नास्तीति सूचयितुं भाष्ये "अव्यापि" इति पदं प्रयुक्तमस्ति । आत्मा विश्वव्यापी भवति अर्थात् विभुपरिमाणवान् भवति, किन्तु मनो अणुपरिमाणवद् भवति ।

अर्थात् 1. द्रव्य, 2. गुण, 3. कर्म, 4. सामान्य, 5. विशेष, तथा 6. समवायानां साधर्म्यवैधर्म्यविशेषकारणादुत्पन्नात्तत्त्व-ज्ञानद्वारा निःश्रेयसस्य मोक्षस्य प्राप्तिर्जायते । पञ्चमसूत्रे च नवद्रव्याणां परिगणनं कृतमस्ति तत्र मनोऽपि एकं द्रव्यमङ्गीकृतमस्ति ।

"पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन
इति द्रव्याणि" ‖1/1/5‖

अर्थात् पृथ्वी, जल, तेज, वायु, आकाश, काल, दिक्, आत्मा, मन इति च नवद्रव्याणि स्वीकृतानि सन्ति ।

<u>मनसो लक्षणम्</u>

तृतीयाध्यायस्य द्वितीयाह्निके - "आत्मेन्द्रियार्थ सन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिंगम् ।"[1] अर्थात् व्यापकस्यात्मन इन्द्रियघटपटा-द्यर्थैः सह-सम्बन्धे जाते सत्यपि ज्ञानस्योत्पत्तिरनुत्पत्तिरेव च मनसः सिद्धौ हेतुरस्ति । वैशेषिकसूत्रे मनसस्तदेव लक्षणमस्ति यन्न्यायसूत्रेऽवलोक्यते । मनसो द्रव्यत्वं नित्यत्वञ्च वायोः परमाणोरिव च ज्ञातव्यम्, अर्थात् यथा पृथ्व्यादि-द्रव्याणां परमाणुषु द्रव्यत्वधर्मः नित्यत्वधर्मश्च तिष्ठति, तथैव मनस्यपि द्रव्य-त्वनित्यत्वरूपो धर्मश्च तिष्ठति[2] ।

न्यायदर्शन इव वैशेषिकदर्शनेऽपि एकस्मिन् शरीरे एकस्यैव मनसः सत्ता स्वीकृता मता । यथा -

---

1. वैशेषिकसूत्र - 3/2/1. 2. तत्रैव - 3/2/2.

"प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम्"[1] ।

अर्थात् अनेकप्रयत्नानामेककालिकत्वाभावादेकस्मिन् काले अनेकज्ञानाभावकारणा-देकस्मिन् शरीरे एकमेव मनः सिध्यति ।

प्रशस्तपादभाष्यस्य मनः प्रकरणे मनसो वर्णनमित्थं कृतमस्ति मनस्त्वयोगान्मनः । सत्यप्यात्मेन्द्रियार्थसान्निध्ये ज्ञानसुखादीनामभूत्वो-त्पत्तिदर्शनात् करणान्तरमनुमीयते[2] ।

अर्थात् मनस्त्वजाति समवेतस्य कारणात् मनोनामकं द्रव्यं सिध्यति । जातिः समवायसम्बन्धेनैव द्रव्ये तिष्ठति, यतोहि मनोऽनेकमस्ति । अतो मनसि समवायसम्बन्धेन मनस्त्वजातिः स्वीकृता जाति । व्यापकस्यात्मनः बाह्येन्द्रियैः सह तथा बाह्येन्द्रियाणां पदार्थैः सह सन्निकर्षे सत्येऽपि ज्ञानसुखदुःखादीनां पूर्वमनुभूतिर्न जायते, परन्तु पश्चाज्ज्ञानादय उत्पद्यन्ते - इत्यवलोक्यते । अतो अतोऽनुमानप्रमाणेनेदं सिध्यति यदात्मसुखदुःखादेर्निमित्तोत्पत्तौ द्वितीयमुप-करणमस्ति । तात्पर्यमिदमस्ति यदात्मा विभुत्वकारणात् सर्वव्यापकोऽस्ति, तस्य एकस्मिन्नेव काले सम्पूर्णेन्द्रियैः सह इन्द्रियपदार्थैश्च सह सन्निकर्षे जाते एव एकपदार्थस्य ज्ञानकाले द्वितीयपदार्थेन सुखदुःखं नैव जायते । अतः आत्मे-न्द्रियविषयस्य सम्बन्धेन सुखादिकार्योत्पत्तौ एकस्य निमित्तकारणस्यापेक्षा जायते, येषां निमित्तकारणानामभावे सुखदुःखादीनामुत्पत्तिर्न भवति । अतोऽनुमानेन मनःसाधकं प्रमाणमस्ति ।

---

1. वैशेषिकसूत्र - 3/2/3.
2. प्रशस्तपादभाष्य- "मनः प्रकरणम्" पृ0 56-57.

"श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनात् बाह्येन्द्रियैरगृहीत सुखादिग्राह्यान्तरभावाच्चान्तःकरणम् ।"[1]

अर्थात् चक्षुरादीन्द्रियाणां व्यापाराभावेऽपि स्मृतिज्ञानं ज्ञानमुत्पद्यते इत्यवलोक्यते । सान्तःकरणत्वात् चक्षुरादिबाह्येन्द्रियैः गृहीतत्वाभावात् सुखदुःखादिभिन्नविषयाणां ग्राहकम् अन्तःकरणम् अर्थात् आभ्यन्तरकरणम् "मनः" सिध्यति । प्रशस्तपादभाष्ये मनसो निम्नलिखिताः गुणाः प्रतिपादिताः - 1. संख्या, 2. परिमाण, 3. पृथक्त्व, 4. संयोग, 5. विभाग, 6. परत्व, 7. अपरत्व, 8. वेगाख्यसंस्कारश्च ।

प्रत्येकं शरीरे एकमेव मनोनामकमिन्द्रियमस्ति । यदि एकस्मिन् शरीरे अनेकानि मनांसि स्युस्तदा आत्ममनसोः संयोगा अपि अनेके स्युः, इत्थमेकस्मिन्नेव काले अनेके प्रयत्नाः ज्ञानानि च स्युः, न चैवं भवति । अतः परिमाणमपि अणुत्वं भवति । एकस्मिन्नेव काले ज्ञानस्य प्रयत्नस्य चानुत्पत्त्या मनसि व्यापकताया अभावः सिध्यति ।

मनसः पूर्वशरीरात् वियोगः द्वितीयस्मिन् शरीरे च प्रवेशः धर्माधर्मानुसारं भवति । अतो मनसि संयोगतया वियोगगुणोऽपि सिध्यति । स्पर्शवद् द्रव्यमेव द्रव्यान्तरमुत्पादयति । किन्तु मनो द्रव्यं सदपि किमपि अन्यद् द्रव्यं नोत्पादयति, अतो मनः स्पर्शवदपि न भवति । क्रियाऽऽधारत्वात् मनसो मूर्तता अपि सिध्यति । मनो नित्यम् अर्थात् अनाद्यनन्तमस्ति.

- - - - - - - - - - - - - - - - - - - - - - - - - -

1. प्रशस्तपादभाष्य - "मनः प्रकरणम्" - पृ0 56-57.

यथा च चक्षुरादीन्द्रियाणां करणत्वात् परार्थत्वम्, अर्थात् आत्मनः उपयोग-साधनत्वमस्ति, तथैव मनोऽपि परार्थेन सिध्यति । अपि च अणुत्वात् नैवोप-स्थापनीयम्, मनसोऽणुपरिमाणवत्त्वात् रूपरसादिविषयकं ज्ञानं शीघ्र-शीघ्रं समुत्पद्यते । आत्मनः प्रयत्नात्तथा पुनः-पुनरपि अदृष्टस्य [धर्माधर्मयोः] कारणाच्च मनः शीघ्रं शीघ्रं सञ्चरति ।

परवर्तिकाले न्यायदर्शनवैशेषिकदर्शनयोरेकत्वस्य ग्रन्थानां रचना कृता वर्तते । उदाहरणार्थं न्यायसिद्धान्तमुक्तावल्याः प्रत्यक्षखण्डस्य द्वितीयकारि-कायां द्रव्यगुणादिसप्तपदार्थानां कीर्तनमस्ति । कारिकायाष्टीकायां प्रति-पादितमस्ति –

"एते च पदार्था वैशेषिके प्रसिद्धाः, नैयायिकानामपि अविरुद्धाः। वैशेषिकदर्शने षड्भावपदार्थाः कथिताः सन्ति । तेषां षण्णां भावपदार्थप्र-तिपादनाद् भावपदार्थभिन्नः सप्तमो अभावपदार्थः सिध्यति । गौतमस्य [न्यायदर्शने] प्रमाणप्रमेयादि षोडशपदार्थानां निरूपणं कृतमस्ति ।"

अतो मुक्तावलीकारः आचार्यो विश्वनाथः कथयति स्म –

"एते पदार्थाः वैशेषिकदर्शने प्रसिद्धाः नैयायिकानामप्यविरुद्धाः"।

न्यायदर्शनस्य षोडशपदार्थानां सप्तपदार्थेष्वेवान्तर्भावः सिद्धान्तमुक्तावल्याः दिनकरीटीकायां प्रतिपादितोऽस्ति ।

अनेन विवेचनेन वैशेषिकमते मतः स्पष्टं तदीयपदार्थानाञ्च विवेचनं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. वैशेषिकदर्शन : प्रशस्तपादभाष्य – पृ० 58-59.

स्पष्टं भवति, न्यायस्य विवेचनेन तत्र कोऽपि भेदो नास्ति, तथापि स्पष्टं भवति । मनः शरीरात्मेन्द्रियेभ्यो भिन्नमेकं द्रव्यमपि पदार्थो भवति । तच्चाणु भवति, न्यायदर्शन-वैशेषिकदर्शनयोः मनो नित्यपदार्थत्वेन स्वीकृतमस्ति । अतस्तस्योत्पत्तिर्न भवति । मनःसंयोगेनैव आत्मस्थिताः सुखदुःखादयः समु-त्पद्यन्ते । आत्मा विभुरस्ति, किन्तु अणुपरिमाणत्वात् मनो विभु न भवति, चैतन्यात्मनो विभुत्वं भवति, मनस्तु स्वतो अणुरूपमेवास्ति । अतः सुखदुःखादिज्ञानस्याधारोऽपि नास्ति । तेषां गुणानामाधार आत्मैव भवति किन्तु मनःसंयोगेनैव आत्मनि ते गुणाः समुत्पद्यन्ते ।

न्यायवैशेषिकयोः मनसो नित्यत्वकारणात् मनस उत्पत्तिः मनो-नाशस्य च प्रश्न एव नोपतिष्ठते ।

[ग] योगदर्शने मनसः स्वरूपं लक्षणञ्च –

उपरि ईश्वरवादस्य स्वीकृत्यनुसारं न्याय-वैशेषिक-योगोत्तर-मीमांसादर्शनानामुल्लेखः कृतो भवति ।

योगदर्शनस्य मुख्यं प्रयोजनं कैवल्यमोक्षप्राप्तिर्भवति । योग-दर्शनस्य त एव पदार्थाः सन्ति ये सांख्यदर्शने स्वीकृताः सन्ति । भेदः केवल-मेतावानेव भवति यत् सांख्यदर्शने ईश्वरस्य सत्ता स्वीकृता नास्ति, यदा च ध्यानसमाधिलाभार्थं योगदर्शने सांख्यस्य पञ्चविंशतिपदार्थेभ्यो भिन्ना ईश्वर-सत्ता स्वीकृता भवति । अत एव कदा-कदाचित् योगदर्शनं सेश्वर सांख्यदर्शन-पदवीं लभते । यद्यपि ईश्वरस्य सिद्धिर्योगदर्शनस्य प्रधानं लक्ष्यं नास्ति । परन्तु, ध्यानैकाग्र्यसमाधिलाभार्थञ्च ईश्वरोऽपि एकः साधनत्वेन स्वीकृतो

वर्तते । इत्यन्च सांख्यदर्शनस्य दार्शनिकत्वोऽर्थात् तदीय पन्चविंशतिपदार्थानां स्वीकृतिः पातन्जलयोगदर्शनस्यापि मान्या भवति ।

उपरि स्पष्टरूपेणैतन्निर्दिष्टं वर्तते यदेतानि सर्वाणि दर्शनानि आत्मशरीर मन इति पदार्थत्रयमादाय स्व-स्वविवेचनं कुर्वन्ति । सांख्यदर्शने योगदर्शने च प्रधानतः द्वौ पदार्थौ प्रतिपादितौस्तः – [1] प्रकृतिः, [2] पुरुषश्च । द्वयोः दर्शनयोः मनस उत्पत्तिः स्वीकृता वर्तते । न्याय-वैशेषिकयोः इवैतद् दर्शनयोः मनो नित्यं न भवति । सृष्टिप्रक्रियायां सांख्ययोगदर्शनं परिणामवादिदर्शनमस्ति । समग्रसृष्टिः प्रकृतेः परिणामभूता वर्तते । प्रकृतिस्त्रिगुणात्मिका भवति । सत्त्वरजस्तमांसि प्रकृतेः गुणभूतानि वर्तन्ते । यदा एतेषां गुणानां त्रयाणां साम्यावस्था भवति, तदा तस्य नाम प्रधानं प्रकृतिरिति वोच्यते, किन्तु यदा गुणवैषम्यं भवति, तदा क्रमशः सूक्ष्ममहत्तत्त्वात्प्रारभ्य स्थूलपंचभूतान्ततत्त्वयोत्पन्ना सृष्टिरुत्पद्यते । प्रकृतेः प्रथमः परिणामो महत्तत्त्वं समष्टिबुद्धिर्वा वर्तते किन्तु प्रत्येकं शरीरे स्थितमन्तःकरणैतस्याः समष्टिबुद्धेः अर्थात् महत्तत्त्वात् पृथक् पदार्थत्वं वर्तते ।

<u>सांख्ययोगस्य सृष्टिप्रक्रियायां मनस उत्पत्तिः</u>

सांख्ययोगस्य निम्नलिखिता सृष्टिप्रक्रियातः इदं तथ्यं स्पष्टं भवति । सृष्टिप्रक्रियायाः क्रमः इत्थं प्रतिपादितोऽस्ति –

"प्रकृतेर्महांस्ततो हंकारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पंचभ्यः पंचभूतानि ॥"
[सांख्यकारिका – 22]

अर्थात् प्रकृतेः महत् बुद्धितत्त्वं वा, महत्तत्त्वादहंकारः, अहंकारात् पञ्चतन्मात्राः एकादशेन्द्रियाणि चेति षोडशतत्त्वानां समूहः उत्पद्यते । एतस्मिन्समूहे अन्तर्भूतपञ्चतन्मात्राभिः आकाशादिपञ्चमहाभूतानि समुत्पद्यन्ते । एते सर्वेऽपि प्रकृतेः विकारभूतास्त्रिगुणात्मकाश्च वर्तन्ते । त्रयोविंशतिकारिकायामध्यवसायोऽर्थात् निश्चयात्मकं तत्त्वं बुद्धिपदवाच्यतां लभते । एतस्याः बुद्धेः सात्त्विकं रूपं धर्मज्ञानवैराग्यैश्वर्यं ज्ञापितमस्ति, एतत्सात्त्विकरूपाद्विरुद्धम्, अधर्माज्ञानावैराग्या[राग]नैश्वर्यं बुद्धेस्तामसरूपमुक्तमस्ति ।

चतुर्विंशतिकारिकायामहंकारस्य लक्षणं ज्ञापितमस्ति तत उत्पद्यमानं द्विप्रकारकं कार्यमुक्तमस्ति - एकन्तु एकादशेन्द्रियसमुदायरूपम्, द्वितीयं च पंचतन्मात्ररूपम् । सांख्ये वर्णितानां सर्वेषामुत्पद्यमानानां पदार्थानामिवाहंकारोऽपि त्रिगुणात्मकोऽस्ति । सात्त्विकाहंकारादेकादशेन्द्रियाणां [पंचज्ञानेन्द्रिय, पंचकर्मेन्द्रिय, एकं मनः] सात्त्विको गणः समुत्पद्यते । तामसाहंकारात् पञ्चतन्मात्राणां तामसगण उत्पद्यते, राजसाहंकाराच्च द्वयमपि कार्यमुत्पद्यते । यद्यपि रजोगुणस्य स्वकीयं पृथक् स्वतंत्रं वा किमपि कार्यं नास्ति, तथापि सत्त्वगुणतमो गुणौ स्वतः प्रवृत्तिशीलौ नैव भवतः, अतः समर्थसत्तेऽपि तौ स्व-स्वकार्यं नैव कुरुतः । प्रवृत्तिशीलकारणात् रजोगुणो यदा तान् प्रवर्तयति तदा ते स्वकार्यं कुर्वन्ति । इत्थञ्च सत्त्वे तमसि स्व-स्वकार्ये प्रवृत्त्युत्पादनकारणात् इन्द्रियोत्पत्तौ तन्मात्रोत्पत्तौच रजोगुणोऽपि कारणमस्ति ।[1]

---

1. सांख्यतत्त्वकौमुदी "प्रभाटीका" - डा० आद्याप्रसादमिश्र कृत, पृ० 138-141.

षड्विंशतिकारिकायां चक्षुश्रोत्रघ्राणरसनत्वगित्यादि पञ्चज्ञाने-न्द्रियाणि बोधितानि सन्ति, वाक्पाणिपादपायूपस्थादीनि पञ्चकर्मेन्द्रियाणि प्रतिपादितानि सन्ति । षड्विंशतिकारिकायां मनोवर्णनमित्थमस्ति -

"उभयात्मकमत्र मनः संकल्पकमिन्द्रियं च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ 27 ॥

अर्थात् एकादशेन्द्रियं मनोभवति, इदं द्विप्रकारकमपीन्द्रियं भवति अर्थात् मनः कर्मेन्द्रियमप्यस्ति, ज्ञानेन्द्रियमपि, यतोहि मनसा संयुज्य चक्षुरादिज्ञानेन्द्रियाणि वागादिकर्मेन्द्रियाणि च स्व-स्वविषये प्रवर्तन्ते ।

"अत्र एकादशस्विन्द्रियेषु मध्ये मनः उभयात्मकम् ।
बुद्धीन्द्रियं कर्मेन्द्रियं च । चक्षुरादीनां वागादीनां च
मनोऽधिष्ठितानामेव स्व-स्वविषयेषु प्रवृत्तेः[1] ।"

एतस्य शोधप्रबन्धस्य विषयो मनस्तत्त्वमेव भवति । मनोविषये आचार्यवाचस्पतिमिश्र इत्थं वर्णयति -

"तदसाधारणेन रूपेण लक्षयति- "संकल्पकमत्रमनः"
इति । संकल्पेन रूपेण मनो लक्ष्यते ।"

संकल्प एव मनसो साधारणधर्मोऽस्ति । अत एव तेनतस्य लक्षणमस्ति । एतत्तथ्यं स्पष्टरूपेण ज्ञापयितुं संकल्पस्य व्याख्या तत्त्वकौमुदीकारः इत्थं वर्णयति । निर्विकल्पक-सविकल्पकभेदेन प्रत्यक्षं ज्ञानं द्विप्रकारकं भवति । सर्वतः प्रथम-प्रथमं मानवस्य निर्विकल्पकमर्थात् सामान्यविशेषाभ्यां विहीनस्य

- - - - - - - - - - - - - - - - - - - - - - -

1. सांख्यतत्त्वकौमुदी टीका, कारिका - 27.

वस्तुमात्रस्य प्रत्यक्षं भवति । तत्र वस्तूनां जातिधर्मादीनां बोधो न भवति, तत्पश्चात् मनोद्वारा सामान्यविशेषाभ्यां विकल्पाभ्यां युक्तं यत्प्रत्यक्षं भवति तद् सविकल्पकं प्रत्यक्षमिति वक्तुं शक्यते । अस्मिन् ज्ञाने वस्तुनो धर्मसंख्यादि-विशेषणानां ज्ञानमपि जायते । पूर्वमीमांसायाः प्रसिद्धो विद्वान् श्रीमान् कुमारिलभट्टमहोदयः श्लोकवार्तिकस्य प्रत्यक्षसूत्रे 112 संख्यायामयं विषयो येन प्रकारेण वर्णितोऽस्ति -

"अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ।।"[2]

अनेन प्रकारेण निर्विकल्पकप्रत्यक्षस्योल्लेखात् पश्चात् विंशत्युत्तरैक-शततमसंख्याके श्लोके सविकल्पकप्रत्यक्षमित्थं बोधितमस्ति -

"ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते साऽपि प्रत्यक्षत्वेन सम्मता[2] ।।"

मनोविज्ञानिकप्रक्रियायां प्रत्यक्षज्ञानस्य निर्विकल्पप्रत्यक्षं सविकल्प-प्रत्यक्षञ्चात्यन्तमहत्त्वस्य विषयो वर्तते । प्रथमम्, वस्तुनः सामान्यं प्रत्यक्षं भवति, तस्मिन् प्रत्यक्षे केवलं वस्तुमात्रस्य प्रत्यक्षं भवति । एतदालोचनज्ञानं - निर्विकल्पकज्ञानं वोच्यते । तत्पश्चात् मनः संकल्पयते अर्थात् विशेषणविशेष्य-भावद्वारा वस्तु विवेचयति । पूर्वं ज्ञानं यदि संश्लिष्टात्मकं सामान्यज्ञान-मुच्यते तदा सविकल्पकज्ञानं विश्लेषणात्मकं ज्ञानं वा वक्ष्यते । तथा तु एतयो-

---

1. श्लो० वा० प्रत्यक्षसूत्र - 112.
2. सांख्यतत्त्वकौमुदी - पृ० 146.

द्वयोः कृते Determinate and Indeterminate एतयोर्द्वयोः पदयोः प्रयोगः पाश्चात्त्यदर्शने कृतो वर्तते ।

सोऽयं संकल्पलक्षणो व्यापारो मनसः समानासमानजातीयाभ्यां व्यवच्छिन्दन् मनो लक्षयति[1] ।

मनसः संकल्पस्योऽयं व्यापारः सजातीय-विजातीयपदार्थानां पृथक् पृथक् भेदः ज्ञापितो भवति, अतः सः संकल्पस्यव्यापार एव मनसो यथार्थलक्षणमस्ति ।

इत्थञ्च मनः सात्त्विकाहंकारस्यैकः परिणामोऽस्ति स्व-क्रियाकलापकारणाच्चेदमुभयात्मकमिन्द्रियस्वेनोक्तमस्ति । इन्द्रियसजातीयाच्चेदं मनो इन्द्रियमस्ति गुणानां विशिष्टपरिणामकारणाच्चेदं ज्ञानेन्द्रियमन्तःकरणमपि वक्तुं शक्यते । माठरवृत्तौ इदमुभयात्मकत्वं मनसः इत्थं वर्णितमस्ति-

> यथा एकः पुरुषः कदाचित् कर्मकर उच्यते, कदाचित्
> प्रवक्ता । एवं मन इन्द्रियमपि[2] ।

श्रीभावागणेशद्वारा विरचिते "तत्त्वयाथार्थ्यदीपनम्" नामके ग्रन्थे उक्तमस्ति-

> "सर्वसहायत्वादुभयात्मकं मनः ।"[3]

अत्रेदमावश्यकतया ध्यातव्यमस्ति यत्सांख्ययोगदर्शनयोः चिति-शक्तिः अर्थात् आत्मा अपरिणामी, अप्रतिसंक्रमदर्शितविषयशुद्धानन्तापेण च

---

1. 2. माठरवृत्ति - पृ० 40.
3. भावागणेशकृत तत्त्वयाथार्थ्यदीपनम् - पृ० 59.

प्रतिपादितो ऽस्ति । वैशेषिकन्यायदर्शनमिव चितिशक्तौ इच्छाद्वेषकार्यप्रयत्नादिगुणाः नोपलभ्यन्ते । असंगकारणाच्च आत्मा चितिशक्तिर्वा वस्तुतो नित्यमुक्तरूपोऽस्ति किन्तु अविवेककारणात्सं आत्मानं बन्धनबद्धमङ्गी करोति । विवेकख्यातेरुत्पादकात्पश्चात् चितिशक्तिः, या योगदर्शने दृक्रूपेणापि कथिता वर्तते, स्वातंत्र्ये अवस्थिता भवति । सांख्ययोगस्यैतेन विवेचनेन प्रकृतेः कार्यभूतत्वान्मनो यदुं त्रिगुणात्मकं तथा भौतिकपदार्थवच्च सिध्यति ।

तत् स्वकारणे अर्थात् अहंकारे विलीयते । अत एतस्य प्रलयो ऽपि भवति । प्रत्येकस्मिन्शरीरे पृथक् पृथग्रूपेण सत्त्वान्मनो नाना भवति यतो हि प्रकृतेः प्रथमं परिणामः महत्तत्त्वं बुद्धितत्त्वं वा भवति । अनया दृष्ट्या मनसोऽपि परिणामी विभुः सर्वव्यापकश्च वर्तते । न्यायवैशेषिकदर्शनेषु आत्मनो ये विशेषधर्माः सुखदुःखादयः कथिताः सन्ति, सांख्यदर्शने योगदर्शने च ते सर्वेऽपि अन्तःकरणस्यैव धर्माः भवन्ति । चितिशक्तिस्तु गुणासंगरहिता च भवति । मनोऽन्तःकरणरूपेणापि कथितमस्ति योगदर्शने च तदीयक्रियाकलापानुसारं तस्य मनोबुद्धिचित्ताहंकाराणाञ्च स्वरूपं प्रदत्तमस्ति । अत एवैनमन्तःकरणचतुष्टयमप्युच्यते । एतस्यान्तःकरणचतुष्टयस्य विस्तृतं वर्णनमेतस्य शोधप्रबन्धस्य चतुर्थाध्याये करिष्यते ।

सांख्ययोगौ सृष्टेरुत्पत्तिविषये परिणामवादस्य सिद्धान्तं स्वीकुरुते । एतस्मिन् मते कार्यकारणयोरभेदोऽपि स्वीकृतो वर्तते, सत्कार्यवादस्यापि च सिद्धान्तं स्वीकृतमस्ति । अर्थात् कार्यस्य सत्ता कारणे उत्पत्तेः पूर्वमेव विद्यमानं भवति । कारणात् सर्वथा भिन्नं किमपि कार्यं नोत्पद्यते । एतस्मिन्

सिद्धान्तो वस्तुतः कार्यं कारणस्यैवैकः परिणामविशेषो भवति ।

सांख्यदर्शने स्थूलशरीरस्य सूक्ष्मशरीरस्य च वर्णनमस्ति । स्थूलशरीरं पृथ्व्यादिभूतचतुष्टयसन्निर्मितमस्ति । यदा च सूक्ष्मशरीरमातिवाहिकशरीरं वा अष्टादशतत्त्वादुत्पद्यते । यथा- 1. बुद्धिः, 2. अहंकारः, 3. मनस्, 4-8. पञ्चतन्मात्राः [सूक्ष्मभूत] तथा 9-18. दशेन्द्रियाणि । इदं सूक्ष्मशरीरं प्रत्यक्षगोचरं न भवति, किन्तु स्थूलशरीराभावे इदं सूक्ष्मं शरीरं स्वकीयं कार्यं नैव कर्तुं शक्नुयात् ।

[घ] उत्तरमीमांसायां मतः स्वरूपं लक्षणञ्च -

उत्तरमीमांसायाः प्रचलितं वेदान्तदर्शनमस्ति । सूत्रकारबादरायणस्य [व्यासस्य] ब्रह्मसूत्राधारेण विद्वांसः स्व-स्वविशिष्टसम्प्रदायानुसारं वृत्तिं भाष्यञ्च विरचितवन्तः । यथा -

आचार्योपवर्षस्योल्लेखः आचार्यशंकरो बहुसम्मानेन कृतवान् । उपवर्षः, वृत्तिकारस्य नाम्ना प्रसिद्धोऽस्ति । श्रीमान् उपवर्षमहोदयः पूर्वोत्तरोभयमीमांसायां वृत्तिग्रन्थं विरचितवान् । स्फोटसिद्धान्तस्य निराकरणे आचार्यशंकरः "भगवान् उपवर्ष" इत्युक्त्वा स्मृतवान् ।

बोधायनसूत्रेषु बोधायनस्यैका वृत्तिरासीत् यस्य वचनानामुद्धरणमाचार्यरामानुजस्य भाष्ये मिलति । कतिपयविद्वानुपवर्षं बोधायनञ्चैक व्यक्तिरङ्गीकरोति ।

एवमेव 3. ब्रह्मदत्त, 4. द्रविडाचार्य, 5. सुन्दरपाण्ड्यप्रभृतयः

आचार्यशंकरात्पूर्वकालिकाः ब्रह्मसूत्रमधिकृत्यटीकालेखकाः बभूवुः । दुर्भाग्यवशात् शंकरात्पूर्ववर्तिनः कस्यापि विदुषः टीका, वृत्तिः भाष्यग्रन्थो वा अद्य अनुपलब्ध एव वर्तते । अर्वाचीनकाले शंकरात्पश्चात् आचार्यभास्कर, यादवप्रकाश, आचार्यरामानुज, श्रीकंठ, निम्बार्क, माध्व, वल्लभाचार्यप्रभृतयो ब्रह्मसूत्रमधिकृत्य स्वभाष्यं ग्रन्थं वा लिलिखुः । शांकरमतम् [अद्वैतमतम्" तथा वैष्णवाचार्यद्वारा "मायावाद" इत्यपि कथितो वर्तते । एतेषु सर्वेषु भाष्येषु मनसोऽन्तःकरणस्य वा सत्ता स्वीकृता वर्तते । अन्तःकरणस्वरूपविषये सर्वेषां भाष्यकाराणां प्रायः कोऽपि मतभेदो नास्ति । शरीरादात्मनश्च पृथक् अन्तःकरणस्य मनसो वा सत्ता सर्वैरपि स्वीकृता वर्तते ।

यथा च पूर्वतोऽपि संकेतः कृतो वर्तते, मनस्तत्त्वस्य विवेचनं भारतीयतत्त्वदर्शनस्य [मेटाफिजिक्स] चैकमङ्गमस्ति मनसो लक्ष्यं स्वरूपं प्रश्नश्च तत्तत्सम्प्रदाये स्वीकृतसृष्टिप्रक्रियया सम्बद्धोऽस्ति । यतो हि अन्तःकरणस्य मनसो वा नित्यत्वाऽनित्यत्वयोः कार्यत्वस्य, कारणत्वस्य च विचारः सृष्टिप्रक्रियाऽऽधारेणैव कर्तुं शक्यते ।

ब्रह्मसूत्रमधिकृत्यभाष्यकाराचार्याणां द्वयोः भागयोः पार्थक्यं कर्तुं शक्यते । प्रथमतः, ये सृष्टेः स्वतन्त्रसत्तामस्वीकृत्यकेवलं तस्य माययोत्पन्नकारणात् अर्थात् सदसद्भ्यामनिर्वचनीयमङ्गीकरोति । एतत्सम्प्रदायान्तर्गताः श्रीशंकराचार्यास्तदनुयायिनश्च वर्तन्ते । द्वितीयतः, ये वैष्णवाचार्याः सन्ति, ये शंकरसम्मतं संसारं मायायाः कार्यं नाङ्गीकुर्वन्ति, तन्मते च जगद् ब्रह्मात्मकमस्ति । एते विद्वांसो जगतो व्यावहारिकसत्तामङ्गीकुर्वन्ति । सृष्टेरुत्पत्ति-

विश्वेऽपि परिणामवाद, विवर्तवाद, सत्कार्यवाद, असत्कार्यवादादिसिद्धान्तेषु सृष्टिदानं नितान्तमावश्यकमस्ति ।

शांकरवेदान्तस्य प्रस्थानत्रयी प्रसिद्धा वर्तते । ब्रह्मसूत्र-श्रीमद्-भगवद्गीतोपनिषदां सम्मिलितं नाम प्रस्थानत्रयी भवति । शांकरमते परमार्थ-तत्त्वं केवलं सच्चिदानन्दस्वरूपं केवलं ब्रह्मैव वर्तते । सृष्टिप्रक्रियायाः निरूपणं कल्पितमज्ञानमूलकमेवास्ति ।

परमार्थभूतस्य ब्रह्मणो द्वितीयं नाम "ॐ" इत्यस्ति, अत एव च ब्रह्मसूत्रे यत्र ब्रह्मणो लक्षणं "जन्माद्यस्य यतः" इत्येवं प्रदत्तमस्ति, तत्र माण्डूक्योपनिषदि ओंकारादेव सृष्टेरुत्पत्तिः वर्णिता वर्तते । यथा -

> "ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानभूतं भवद्-
> भविष्यदिति सर्वमोंकार एव । यच्चान्यत् त्रिकालातीतं
> तदप्योंकार एव ।"[1]

एतद् व्याख्यापयन् आचार्यशंकरः कथयति- शब्दार्थस्वरूप-भवाद् अभिधेयमस्ति, तस्याभिधानाद्भिन्नं नास्ति । अभिधानमोंकाराद् भिन्नं नास्ति । अतः सम्पूर्णमिदं जगत् ओंकारस्वरूपमेवास्ति । भूत-भविष्यद् वर्तमानश्चेति परिकल्पितमपि जगत्, यच्च कालापरिच्छेद्यमव्याकृता-न्यापि वर्तते तत्सर्वमोंकार एव भवति[2] । यथायमोंकार उक्तः तत्सर्वं ब्रह्मैव भवति ।

---

1. माण्डूक्योपनिषद् - मन्त्र 1.
2. ,, - शांकरभाष्य - मन्त्र 1.

धीन्द्रियाणि, मनोबुद्धिश्चेति सप्तदशकं लिङ्गं भौतिकं हिरण्यगर्भ इत्युच्यते[1] ।

श्रीमत्सुरेश्वराचार्यमहोदयः एतत् व्याख्यानम् स्ववार्तिकाख्य-टीकायामन्तःकरणस्य मनोबुद्ध्यादिनाम्नां व्याख्या इत्थमस्ति –

"मनोबुद्धिरहंकारश्चित्तं चेति चतुष्टयम् ।
संकल्पाख्यं मनोरूपं बुद्धिर्निश्चयरूपिणी ।।

अभिमानात्मकत्वेन अहंकारः प्रकीर्तितः ।
अनुसंधानरूपं च चित्तमित्यभिधीयते[2] ।।"

वेदान्तसारे मनस उत्पत्तिरित्थं वर्णिता अस्ति –

एतानि [इन्द्रियाणि] आकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते । बुद्धिर्नाम निश्चयात्मिकान्तःकरणवृत्तिः । मनो नाम संकल्पविकल्पात्मिकान्तःकरणवृत्तिः अहंकारः[3] ।

एकमेवान्तःकरणं स्वप्रक्रियाकारणात् 1.मनः,2.बुद्धिः, 3.चित्तम्, 4.अहंकार इत्यादिचतुर्नामभिः कथ्यते । अन्तःकरणं यदा संकल्पवृत्तिरूपेण परिणमते, तदा तन्"मनः" इत्युच्यते । निश्चयात्मकवृत्तिरूपेण परिणमनात् अन्तःकरणमेव "बुद्धि" पदवाच्यं भवति । पूर्वं प्राक्तनवस्तूनां स्मरणशीलस्य "अन्तःकरणं" चित्तम्" इत्युच्यते । अनुसंधानस्यार्थः स्मरणमस्ति । अभिमानस्य

---

1. शंकराचार्य विरचितं "पंचीकरणम्" - पृ0 27.
2. सुरेश्वराचार्य-श्लोकवार्तिक - 33-34.
3. सदानन्दकृत वेदान्तसार - पृ0 4-5, ओरियण्टल बुक एजेन्सी, पूना, संस्करण 1929.

कार्यः गर्वो भवति । अतोऽभिमानवती अन्तःकरणस्य वृत्तिः "अहंकार"पद-वाच्या भवति ।

आचार्यविद्यारण्यकृतस्य "पंचदशी"नामकग्रन्थस्य तत्त्वविवेक-प्रकरणे षोडशश्लोकात् अष्टाविंशतिश्लोकपर्यन्तमेतादृशी प्रक्रिया स्थापिता वर्तते । अव्यक्तं प्रकृतिर्वा सत्त्वरजस्तमोगुणवती वर्तते । यदा सत्त्वरजस्तमसां गुणानां साम्यावस्था भवति, तदा एतद् प्रकृतिः प्रधानमिति कथ्यते । प्रकृतिरप्यु-भयात्मिका विशुद्धसत्त्वप्रधाना प्रकृतिर्नाम माया भवति, मलिनसत्त्वप्रधाना-प्रकृतिर्नाम अविद्या भवति । मायायां प्रतिफलितचिदात्मा सर्वज्ञ ईश्वरो भवति । अविद्यायां प्रतिबिम्बितचिदात्मा जीवपदवाच्यो भवति । अविद्याख्योपाधेरुत्कृष्टतारतम्यात् जीवा अनेक प्रकारकाः भवन्ति यथा - देवः, तिर्यगित्यादिः । ततः प्रधानप्रकृतेः जीवानां सुखदुःखादिसम्पादनाय ईश्वराज्ञया अर्थात् पूर्वोक्तेच्छया पृथ्व्यादिपञ्चमहाभूताः उत्पद्यन्ते । आकाशादिपञ्चमहाभूतानां सत्त्वांशैः पञ्चज्ञानेन्द्रियाण्युत्पद्यन्ते । अथैकैक-तत्त्वांशेभ्यः एकैकं ज्ञानेन्द्रियमुत्पद्यते । सर्वभूतमिलितसत्त्वांशैः अन्तःकरण-मुत्पद्यते । इदमन्तःकरणं वृत्तिभेदकारणात् द्वयरूपेण वक्तुं शक्यते ।

"तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद्द्विधा ।
मनो विमर्शरूपं स्याद् बुद्धिः स्यान्निश्चयात्मिका[1] ॥"

[2] <u>अन्तःकरणं भौतिकतत्त्वम्</u>

उपरि प्रतिपादितेन विवेचनेन अन्तःकरणं भौतिकवस्त्वन्तर्गतं

---

1. पंचदशी, तत्त्वविवेकप्रकरण - 20.

सन्ति । प्रत्येकभूतस्त्रिगुणात्मको भवति, यतो हि प्रकृतिस्त्रिगुणात्मिका प्रतिपादिता अस्ति । खादिभूतानां सत्त्वांशेभ्यः पञ्चज्ञानेन्द्रियाण्युत्पद्यन्ते । आकाशादिकैकभूतस्य सत्त्वांशाः एकैकेन्द्रियस्योपादानकारणमस्ति । सर्वभूतानां सत्त्वांशानां साधारणं कार्यमन्तःकरणमस्ति । अन्तःकरणस्य वृत्तिभेदेन च मनोबुद्धिचित्ताहंकाराख्यानि चत्वारि नामानि जायन्ते । अनया दृष्ट्या मनः एकः भौतिकः पदार्थो भवति । अनेक शरीरेषु पृथक् पृथग्भूतेनान्तःकरणस्य स्थितिकारणात् मनो नैकं भवति । मनसः परिणामस्तु न आत्मा इव विभुः, न च न्यायवैशेषिकसिद्धान्ते स्वीकृतोऽणुपरिमाण एवास्ति, किन्तु अन्तःकरणं शरीरे व्यापकमध्यमपरिमाणस्यैको भौतिकः पदार्थो सन्ति । वृत्तिरूपं एतस्य परिणामो भवति । वेदान्तदर्शनमुपनिषदाधारेणैव प्रतिष्ठितमस्ति । अत एव वेदान्तसारे प्रतिपादितमस्ति –

"वेदान्तो नाम उपनिषत्प्रमाणम्, तदुपकारीणि
शारीरकसूत्राणि च ।"

अर्थात् वेदान्तदर्शने उपनिषदेव प्रमाणभूतमस्ति, तेषामुपनिषद् वाक्यानां संग्राहकं ब्रह्मसूत्रं शारीरकसूत्रमपि प्रमाणमस्ति । आदिशब्देन श्रीमद्भगवद्-गीताद्यध्यात्मशास्त्राणां ग्रहणमस्ति, यतो हि तान्यपि शास्त्राणि उपनिषदुपव्याख्यानि भवन्ति[1] ।

[3] <u>वेदान्तदर्शने मनसो नित्यता</u>

उपनिषदि मनोऽणुपरिमाणत्वेनापि प्रतिपादितमस्ति ।

---

1. वेदान्तसार, कलकत्ता-संस्करण – पृ0 1.

पञ्चमहाभूतेभ्योऽन्नस्योत्पत्तिकारणात् स्वतात्त्विकांशात् मनः सृजति। छान्दोग्योपनिषदि अपि अन्नात् मनस उत्पत्तिः वर्णिता अस्ति। यथा-

"अन्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः
समुदीषति तन्मनो भवति।"

अर्थात् यदन्नमुपभुज्यते, वायुसहितोदरस्य जठराग्निना तस्य मन्थनं भवति। तस्य यो हि सूक्ष्मतमोंऽशो भवति, स उपरिगच्छति, तदेव च मनो भवति। अर्थात् मनसोऽवयवैः सह मिलित्वा तदन्नं मनः परिपोषयति। एतस्यामेवोपनिषदि श्रुतिप्रतिपादितमस्तियत् भुक्तमन्नं जठराग्निना पच्यते, तदन्नञ्च त्रिभिभागैः विभज्यते। अन्नस्य यो हि स्थूलतमो धातुर्भवति, तत्पुरीषं भवति, अन्नस्य मध्यमांशो धातुः, स च रसादिक्रमेण परिणतः सन् मांसो भवति। अन्नस्य च यः सूक्ष्मतमोंऽशो भवति, स उपरि अर्थात् हृदयप्रदेशं प्राप्य "हित" नामकसूक्ष्मनाडीप्रदेशे प्रविशति, वाणी च करणसमूहस्य स्थितिमुत्पादयन् मनो भवति। आचार्यशंकरः स्वभाष्ये कथयति यत् अन्नात् परिपुष्टकारणात् मनसः भौतिकत्वं सावयवत्वञ्च सिध्यति। वैशेषिकदर्शने यन्मनसो नित्यत्वं निरवयवत्वमणुत्वञ्च प्रतिपादितमस्ति, तेषां अनेनप्रकारेण खण्डनं भवति।

श्रुतौ मनसोऽन्नमय प्रतिपादनस्य तात्पर्यमित्यवगन्तव्यम्।

यद्यपि सृष्टिप्रक्रियायां मनः पञ्चमहाभूतस्य कार्यत्वेन प्रतिपादितमस्ति, तदा श्रुतौ तस्यान्नमयत्वं कथमुच्यते ? इति शंका भवितुमर्हति तदा तस्येतत्समाधानम्- मनः पञ्चमहाभूतानां गुणान् गृह्णाति। तत्र पञ्चमहाभूतस्य गुणवत्ता स्वविषयकारणात् मनसः पञ्चमहाभूतता सिध्यति, तथापि तस्यात्र स्वान्नमयत्वं

प्रतिपादितमस्ति, यत् पञ्चमहाभूतेभ्य उत्पद्यमानं मनोऽन्नमुपकारि भवति अत एव तस्यान्नमयत्वं प्रतिपादनं श्रुतिभिरुच्यते । आचार्यमधुसूदनः "सिद्धान्त-बिन्दु" व्याख्यायामियमेव वार्ता अनेन प्रकारेण कथिता अस्ति -

> "मनसः पञ्चमहाभूतकार्यस्यापि अन्नमयत्वश्रुतिः
> तदुपकार्यतया व्याख्येया । मनसश्च पञ्चमहाभूतगुणग्राहक-
> त्वेन तत्सन्निधयाद् पञ्चमहाभूतात्मकत्वम् ।"[1]

अतो भूतैः सम्मिलिततत्त्वानिर्मितयोपनिषदि प्रतिपादितेनान्नेनान्तःकरणस्योत्पत्तौ कश्चन विरोधो नास्ति ।

अनुभवस्याधारेणापि भोजनमनसोः परस्परं सम्बन्धः सिध्यति । पाश्चात्त्यचिन्तकानां दृष्ट्याप्यन्नेन बहुप्रकारकं रासायनिकं तत्त्वमुत्पद्यते, रासायनिकवस्तुभिश्च प्राणिनां रक्तं सूक्ष्मशिराश्च प्रभाविताः सन्ति, अथवा मस्तिष्कोपरि तस्य प्रभावः पतति । मादकपदार्थानां प्रभावः स्पष्टमेव मानसिकसंस्थानोपरि दृश्यते । "बुद्धिं लुम्पति यद् द्रव्यं मदकारि तदुच्यते" इति आयुर्वेदे ऽपि प्रतिपादितमस्ति । आयुर्वेदस्य बहूनामोषधीनां यथा मकरध्वजादिसेवनेन नाडीसंस्थाने उत्तेजना तथा मनोऽनुभवो जायते । पाश्चात्त्यदेशेषु एल०एस०डी० इत्यादिसेवनस्य प्रचारो वर्तते । "हिप्पी"नामकयुवकसमुदायाः भारतीयमादकद्रव्यद्वारा एल०एस०डी० इत्यादि औषधिद्वारा च मनः प्रभावयन् किञ्चित्-कालार्थं चिन्ताभिर्विमुच्यते, एकप्रकारकमानन्दं शान्तिञ्चाप्यनुभवन्ति ।

---

1. सिद्धान्तबिन्दुः टीका - पृ० 161, अच्युतग्रन्थ माला, काशी.

योगदर्शनेऽपि योगसिद्धयर्थं "जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ।। ४-१ ।।" इत्युक्त्वा आयुर्वेदेऽपि औषधिद्वारा निर्मितरसायनसेवनेन वृद्धावस्थां मृत्युञ्चापि दूरे स्थापयति, तथा अन्य सिद्धयोऽपि प्राप्तुं शक्यन्ते ।

उपरि प्रतिपादितेन मादकौषधिभिर्विचलितैकाग्रता दैहिकचेतनातश्च मनसः पार्थक्यमवलोक्यते । अत उपनिषत्प्रतिपादितमिदं तथ्यमस्ति यत् "मनोऽन्नस्य परिणामविशेषरूपमस्ति" इति सिध्यति ।

वर्तमानकाले क्लोरोफार्मप्रभृत्यौषधिद्वारा ज्ञानवाहकनाडीनां क्रियाकलापा अवरुध्यन्ते । एतानि सर्वाण्यपि वस्तूनि अन्नमयान्तर्गतान्येव च ज्ञातव्यानि ।

उपनिषन्मूलकाद्वैतवेदान्तदर्शने केवलमेव पारमार्थिकसत्ता अर्थात् भूतभविष्यद्वर्तमानेतिकालत्रयाबाध्यरूपात्मैव स्वीकृतोऽस्ति । आत्मनः सकाशात् आकाशादिपञ्चमहाभूतानामुत्पत्तिः प्रतिपादिता अस्ति । आत्मैव विश्वस्याभिन्ननिमित्तोपादानकारणत्वेनाङ्गीकृतोऽस्ति, स च आत्मा वाङ्मनो-ऽत्यतीतः कथितो वर्तते । इदमात्मस्वरूपं ब्रह्म स्वतो निर्विशेषतत्त्वरूपमस्ति । सच्चिदानन्दरूपमेव तदीयं स्वरूपं भवति । सत्, चित्, आनन्दरूपं तदीयं विशेषणमपि असत् जडदुःखाद् व्यावर्तयितुमेव वर्तते । इदं ब्रह्मतत्त्वमेव स्वमायाशक्तिद्वारा अर्थात् मायाशबलितं सत् एकतः ईश्वरतत्त्वस्य कारणं भवति तथैवान्यतः जीवस्यापि कारणं भवति । उपनिषदि प्रतिपादितमस्ति -

"मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम् ।।"[1]

शक्तिशक्तिमतोश्च भेदो नाङ्गीक्रियते । अत एव ईश्वर एवाखिलविश्वस्य कारणमस्ति ।

मुण्डकोपनिषदि मनस उत्पत्तिः स्पष्टं कथिता अस्ति । अप्राण, अमन, शुभ्र तथा अक्षरादपि पर आत्मा भवति । यथा -

"दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यंतरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ।।"[2]

एतस्मादेव प्राणमनसिन्द्रियाणामुत्पत्तिः कथिता अस्तिः -

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।।"[3]

एतच्छ्लोकमधिकृत्यभाष्ये भाष्यकृत् भगवान् शंकराचार्यः लिखतिः -

"एवं मनः सर्वाणि चेन्द्रियाणि विषयाश्चैतस्मादेव जायन्ते ।"

अनेन स्पष्टमेव प्रतीयते यत् न्यायवैशेषिकदर्शनानामिव वेदान्त-दर्शनं मनसो नित्यत्वं नाङ्गी करोति । मनसोऽन्नमयत्वं स्वीकरोति । "अन्नमयं हि मनः" इति तथ्यं सूचयति यन्मनोऽन्नस्य विकारभूतमस्ति । यथा-त्माजन्ममृत्युभ्यां रहितः कथितो भवति, तथैव शरीरमनसोः नश्वरताया अपि प्रतिपादनमस्ति । यथाः - "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।।"[4] कठोपनिषदि यमकद्वारा जीवस्य भोक्तात्वेनापि वर्णनमस्ति,यथा-

---

1. मुण्डकोपनिषद् - 1/1/7.
2. मुण्डकोपनिषद् - 2/1/2.
3. ,, - 2/1/3.
4. कठ उ0 - 1/2/18.

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥"[1]

अर्थात् विशुद्धे आत्मनि कर्तृत्वभोक्तृत्वादिकं किमपि न भवति, इन्द्रियमनसोः संयोगेनैव आत्मा भोक्ता वा संसारी भवति । आचार्यशंकरः एतन्मन्त्रमधिकृत्य-भाष्यं भाषयन् वदति -

आत्मेन्द्रियमनोयुक्तं शरीरेन्द्रियमनोभिः सहितं संयुक्तं आत्मानं भोक्तेति संसारीत्याहुर्मनीषिणो विवेकिनः । नहि केवलस्यात्मनो भोक्तृत्व-मस्ति, बुद्ध्याद्युपाधिकृतमेव तस्य भोक्तृत्वम् ।

यत्र सांख्यदर्शनमात्मानं भोक्ता इति स्वीकरोति, तत्रैव वेदान्तदर्शनं शुद्धात्मानं भोक्तृत्वेन नाङ्गीकरोति । मनआदि उपाधियुक्तात्मैव भोक्ता अथवा संसारीजीवोऽपि भवति । श्लोकेनैकेनैतदपि स्पष्टमेव जायते यत् मनः शुद्धात्मनः उपाधि सत् भोक्तृत्वं निर्माति । प्राणीनां हृदये [मनसि] स्थिताः सर्वेऽपि कामाः [इच्छा] विनश्यन्ति, तदा अयं प्राणी मरणधर्मा मनुष्यो मृत एव भवति ब्रह्मत्वताञ्चापि प्रतिपद्यते ।

"यदा सर्वे प्रमुच्यन्ते कामायेऽस्य हृदि स्थिताः ।
अथ मर्त्यो ऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥"[2]

---

1. कठ उ० - 1/3/3-4.   2. तत्रैव - 2/14.

वेदान्तदर्शनानुसारं मन बन्धनकारणमस्ति । अतो ज्ञानद्वारा मनोनाशकरणमेव मानवस्य लक्ष्यं भवति तदैव च सः जीवन्मुक्तावस्थां लभते । मनो नाशयितुं यासां साधनानामुपायानामावश्यकता भवति, तस्य वर्णनं शोधप्रबन्धस्य सप्तमाध्याये करिष्यते ।

संसाररूपवृक्षस्य मूलं मन एव भवति संकल्प एव चैतस्य मनसो जीवनमप्यस्ति । मनसः संकल्पानामुपशमात् संसाररूपीवृक्षः शीघ्रमेव शुष्कायितो भवति ।

"अस्य संसारवृक्षस्य मनोमूलमिदं स्थितम् ।
संकल्प एव तन्मन्ये संकल्पोपशमेन तत् ।।
शोषयाशु यथा शोषमेति संसारपादपः ।"[1]

किन्तु करणम् [असाधारणकारणम्] भवति यदेकमपि तत् अनेकरूपं धत्ते इति प्रश्नः वेदान्तशास्त्रे उत्थापयन् ऐतरेयोपनिषद् तस्य समाधानमित्थं ददाति -

यदेतद् हृदयं मनश्चैतद् । संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मनीषाजूतिः स्मृतिः संकल्प क्रतुरसुः कामोवश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ।।[2]

अर्थात् इदं हृदयं मन एव वा भवति, यदेकमपि सत् अनेकधा कार्यं करोति । एतस्यैव नाम प्रज्ञानमस्ति । अन्यत्राप्युपनिषदि प्रतिपादितमस्ति यत् -

"मनसा ह्येव पश्यति मनसा शृणोति हृदयेन हि रूपाणि जानाति"

---

1. मुक्तिकोपनिषद् 37-38. 2. ऐतरेयोपनिषद् 6/2.

शांकरभाष्ये हृदयमनसोः पर्यायवाचकता कथिता अस्ति सर्वप्रकारेण च तस्य ज्ञानकरणत्वं ज्ञापितमस्ति ।

"तस्मात् हृदयमनोवाच्यस्य सर्वोपलब्धिकरणत्वं प्रसिद्धम् - - - - या वै प्रज्ञा स प्राण इति ब्राह्मणम् । करणसंहतिरूपश्च प्राणः इति अवोचाम ।

प्रज्ञानं प्रज्ञा वा प्राण एवास्ति । करणमूलस्यैव नाम प्राण इत्यस्ति। मनसोऽनेकानि नामानि उपरि कथितानि सन्ति, तानि सर्वाणि अन्तःकरणस्य [मनसो] वृत्तिविशेषस्य कारणानि सन्ति ।

[8] <u>आहारः [अन्नम्] मनश्च</u>

पूर्वमेव मनसोऽन्नमयत्वं प्रतिपादितमस्ति, अतः एतस्य मनसः शुद्ध्यर्थमुपनिषदि आहारशुद्धेः कारणता कथितास्ति । आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवास्मृतिः, स्मृति लाभे सर्वग्रन्थीनां विप्रमोक्षः[1] ।

एतन्मन्त्रमधिकृत्य भाष्य भाष्यन् भगवान् शंकराचार्यः कथयति यत् आहारशुद्धौ सत्यमेव आहाराद्युपलब्धिसाधनस्यान्तःकरणस्य मनसो वा सत्त्वस्य शुद्धिर्जायते । सत्त्वशुद्धौ सत्यां ज्ञातभूमानामकस्यात्मनो विच्छिन्ना स्मृतिस्तिष्ठति निरन्तरमनन्तरस्यात्मनश्च स्मृतिलाभे सति अविद्या द्वारा पापानानां अनेकानर्थपाशानां नाशो जायते ।

तस्य विषयोपलब्धिलक्षणस्य विज्ञानस्य शुद्धिः आहारशुद्धौ राग-

---

1. छान्दोग्योपनिषद् - 7/26/1.

द्वेषमोहदोषैः असंसृष्टं विषयविज्ञानमित्यर्थः । तस्यामाहारशुद्धौ सत्याम्, तद्वतो न्तःकरणस्य सत्त्वस्य शुद्धिर्नैर्मल्यं भवति । सत्त्वशुद्धौ च सत्याम्, यथा-वगते भूमात्मनि ध्रुवा अविच्छिन्ना स्मृतिः, अविस्मरणं भवति । तस्यां च लब्धायाम्, स्मृतिलम्भे सति, सर्वेषामविद्याकृतानर्थपाशरूपाणी अनेकजन्मा-न्तरानुभवभावनाकठिनीकृतानां हृदयाश्रयाणां ग्रन्थीनां विप्रमोक्षो विशेषेण प्रमोक्षणं विनाशो भवतीति ।

सनातनवैदिकधर्मे आहारशुद्धौ यद्बलं प्रदत्तमस्ति, तस्य प्रधानतमं लक्ष्यं मनसः शुद्धिरेव भवति । मनसः शुद्धौ सत्त्व एव मानवजीवनस्य परमलक्ष्यस्य अर्थात् आत्मसाक्षात्कारस्य स्मृतिः निरन्तरं जायते । दुःखस्यात्यन्तिकनाशः परमानन्दस्य प्राप्तिरूपश्च मोक्षः सिध्यति ।

वेदान्तस्य मनोविषयकमिदं लक्षणं स्वरूपञ्च तथा मनस्तत्त्वस्य यथा-र्थप्रयोजनमेवानुभवाधारेण स्थितकारणात् सम्यक् वैज्ञानिकं च सिध्यति ।

मनश्शरीरयोः घनिष्ठतमः सम्बन्धो ऽस्ति, इत्येतत्तथ्यं प्रायः सर्वेऽपि स्वीकुर्वन्ति । इन्द्रियसंस्थानम्, यत्पाश्चात्त्यमनोविज्ञाने मनोरूपेणैव स्वीकृतमस्ति, तस्य महत्त्वं शरीरमनसोः घनिष्ठसम्बन्धेन स्पष्टं भवति ।

<u>श्रीमद्भगवद्गीतानुसारं मनसः स्वरूपम्</u>

भारतीयदर्शनेषु प्रस्थानत्रयान्तर्गतं श्रीमद्भगवद्गीताशास्त्रं महत्त्वपूर्णं पदं धत्ते । आवश्यकतानुसारं मनसः स्वरूपविवेचनं क्रियते ।

अर्जुन उवाच - "यो ऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्[1] ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥"

श्री भगवानुवाच- "असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः[2] ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥"

योगस्येममुपदेशं श्रुत्वा अर्जुनो स्थिरचित्तः संवृत्तः। एतत्कथितं श्रुत्वा कथयति यत् हे मधुसूदन । भवता समत्वबुद्धेः साधनभावेन योगस्योपदेशः कृतः, तद्योगस्य स्थिरतामादाय स्थितिः अर्थात् पूर्णता यत्र भविष्यति इति नैव पश्यामि, अत्र कारणं मनसश्चाञ्चल्यमेव । एतस्यैवोपमभिप्रायमेवान्यस्मिन् पद्ये स्पष्टयति, यत् हे कृष्ण । मनोऽत्यन्तं चञ्चलमस्ति । यतः वेगेन कदाचिदेकत्र कदाचिच्चान्यत्र गच्छति तच्च प्रमाथि भवति अर्थात् शरीरेन्द्रियादीनपि मथ्नाति । यत्र गच्छति तत्रैवेन्द्रियादीनपि गन्तुं विवशयत-

---

1. श्रीमद्भगवद्गीता - 6/33-34. 2. तत्रैव - 6/35-36.

पूर्वकं सदैव भवति । शरीरमपि चेतसाज्ञानुसारमेव कार्यं करोति, एतदेव शरीरे-न्द्रियादीनां मन्थनं प्रापितं भवति । एतदतिरिक्तमिदं मनः सर्वथा बलवद् भवति । अतएवास्य निरोधो न सुकरो भवति । एतस्य मनसः एव बलवत्ता दृढता भवति, अथाधिकारैः मनोऽन्तः संयुक्तं भवति, ततोऽपवारणमेतस्यात्यन्तं कठिनं कार्यं भवति । एवम्भूतस्य मनसो निरोधनमत्यन्तं कठिनं कार्यमस्ति । यथा वायुं रोधयित्वा कोऽपि जनो नैकत्रावस्थापयितुं शक्नोति, वायुरेव चलनशीलो भवति । तस्यैकस्मिन् स्थाने निरोधो यथा कठिनतरो भवति, तद्वद् तथैव मनसोऽवरोधोऽतीवकठिनो भवति ।

उपरि प्रतिपादिते "साम्येन मधुसूदन" इति श्लोके "साम्येन" इति पदे तृतीयाविभक्तिर्हेत्वर्थे वर्तते । येनायमर्थः प्रकटितो भवति, यत् साम्य-बुद्धेः कारणभूतो योगः मया प्रकटितः । सावधानतया पूर्वप्रकरणावलोकनात् परं ज्ञातुं शक्यो यत् भगवान् श्रीकृष्णः पञ्चमाध्याये कर्मयोगिनां बुद्धेः समानत्वेन सर्वत्रावलोकनम्, एतस्याः समत्वबुद्धेरेवोपदेशः कृतः, तस्याश्च बुद्धेः सम्पादनार्थं योगसाधनं ज्ञापितम् अथवा "साम्येन" इत्यत्रैतस्याः तृतीया विभक्तेः "प्रकृत्या-दिभ्यः तृतीया" इति वार्तिकेन भेदार्थे तृतीया स्वीकर्तव्या भविष्यति । एते-नायमभिप्रायो निःसृतो भविष्यति, यत् समत्वरूप एव तस्य सम्पादको योगो मया उक्तः, सोऽपि योगो मनसश्चाञ्चल्यकारणादत्यन्तं कठिनमिव प्रतिभाति ।

इतीदं स्मरणीयं भविष्यति, यदर्जुनस्य मनः संयमः महाभारते स्थाने-स्थाने वर्णितो वर्तते । यदा अध्ययनव्याजेन द्रोणाचार्यस्य पार्श्वे सर्वे क्षत्रिय-कुमाराः शस्त्रविद्यां प्राप्तवन्त आसन्, तस्मिन्नवसरे शिक्षादानानन्तरं गुरुः

द्रोणाचार्यः एकस्मिन् दिवसे तेषां परीक्षणं नियतं कृतवान् । बाणविद्यायां मुख्यत्वेन लक्ष्य-वेध एव प्रधानो भवति । अतो लक्ष्यवेधस्यैव परीक्षा तस्मिन् दिने नियता जाता । एकं कृत्रिमं पक्षिणः स्वरूपं निर्माय तदीय चक्षुरपि निर्मितम्, तस्मिंश्च चक्षुषि एको लघुभूतः कृष्णबिन्दुः संयोजितः । सर्वेऽपि शिष्याः आदिष्टाः यत् एनं कृष्णबिन्दुं स्वबाणेन वेद्धुमभिलक्ष्यं कुरु । सर्वोऽपि जनः वेधनार्थमुत्तिष्ठितो भवत् । यो धनुः हस्ते आदाय वेधनार्थमुद्यतो भवति, तं गुरुः द्रोणाचार्यः पृच्छति यत् "वत्स तिष्ठ, त्वं वृक्षोपरिस्थं पक्षिणं पश्यसि ?" स कथयति यत् "पुरतो वृक्षं पश्यामि, ततो वर्तमानं पक्षिणं पश्यामि । तदीयं चक्षुः, तस्मिन्वर्तमानं कृष्णबिन्दुञ्च पश्यामि । गुरुः कथयति यत् "तिष्ठ त्वया लक्ष्यवेधो नैव कर्तुं शक्यः" । इत्थमेव सर्वानपि परीक्षया अवरोधितवान् । यदा चार्जुनः उत्थाय पुनः आगतवान्, तदा तमपि गुरुस्तमेव प्रश्नं पृष्टवान् यत् "पुरः किं पश्यसि ?" अर्जुनः उदतरत्, यत् "अहं नान्यत्किञ्चिदपि पश्यामि, केवलं तत्र कृष्णबिन्दावेव मदीया दृष्टिरवस्थिता वर्तते, अहं तमेव पश्यामि ।" गुरुरर्जुनाय आशीर्वचः प्रदाय कथितवान् यत्" त्वया नूनमेव लक्ष्यवेधः कर्तुं शक्यः । इदानीं बाणपरित्यागस्यापि आवश्यकता नास्ति ।" मनः संयमस्यैतत्प्रत्यक्षमुदाहरणमासीत् । मनः संयमं विना एतादृशी एकाग्रता नैव कदापि सम्भाव्या ।

अनन्तरं प्रौढावस्थायां यदा भगवतो वेदव्यासस्योपदेशेनायमिन्द्रस्य पार्श्वे शस्त्रास्त्रविद्यां प्राप्तुं गतवान् तदैकस्मिन् दिवसे इन्द्रसभायां स्वर्वेश्यानां नृत्यं प्रारब्धमासीत् । तत्र उर्वशीनाम्नी अप्सरा यदा उत्तिष्ठिता तदार्जुनेन विचारेण तं वारम्वारमपश्यत् यदेतेनैव मदीयो वंशः प्रवृत्तोऽभवत् । यदा च सः

शापवशात् मर्त्यलोके गतवती तदा पुरूरवसो राज्ञः पार्श्वे एव स्थिता अभवत्, पुरूरवसा चैतस्यामेव या सन्ततिः उत्पादिता, तस्यैव मदीयो वंशः प्रवृत्तोऽभूत् । एतस्य मनसि अयं विचार आसीत् किन्तु इन्द्रः एनां वारं वारमुर्वशीमवलोकयन्तं दृष्ट्वा चानुमानं कृतवान् यत् अर्जुनोऽनया मोहितोऽभवत् । अतो वारम्वारं पश्यति अर्जुनः स्वर्गलोकस्यातिथिः अतो एतस्य सत्कारः आवश्यकः, इत्थं विचारयित्वा इन्द्रो गुप्तरूपेण उर्वशीमाकारितवान् यत् "अद्य रात्रौ त्वमर्जुनस्य पार्श्वे गच्छ, गत्वा चैतस्य मनोरथं पूरय" । आज्ञानुसारमुर्वशी अर्धरात्रे अर्जुनस्य पार्श्वे गतवती, हावभावैश्च तं मोहितवती । तस्मिन् काले अर्जुनः एतदेवोक्तवान् यत्- "देवि" । त्वं मद्वंशस्य प्रवर्तिका असि, अनेनैव विचारेणाहं त्वामपश्यम् । काम-वासनापि सर्वथा नास्ति" । उर्वशी वारम्वारम् अबोधितवती यत्" यदि स्वर्गलोकस्य वेश्या सः पिता धर्मं कृत्वा स्वर्गं प्राप्नोति तदा सोऽपि अप्सराभिः सह रमते तदीय-पुत्रोऽपि च यदि धर्माचरणेन स्वर्गप्राप्तिं कुर्यात् तदा सोऽपि स्वर्गे अस्माकमनु-स्यात् । दिव्यासु इत्थम्भूतस्य सम्बन्धस्य विचारो न भवति । अतो वंशप्रवर्तिका-यां सत्यामपि इन्द्रस्याज्ञया अहं तव पार्श्वे आगतवती अस्मि । त्वया मया सह रमणं कृत्वा स्वर्गस्यानन्दः प्राप्तव्यः" । "किन्तु अर्जुन मनोनैव कदापि विचलित-मभवत्, तेन देवीमेवोक्तं यत् - "देवि, अहमिदानीं शिक्षां प्राप्तुमागतवानस्मि, ब्रह्मचर्ये भवामि, अहं नैव कदापि त्वां स्पृक्ष्यामि" । अन्ततः "किञ्चित्कालं यावद् नपुंसकत्वं भविष्यति" इति शापं प्रदायोर्वशी परावर्तितवती । अर्धरात्रि-काले एकान्ते प्राप्तोर्वशी सदृशी या अप्सराः तस्याः प्रत्याख्यानं नैव सहजं भवति। एतावन्मनः संयमस्य यः परिचयः प्रदत्तः, सोऽर्जुनोऽपि मनसि नैव विचलितेति

अध्यायान्तप्रश्ने च स्पष्टं कथयति यत्" भगवान् मनसोऽवरोधोऽत्यन्तं कठिनं कार्यं भवति" । पुनरपेदानीन्तनाः जनाः यत् मनः संयमे एतावता शीघ्रं सिद्धिं कुर्वन्ति – इति महान्तमपराधं कुर्वन्ति – इति ज्ञातव्यम् । यदा कश्चन शिक्षार्थी श्रेण्यां पठन् कमपि प्रश्नं कठिनमनुभवति, तदा शिक्षकः तं कथयेत् यत् "किमपि कठिनं नास्ति, त्वं व्यर्थमेवापश्यसि"– तदा तु प्रश्नस्य काठिन्यं सर्वथा व्यपगतं भवति । किन्तु यदि शिक्षकोऽपि कथयेत् यत् – प्रश्नोऽयं कठिनोऽस्ति, अभ्यासं कुरु वै शनैःशनैः ज्ञास्यसि" – तदा तस्य प्रश्नस्य कठिनता सर्वथा ज्ञाता भवति ।

अत्र भगवतः श्रीकृष्णस्यापि स्वभ्युपकारकोत्तरं वर्तते यत् – हे महाबाहो ! अर्जुन ! निःसन्दिग्धं मनोऽत्यन्तं चञ्चलमस्ति, एतस्य चावरोधोऽत्यन्तं कठिनतरं कार्यं भवति, किन्तु अभ्यासे सति वैराग्य भावनया चावरोद्धुं शक्यते" । इत्थञ्च मनसोऽवरोधस्य किञ्चित् कठिनता भगवताऽपि स्वीकृता, तथा वैराग्य भावनाभ्यासं चोपदिष्टवान् ।

अर्जुनस्य प्रश्नस्याशयोऽयं तात्पर्यं वर्तते, यत् मनसोऽवरोधस्तु भवता योगमार्गे कथितः, किन्तु तदीयः उपायो नावबोधितः । स उपायः स्पष्टतया वक्तव्यः, येन मनो निरुद्धं भवेत् । तदीयमभिप्रायं ज्ञात्वा भगवान् श्रीकृष्णोऽभ्यासो वैराग्यं मनसो निरोधोपायतया ज्ञापितवान् । पातञ्जलयोगसूत्रेऽपि एतदनुसारमेव कथितमस्ति यत् – "अभ्यासवैराग्याभ्यां तन्निरोधः" इत्यादि अभ्यासवैराग्ये उभेऽपि मिलित्वा मनसोऽवरोधने कारणे भवतः । अग्रेऽनयोर्विवरणमपि कृतमस्ति यत् "तत्र स्थितौ यत्नोऽभ्यासः" तथा "स तु दीर्घकाल-नैरन्तर्यसत्कारासेवितो दृढभूमिः" [समाधिपादः 13–14] एतेषां सूत्राणाम-

साधको भवति यद् मनसोऽवरोधस्य प्रयत्न एवाभ्यासशब्दवाच्यो भवति । स एव प्रयत्नो यदा बहुकालपर्यन्तं क्रियते, न योपेक्षाबुद्ध्या किन्तु आदरेण अर्थात् मनसः संलग्नभावेन क्रियते, निरन्तरं च भवेत् । अर्थात् एकदिनमभ्यस्य अग्रे दिनद्वयस्य परित्यागः, कथमपि न भवेत्, किन्तु निरवच्छिन्नतया भवेत्, सत्कारः अर्थात् मनसि श्रद्धाऽपि भवेत्, तदा सोऽनायासेनैव सिद्धिः प्राप्ता भवेत् तदा सः प्रयत्नः दृढः अवश्यं फलप्रदो भवति । अनेनाभिप्रायेण सनातने धर्मे नित्यसन्ध्योपासनादिकरणस्याप्युपदेशः कृतो भवति । यथा कस्यचन दुग्धार्थिनो गमनकाले ह्येकस्मिन् निर्दिष्टे स्थाने अवरोधनस्याविच्छिन्नक्रमो भवेत्तदा अग्रे सः तस्मिन् स्थाने गत्वा स्वयमेवावस्थास्यते । इत्थमेव मनो यदा अल्पकालं यावदेकस्मिन् स्थले अवरोधयेत्, तदा तत् शनैः शनैरवरोधस्यापि कालो वर्धेत, एकस्मिन् दिने एकनिमेषो यावदवरुद्धस्तदा द्विचतुर्दिनेषु निमेषद्वयमपि स्वयमेवावस्थास्येत् । इत्थमनेनैव क्रमेण कालं वर्धयन् बहुकालपर्यन्तमवरोधोऽपि भविष्यति । सन्ध्याकाले उपासनाकाले वा इयमेव प्रक्रिया कार्ये आगच्छति, तदा किञ्चित्कालं यावत् मनसः एकाग्रीकरणं कृतम्, अग्रे च तामेकाग्रताम् आदरसत्कारपूर्वकं वर्धयेत्, तदा बहुकालपर्यन्तं मनोऽवस्थास्यते, इत्थमेव शनैः शनैः बहुकालिकाग्रतायाः समाधिरपि प्राप्तुं शक्यते । द्वितीयोपायस्य वैराग्यस्य किञ्चिद् विवरणं "यतो यतो निश्चरति" इति श्लोकव्याख्यानेन भवति ।

"यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥"[1]

---

1. श्रीमद्भगवद्गीता - 6/26.

मनो यद्यपि स्वभावेनैव चञ्चलं भवति, अतः एतस्य स्थिरीकरणं सर्वथा कठिनमस्ति । किमपि निमित्तं लब्ध्वा इदं मनो विषयपर्यन्तं धावति, किन्तु योगी सर्वथा सावधानतया भवेत्, यत् येन येन निमित्तेनेदं मनो धावत्यथ यं यं विषयं गच्छेत् तस्यैव विषयस्य दोषानुसन्धानं कृत्वा मनस्तस्य गमनादवरोधयेत् इत्थम्वावरोधनेन सर्वांगतं मनः आत्मन्येव योजयेत् । "शनैः शनैरवरोधयेदेव तात्पर्यं तन्नाशम् । विषयेषु दोषदर्शनेनैव वैराग्यं जायते । एतस्य दोषदर्शनस्य प्रपञ्चः शास्त्रेषु बहुधा उपलभ्यते । यथा च धनंप्रति मनो गच्छेत्तदा तत्रैतद् विचारणीयम्, भवति यत् धनोपार्जने महान् क्लेशो भवति, तच्च यदि विनश्येत्, तदा पुनर्महान् अनुतापोऽपि जायते, एवं यावत्पर्यन्तं धनं पार्श्वे भवेत्, तावत्पर्यन्तमात्मनि स्वरक्षायै मोहो जायते, धनसंग्रहस्य सर्वाण्यपि प्राणिनः दुष्टतया ज्ञात्वा तेषामनादरोऽपि क्रियते । तेन अन्यैः मनुष्यैः वैरं वर्धते, तच्च वैरमपि सर्वथा दुःखदायि भवति । इत्थमन्यादृशानर्थेऽपि यदा दुःखमेव दुःखं भवति तदा धने सुखं कुतः आयात् ? इत्थमेव स्त्रीषु यदि मनः संयुज्येत्, तदा तत्रापि दोषदर्शनं कर्तव्यम्, यत् यस्मिन् सौन्दर्ये आसक्तं सन्मनः स्त्रीषु आपतति, तच्च सौन्दर्यं वास्तवं किम् ? स्त्रीणां कुचौ मांसग्रन्थियुतौ, मुखं चर्माच्छादितं श्लेष्मागारं भवति, यदैतान्येव वस्तूनि बहिः कृतानि भवन्ति, तदा वयं घृणां कुर्मः पुनश्चर्मावरणे आवृते एतानि वस्तूनि चित्ताकर्षकाणि भवन्ति ? एवमेव शब्दस्पर्शगन्धादिषु दोषदृष्टिं कृत्वा तत्र गमने मनसोऽवरोधः कर्तव्यः, एतच्च मनः बुद्ध्या वारम्वारं ज्ञापनीयम्, यत् परमं सुखमात्मन्येव वर्तते । अत एवात्मनि स्वापेक्षया अधिकं प्रेम प्राणिनां जायते । अन्यत्र तावदेव प्रेम भवति, यावत्तदात्मानुकूलं भवति । केनापि पुत्रमित्रकलत्रादयः स्वात्मने यदि किञ्चिदपि विपरीतमाचरे-

सुन्दरत्वपरितोषे तत्प्रेमाद्वैतस्य क्षये परिणमते । इत्थञ्च प्रेम यदा आत्मनोऽनु-
कूलतायां निर्भरं भवति, तदा आत्मैव प्रेम्णो मुख्यं स्थानं तिष्ठति, प्रेम च सुख-
कारणादेव जायते, अथवा सुखस्यैव परिणामः प्रेमरूपेण प्रकटितो भवति तदा पुन-
रात्मनः एव परमसुखरूपता सिध्यति । इत्थञ्च आपतिता मनः आत्मन्येव
स्थिरीकरणं कर्तव्यम् । एवमेव लोकदृष्टिना स्थिरता जायते । अत एव शास्त्रेषु
वस्तुविचार एव कामस्य विरोधी प्रतिपादितो भवति । सर्वविषयकस्वरूपविचारे
मनः संयोजनीयम्, यत् किमिदमस्ति ? कथमुत्पन्नम् ? का चैतादृशी स्थिरता
यस्मिं, यत् कारणात् मनस्तत्र गच्छति, यथा च कस्मिंश्चिदपि मनः आसक्तं भवेत्तदा
तदैतद्विचारणीयं भवति, यत् स्वल्पं प्रकारभेदैः पदार्थानां सम्बन्धश्च प्रक-
टितं भवति, क्षणे क्षणे च विपरिणमते । किमपि वस्तु पाषाणखण्डेन पिष्यते, तदा
पेषणकाले तत्र क्रमेण कति प्रकारकाणि रूपाणि भवन्ति । तस्य च पिष्टस्य स्वरूपं
मूलवस्तुनोऽत्यन्तं पृथगेव प्रतीयते । मेंहदी इत्यादिनि कस्मिन् कस्मिन् वस्तुनि
तु एतावत् परिवर्तनं जायते, यज्ज्ञानमपि कठिनं भवति यदिदं कस्य वस्तुनः
पेषणमस्ति । इत्थमेव चेतनप्राणिष्वपि अत्यन्तं परिवर्तनमवलोक्यते, यत् युवा-
वस्थायां यल्लावण्यं चमत्कारो वा युवकानां स्त्रीणां वा मुखे अवलोक्यते, तत्कि-
ञ्चित्समयानन्तरं नैव जायते । वृद्धावस्थायान्तु इयं विकृतिरेतावत्पर्यन्तं वर्धते,
यत् यस्य दर्शनार्थं पूर्वमत्यन्तमुत्सुकः आसम्, तेनाद्य घृणायाः दृष्ट्या अहं पश्यामि।
इत्थम्परिवर्तनशीले वस्तुनि किं वा प्रेमकर्तव्यम् ? इत्थम्भूतं वस्तु विचार्य मनः
आसक्तेरपसारणं कर्तव्यम् । इत्थमेव स्पर्शगन्धरसादिषु मनः आसक्तं भवेत्तदा
तत्रापि वस्तु विचारणीयं भवति, यत् यः पदार्थोऽद्यात्यन्तं रुचिकरः सुस्वादि-

ष्टश्च प्रतीयते, स एव दिनद्वयानन्तरमत्यन्तमरुचिकर इव च प्रतीयते । यदि सः पदार्थो वास्तवरूपेणोत्तमो भवेत्तदा दिनद्वयानन्तरं किं जातं यदद्य रुचिस्थाने घृणा सञ्जाता । एतेनेदं सिध्यति यद् रुचिविषयता तस्य पदार्थस्य स्वाभाविकी नास्ति, अपि तु आगन्तुक्येव वर्तते, यत्किञ्चित्कालानन्तरं परिवर्तितं सञ्जायते । आगन्तुकता एतेनापि स्पष्टमस्ति यत् लवणमधुराम्लादिपदार्थेषु पृथक् पृथक् सत्स्वपि तावती रुचिर्नैव जायते, तेषां विशिष्टप्रकारेण संयोगं कृत्वा पदार्थेषु अत्यन्तं रुचिर्जायते । अनेकविशिष्टप्रकारकसंयोगेनापि पदार्थेषु रुचिरता विशेषरूपेण सञ्जायत एव । इत्थमेव आगन्तुकतामनित्यताञ्च चिन्तयित्वा मनसः आसक्तिं परित्यजेत् । इत्थञ्च सर्वैरपि विषयैः सह आसक्तेरपसारणे सति मनः स्वयमेवाचलं भविष्यति न तत्सुखान्वेषणे च संयुक्तं भविष्यति । शनैः शनैः यदा मनः स्थिरतामनुभविष्यति, तदा तत्स्वयमेव स्थिरस्य पुरतोऽग्रेसरं भविष्यति, । एवमेव वेदाद्युक्ते स्वर्गसुखेऽपि क्षयं तारतम्यञ्च चिन्तयित्वा ततोऽपि मनोऽपसारयेत् । भोगानन्तरं स्वर्गसुखस्यापि विनाशो भवत्येव, यथा च "क्षीणे-पुण्ये मर्त्यलोकं विशन्ति" इत्यादिरीत्यागीतापद्येन एव ज्ञापितमस्ति । तत्रापि कश्चन सामान्यरूपेण देवभावं प्राप्नोति, केचन पुरुषाः इन्द्रवरुणादयोऽधिकारिणो भवन्ति, स्वतः उच्चपदे अधिष्ठितं कमपि पुरुषमवलोक्य ईर्ष्योदयः स्वाभाविको भवति । इत्थञ्चातुलरागमात्रजन्यविपत्तिर्देवभावेऽपि आगच्छत्येव । इत्थं विचार्य स्वर्गसुखादपि चित्तासक्तिरपसारणीया । एतदेव योगसूत्रेऽपि प्रतिपादितमस्ति यत्- "दृष्टानुश्रविकविषयवितृष्णस्य वशीकार संज्ञा वैराग्यम्" इति, अर्थात् एतस्य लोकस्य प्रत्यक्षविषयात् स्वर्गलोकस्य श्रुतिविज्ञातविषयाच्च

वान्ताश्च: अभ्यासं नामवैराग्यं भवति । योगमार्गे "वशीकारसंज्ञा" नाम्नापि सम्बुध्यते अर्थात्तस्यामवस्थायां मनः स्ववशे जायते । अभ्यासवैराग्याख्ये एते द्वे एव मनसोऽवरोधस्य उपायभूते भवतः ।

कठिने कुरुक्षेत्रेऽपि यावद्वयं ज्ञात्वा मनसो वरोधे प्रवृत्तिर्भवितुमर्हति, एतदेवाह कथयति यद् यावत्पर्यन्तमात्मनोऽर्थात् मनसः संयमो न जायते, तावत्पर्यन्तं योगस्यापि प्राप्तिर्भवितुं नार्हति । यथा – "असंयतात्मना योगो दुष्प्राप इति मे मतिः" इति । मनश्च वशे कृत्वा प्रयतेत्, तदेवोपायेन योगः प्राप्तो भवेन्नान्यथा । अतो यदि योगप्राप्त्या संसारबन्धनात् परित्राणोऽभीष्टस्तदा मनसः संयतुमभ्यासवैराग्ये विधेये । अत्र योगशब्दस्यार्थः ज्ञानयोगः कर्मयोगो वा कर्तव्यः । यतो हि यस्य योगस्य वर्णनं षष्ठेऽध्याये कृतमस्ति, तस्यापि मनसो निरोधस्यैव वदति । यथा च भगवान् पतञ्जलिरपि योगस्य लक्षणं कुर्वन् कथितवान् यद् "योगश्चित्तवृत्तिनिरोधः" इति, अर्थात् चित्तवृत्तीनां निरोध एव योगो भवति अत्र गीतायामपि पूर्वोक्त पद्यैरेतदेव सिध्यति यद् मनसोऽवरोध एव योगो भवति" । मनसश्चाञ्चल्यकारणात् योगस्थितिः मया नैव ज्ञायते" इति अर्जुनस्यापि प्रश्नेनैतदेव सिध्यति यद् मनसोऽवरोध एव योगशब्दार्थो भवति । पुनश्च "मनसो वरोधं विना योगस्य प्राप्तिर्भवितुं नार्हति दुष्प्राप्यो वा" अर्थात् काठिन्येन योगप्राप्तिर्भवति, एतस्य कथनस्य तात्पर्यमेव किं भवितुं शक्नोति ? योगेनैव योगस्य प्राप्ति साधनेन तु अर्थसंगतिः भवितुं नार्हति । उपायोपेयौ एकभूतौ भवितुं नार्हतः ? अतो योगशब्दार्थः "ज्ञानयोगः" "कर्मयोगः" इति स्वीकारेणैवार्थसंगतिः भविष्यति । यावत्पर्यन्तमन्तःकरणं वशे न भवेत् अर्थात् पूर्वोक्त

यावन्मनोयोगी न सिध्येत्, तावत्पर्यन्तं ज्ञानयोगः कर्मयोगो वा न सिध्येत् । तस्य साधनं वा अत्यन्तं कठिनमस्ति । मनो वशीकृत्य यत्ने कृते सति ज्ञानयोगः कर्मयोगो वा सिध्यति । श्रीमद्भगवद्गीतायाष्टीकाकारः श्रीमच्छङ्करानन्दजीमहोदयः योगशब्दार्थम् "कर्मयोग" एव करोति, श्रीमान्लोकमान्यबालगङ्गाधरतिलकमहोदयस्तु सर्वत्र गीतायाः योगशब्दार्थम् "कर्मयोग" एव करोति, अत्र च पञ्चमाध्यायादेव प्रकरणमपि कर्मयोगस्यैव प्रचलति । अतो योगशब्दार्थः "कर्मयोग" एव समुचितः प्रतिभाति । ज्ञानयोगकर्मयोगयोरुभयोरपि मनः संयमस्य मनसो वशीकरणस्य आवश्यकता तु निर्विवादमेव वर्तते । अतः उभावपि पक्षौ संगतौ स्तः ।

पूर्णरूपेण मनसो संयमकारणात् योगसिद्धिमप्राप्नुवतः पुरुषस्य गतिसम्बन्धे अर्जुनस्य प्रश्नः भगवतश्चोत्तरम् –

इत्थमन्य सन्देहे पतित्वा अर्जुनः पुनरपि प्रश्नमुपस्थापयति – हे कृष्ण ! यः श्रद्धापूर्वकं योगसाधने प्रवृत्तस्तु अभवत्, किन्तु अयतिः अर्थात् पूर्णरूपेण मनसो संयमकारणात् योगात्तस्य मनो विचलितमभूत् अतो योगसिद्धिर्नाभूत्, एवम्भूतस्य पुरुषस्य शरीरत्यागानन्तरं का गतिर्भविष्यति ?

हे महाबाहो ! किं स उभयभ्रष्टः पतित्वा अर्थात् कर्मोपासनायां संसारस्य सुखमपि तेन परित्यक्तम्, योगसिद्धिरपि न कृता, अत उभयभ्रष्टः सः पतितः ? तदा मेघसमूहात् पृथग्भूताः लघवो मेघाः इव छिन्नाभ्रो भूत्वा विलीन एव भवति ? अर्थात् वायवीयं शरीरं परित्यज्य प्रेतशरीरे एव इतस्ततो गमिष्यति ? यतो हि कस्मिन्नपि मार्गे तेन सिद्धिर्नाधिगता । वेदोक्तं कर्मानुष्ठानं परित्यज्य ब्रह्मज्ञानोपाये संयुक्तः आसीत्, तत्रापि विमूढोऽभवत्, अर्थात् तत्रापि सो नागच्छत्.

तदा अन्ते तदीया दशा अशान्तिरेव भविष्यति ।

हे कृष्ण ! त्वं एतस्मिन् मदीयसन्देहनिवारणे त्वमेव समर्थोऽसि । त्वदतिरिक्तो नैव कोऽपि पुरुषः एतत्सन्देहापसारको भविष्यति यतो हि पर-लोके कस्यापि का गतिर्भविष्यति, एवं परोक्षविषयमीश्वरातिरिक्तः को वा-ऽन्यो जानीयात् ? कर्मानुसारमीश्वर एव प्राणिनां विभिन्नं फलं ददाति, स एव च जानात्यपि यत् कस्य कर्मणः किं फलं भविष्यति ? अन्ये येन परलोकस्य वार्तां कुर्वन्ति इति तेषां केवलं संभ्रान्तिमात्रं भवति, ततः संशयस्य छेदनं नैव सम्भवति । भगवान् श्रीकृष्णः एतस्य प्रश्नस्योत्तरं ददाति यत् - हे प्रिय पार्थ ! इत्थं बोधयित्वा स्वकीयं प्रेम तत्र प्रकटयति यत् त्वमेवं प्रश्नं पृच्छसि, महान् सुयोग्यः श्रोता भवसि । तदेतस्य प्रश्नस्योत्तरं सर्वथा सम्यक्तया दास्यामि, अथवा अयमपि आशयो भविष्यति, यत् त्वं पृथा पुत्रोऽसि इति कृत्वा मनुष्या-वतारे मम सम्बन्धी असि एतस्मात्कारणात् एतत्सन्देहापसारणमावश्यकमेव भवति । अत्र लोके परत्र च तस्य पुरुषस्य विनाशोऽर्थात् तव सम्भाविता दुर्गतिः नैव भवि-ष्यति । एतन्नूनमेव जानीहि, यत् कल्याणकारकः शुभकार्यकर्ता पुरुषो नैव कदा-चिद् दुर्गतिं प्राप्नोति । यद्यपि यस्मिन् मार्गे गतवान् तत्र पूर्णतया सिद्धिं न प्राप्नोत्, तथापि तदीयमुद्देश्यं शुभमेवासीत् समीचीने एव च मार्गे गच्छत् पुनश्च सः कथं दुर्गतिं प्राप्स्यति ?

कां गतिं सः प्राप्स्यति ? एतस्य वर्णनमग्रे करोति यत् सः शुभो-द्देश्यकरणात् "पुण्यकारकाः पुरुषाः यत्र लोके गच्छन्ति, तमेव लोकं स प्राप्नोति तत्र च स बहुकालपर्यन्तं निवासं करोति । भोगेषु विरक्तान्यत्वादेव सः योगात्-

पतितो भवति । अतः इदानीं यावत्साधितो योगस्तदीयेच्छानुसारं तस्य तत्तद्-भोगप्राप्त्यर्थमेव स्वर्गे गमिष्यति । तत्र च येषां भोगानामिच्छया अयं योगाद् विच्युतोऽभूत् तानेव भोगान् सः प्राप्स्यति । स्वर्गनिवासं चिरकालं नैव कर्तुं शक्यते । पुण्ययोगाभ्यासे यावद्बलं भविष्यति तावत्कालमेव भोगप्राप्तिर्भविष्यति । अतः सामान्यरूपेण "शाश्वतीः समाः" इति प्रतिपादितमस्ति । भोगप्राप्त्यवसानानन्तरं सः पवित्रे तथा धनधान्यसमृद्धपुरुषगृहे जन्मगृह्णाति, यतो हि योगभ्रष्टोऽयं विचलितोऽभूत्, अतो मुक्तिमपि न प्राप्नोत् । सम्यक्कार्यव्यस्तताकारणात् स्वर्गसुखमप्राप्य अग्रे जन्म ग्रहीष्यति । अथवा योगिनां कुले शीतस्य योगभ्रष्टस्य जन्म भवति, एवञ्जन्मलाभो अनुपायां कुलेऽत्यन्तं दुर्लभो भवति । अनेतत्संतुष्यते यद् लक्ष्मीवतः पुरुषस्य गृहे जन्मग्रहणापेक्षया यस्मिन् कुले परम्परया योगाभ्यासः प्रचलितो वर्तते, तस्मिन् कुले जन्मधारणमत्यन्तं दुष्करं कठिनञ्च भवति । यस्मिन् कुले सदैव योगाभ्यासः प्रचलितो वर्तते, तत्र शुक्रशोणित द्वारा अपि अत्र योगाभ्याससंस्कार आगमिष्यति । पूर्वजन्मसंस्कारा अपि योगानुकूलाः स्युः, एतस्मिन् जन्मनि शरीरेऽपि यदा योगाभ्यासस्यांशः प्रविष्टो भविष्यति, तदा सिद्धिप्राप्तौ शीघ्रसुगमता भविष्यति । अनेनैवाभिप्रायेण भगवाने तज्जन्मात्यन्तं दुर्लभमिति प्रतिपादितवान् । अतिकठिनजन्मलाभः शीघ्रदुर्लभ एव भवति । बहुकालपर्यन्तं पूर्वजन्मनि योगाभ्यासोऽभूद्, अतएव न्यूनताभवेद् तद्वैतज्जन्मप्राप्तौ भवितुमर्हेत्, एतदेव दुर्लभतरशब्देन सूच्यते । अस्मिन् पदेऽपि वर्णव्यवस्थायाः मूलं भगवान् सूचितवान्, यद् योगिनां कुले उत्पत्तिकारणाद् शुक्रशोणितद्वारा योगाभ्यासिनाम् अंशाः अत्र प्रविष्टाः स्युस्तदा शीघ्रमेव योगाभ्यासः सेत्स्यति ।

यस्मिन् कुले जन्म भवेत्, तस्यैव कुलस्य संस्कारो बालके आगच्छति । एतदेव जन्म सिद्धवर्णव्यवस्थायाः मूलमस्ति ।

उभयविधजन्मनोर्मध्ये एकतरजन्मलाभेऽपि पूर्वशरीरबुद्धियोगस्तु अनेन प्राप्यत एव । श्रुतावपि कथितमस्ति यत्- "तं विद्या कर्मणी समन्वारभेते पूर्वप्रज्ञा च" इति । अर्थात् यदा मनुष्यः पूर्वशरीरं परित्यज्यान्यस्मिन् शरीरे गच्छति, तदा तेन सह तदधिगता विद्या, तत्कृतं कर्म, तदीय संस्कारोऽपि सहैव प्रचलति, प्राक्तनीनाबुद्धिरपि सहैव गच्छति । तया बुद्धिकारणात् पुनः ततः तया युतः तस्य योगाभ्यासस्य यत्ने पूर्णसिद्धि प्राप्तौ संयतते । "कुरुनन्दन," इत्यनेन सम्बोधनेनापि ध्वनितं भवति यत् त्वमपि पवित्रे कुरुकुले जन्मलब्धवानसि, अतस्त्वमपि एतदभ्यासाधिकारी भवसि तदभ्यासानुसारेणैव च भक्तोयोगस्य ग्रहणं पृच्छति ।

अर्जुनस्य मनसि एतादृशी शंका समुत्पन्ना भवति, यत् एतस्मिन् जन्मनि यदि धनसमृद्धिमतः कुले स आगतस्तदा भोगविलासादिष्वेवरतो भविष्यति, अननुकूलायां परिस्थित्यां योगाभ्यासे प्रवृत्तिः कथं भविष्यति ? तदीयमभिप्रायं ज्ञात्वा भगवाननुस्मारयति यत् पूर्वं योऽभ्यासो विहितः, स एव तं विवशं कृत्वा योगाभ्यासे रमयति, अर्थात् पूर्वजन्मकृताभ्यासः प्रबलो भवति, स एतज्जन्मनो विरुद्धपरिस्थितिमपि पराभूय मनोऽपकर्षति। अनेनेदमपि ज्ञातव्यं भविष्यति यदि अस्मिन्जन्मनि किमपि प्रबलं पापमभूत्, तदा पूर्वजन्मसंस्कारानपि अधः पातयेत् । अनेन विचारेण पापात्सुरक्षणावश्यकमेवास्ति । अनेनाभिप्रायेण पूर्व-पद्ये "श्रीमताम्" इत्यनेन सह "शुचीनाम्" इति विशेषणमपि प्रदत्तमस्ति ।

अयमेवाभिप्रायो वर्तते यद् यदि पवित्रे कुले जन्मगृहीष्यति तदा कुलमर्यादानुसारं पापकर्मभ्यः सुरक्षितो भविष्यति । चरकसंहितायामपि कथितमस्ति यद् -

"हन्यते दुर्बलं दैवं पौरुषेण विपश्चिता ।"

अर्थाद् पूर्वजन्मसंस्कारो यो दैवपदवाच्यो भवति, यदि तद् दुर्बलं भवति, एतज्जन्म-पुरुषार्थः प्रबलो भवति तदा तद् दैवमपसारयति । यदि पूर्वजन्मसंस्कार एव प्रबलो भवेद्, एतज्जन्मपुरुषार्थो यदि दुर्बलस्तिष्ठेद् तदा पुरुषार्थोऽपि विफल एव । दैवानुसारेण सिद्धिरसिद्धिर्वा किमपि भविष्यति । अस्माभिर्दैवं नैव ज्ञातुं शक्यम्, तस्य कथं भवति ? अतः पापान्निवारणे एव यतनीयम् । यदि किमपि प्रबलं पापं नाभूत्तदा अवश्यमेव प्रबले प्रतिबन्धके सत्येव योगभ्रष्टः पुरुषो विवशः सन् योगे पूर्वाभ्यासद्वारा भविष्यत्येव । यथा च प्रबले प्रतिबन्धके सत्यपि ध्रुव प्रह्लादा-दयो भगवद्भक्ताग्रेसराः सञ्जाताः ।

## 2. अनीश्वरवादिदर्शनम्

### [अ] सांख्यदर्शने मनसः स्वरूपं लक्षणञ्च

महर्षिकपिलस्य सांख्यदर्शनमत्यन्तं प्राचीनदर्शनमस्ति । सांख्यदर्शने प्रायः प्रकृतिपुरुषभेदेन तत्त्वद्वयं स्वीकृतमस्ति । सांख्यदर्शने वर्णितः पुरुषोऽनेक-

प्रकारको भवति । अयञ्च पुरुषः असंगः, शुद्धचिदात्मस्वरूपश्चापि भवति । अत्र मतो प्रकृतिपुरुषावुभावपि नित्यौ भवतः । सांख्यदर्शनं परिणामवादिदर्शनमस्ति । अर्थात् त्रिगुणात्मकप्रकृतेरेव महदहंकारादिपरिणामैर्विश्वस्य सृष्टिः भवति । अतः संसारस्य प्रत्येकोत्पन्नपदार्थस्त्रिगुणात्मको भवति । महतः समष्टिबुद्धेस्तथा अहंकाराद्वा परवर्तिनः सर्वेऽपि पदार्थाः यथा इन्द्रियगण आदय उत्पन्ना अभूवन् । वैशिष्ट्योक्तमस्ति यत् सांख्यदर्शनस्य पदार्थविवेचनं [कैटेगरीज] सृष्टि-प्रक्रिया च योगदर्शनस्यापि मान्यमस्ति । योगदर्शने मनसो लक्षणं स्वरूपञ्च वर्णयता अस्मिन् अध्याये एतस्य विवेचनं पूर्वमेव कृतम् । अतोऽत्रैतस्य विस्तृति-करणं नात्यन्तमावश्यकतां भजते ।

उत्तरमीमांसायामपि [वेदान्ते] सृष्टिप्रक्रिया तथा मनसः उत्पत्तिः प्रायस्तथैव वर्तते, यथा सांख्यदर्शने योगदर्शने च । वर्णिता अस्ति । उभयोः पर्याप्तसमानता अवलोक्यते । भेदः केवलमेतावानेव वर्तते, यत्सांख्यदर्शने प्रकृति-र्नित्यभूता स्वीकृता भवति, यदा च वेदान्तदर्शने सम्प्रभूतमौलिकसृष्टेः अभिन्न-निमित्तोपादानकारणं चित्तिशक्तिः अर्थात् आत्मा स्वीकृतो वर्तते ।

[ब] <u>पूर्वमीमांसायां मनसः स्वरूपं लक्षणञ्च</u>

पूर्वमीमांसादर्शनस्य प्रमाणप्रमेयाणां वर्णनं मानमेयोदयग्रन्थे कृतमस्ति । मीमांसादर्शनस्य त्रयः सम्प्रदायाः प्रसिद्धाः वर्तन्ते –

1– भाट्टसम्प्रदायः अर्थात् कुमारिलभट्टानुयायिनां सम्प्रदायः ।

2– प्रभाकरसम्प्रदायो गुरुमतं वा, यस्य प्रवर्तक आचार्यः प्रभाकरमिश्रः ।

3– तृतीयः सम्प्रदायः मुरारिमिश्रस्य भवति ।

भाट्टमते षट्प्रमाणानि स्वीकृतानि सन्ति । यथा- प्रत्यक्षम्, अनुमानम्, उपमानम्, अर्थापत्तिः, शब्दः, अनुपलब्धिप्रमाणञ्च । प्रमेयेषु द्रव्य-गुणकर्मसामान्यादयः कथिताः सन्ति ।

द्रव्याणां परिगणनकाले कुमारिलमते एकादशद्रव्याणि कथितानि सन्ति । यथा -

"पृथिवी सलिलं तेजः पवनानलतमस्तथा ।
व्योमकालदिगात्मानो मनः शब्द इति क्रमात् ।।
एकादशविधं चैतत् कुमारिलमते मतम्[1] ।"

एतेषु द्रव्येषु मनसः परिगणनमस्ति । शोधप्रबन्धस्य विषयः मनस्तत्त्वमेवास्ति । यतोहि मनस्तत्त्वस्य निरूपणं करणत्वेन कृतमस्ति, अतो मीमांसामते आत्मतत्त्वस्य परिचयः मनस्तत्त्वस्य निरूपणार्थमावश्यकमस्ति ।

"आत्मा चैतन्याश्रयः । स च मानसप्रत्यक्षगम्यः[2] ।"

अर्थात् आत्मा चैतन्याश्रयो भवति एतस्य चात्मनः मानसप्रत्यक्षं भवति । अयमात्मा देहेन्द्रियज्ञानसुखादितोऽपि भिन्नोऽस्ति । सांख्यदर्शने आत्मा अनन्तो विभुतया नित्यश्चापि भवति भोगस्वर्गापवर्गं [मोक्ष]मनुभवति । आत्मा अस्ति । अस्मिन् मते आत्मा वेदान्तदर्शनमिव ज्ञानस्वरूपं नास्ति यतोहि ज्ञानं क्षणिकं भवति, यतोहि सुषुप्त्यवस्थायां विज्ञानाभावस्यानुसन्धानं भवति अतो विज्ञानस्य नित्यत्वं नैवाङ्गीकर्तुं शक्यते ।

---

1. नारायणकृत मानमेयोदय - पृ० 151.   2. तत्रैव - पृ० 191.

प्रभाकरस्य मते बुद्ध्यादीनामात्मविशेषगुणानां विलये जाते सत्येवात्मनः स्वरूपस्थितिर्नाम मोक्षोऽस्ति । भाट्टमतमेतस्य मोक्षस्येदं स्वरूपं नैव स्वीकरोति, यतो हि मोक्षावस्थायामात्मनो विशेषगुणो यदि सुखं न स्यात्तदा एतादृशमोक्षं नैव कोऽपि वाञ्छेत् । प्रकृतिपुरुषयोर्विवेकेन पुरुषस्य स्वरूपस्थितिरपि नैव मोक्षपदवाच्या । एवम्भूतविवेकज्ञानोत्पत्तिस्तु आनन्दं विना नैव सम्भाव्या । अतस्तेनापि अपुरुषार्थत्वस्यापत्तिर्भविष्यति । अतः तादृशस्य मोक्षविषयकं मतमपि नैव समीचीनम्। अतो भाट्टमते दुःखस्यात्यन्तसमुच्छेदे सति आत्मनि पूर्वस्थित वर्तमानसुखस्य मनसा अनुभवकरणमेव आचार्यकुमारिलभट्टानुयायीनां मते मुक्तिरस्ति । यथा –

"दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः ।[1]
सुखस्य मनसा भुक्तिर्मुक्तिरुक्ता कुमारिलैः ॥"

आत्मनि यदि सुखनामको विशेषधर्मः सदा समवायसम्बन्धेन तिष्ठत्येव, तदा संसारदशायामेतस्यानन्दस्यानुभूतिः कथं न भवति ? इति शंका नाशंकनीया यतो हि अनुभवकारणानामभावात् संसारदशायामानन्दस्यानुभवो न स्यात् । देहेन्द्रियादेरात्यन्तिकपरिच्छेदेनानुगृहीतमेव मनः आत्मानन्दानुभवस्य साधनमस्ति, यथा –

ननु यदि संसारावस्थायामात्मसमवेत एवायमानन्दः तर्हि कथं नानुभूयते । अनुभवहेतोरभावात् इति ब्रूमः । देहेन्द्रियादीनाम् आत्यन्तिक-

---

1. नारायणकृत मानमेयोदय – पृ० 212.

परिच्छेदानुगृहीतं मनस् तदनुव्यवसायनम्[1] ।  

उक्तोदाहरणेन मनस उपयोगिता मनसः करणता [साधारणं कारणता] च स्पष्टं भवति ।

1- <u>मनसस्तत्त्वस्य निरूपणम्</u>

मनोऽन्तरिन्द्रियमस्ति । इदञ्च सुखदुःखादिप्रत्यक्षज्ञानस्य साधनमस्ति । मनः परिमाणं विभु अस्ति । मनश्च स्पन्दनार्थात् क्रियारहितं भवति ।

"सुखाद्यपरोक्षसाधनेन्द्रियत्वेन कल्प्यम्
अन्तरिन्द्रियं विभुपरिमाणमस्पन्दं च मनः ।"[2]

पूर्वमीमांसकमस्ति यत् न्यायवैशेषिकदर्शने मनोऽणुपरिमाणवत् संख्यान्यपि कथितमस्ति तथैव च द्रव्यं तदपि मनसः स्पर्शो न भवति, इति स्वीकृतं भवति । एतस्मिन्विषये मीमांसायां कथितमस्ति यत् -

मनो विभु, स्पर्शरहितद्रव्यत्वात् अनारम्भारम्भकद्रव्यत्वाद्वा ज्ञानासमवायिकारणसंयोगाधारत्वाद्वा आत्मवत् इत्यादिभिरनुमानैर्विभुत्वसिद्धिः[3] ।

मनो विभुत्वेऽङ्गीकृते आत्ममनसोर्यावत्सम्बन्धे अर्थात् क्रियारहित्ये स्वीकृते उभयोः परस्परं संयोगो सम्भव एव भविष्यति । अत आत्ममनसोः संयोगेनोत्पद्यमानस्य ज्ञानस्योदयोऽपि न भविष्यति, इत्यपि नाशंकनीया । आत्ममनसोर्द्वयोः विभुत्वेऽङ्गीकृते तयोः संयोगस्तु ततोऽप्यधिकतया पुष्किसंगतो भवति । विभुद्रव्याणां पारस्परिकः संयोगः क्रियाद्वारोत्पद्यते इति

---

1. मानमेयोदय - पृ0 212.   2-3. तत्रैव - पृ0 215.

मीमांसकाः नैनाङ्गीकुर्वन्ति । मीमांसादर्शनस्य मते आत्ममनसोः संयोगः क्रियाजन्यो भवतीति नाङ्गीक्रियते । यतो हि मनसि कम्पत्वमस्ति, अतः कर्मीयत्वा अयं विभक्तः पदार्थः सिध्यति । दिशाया आकाशादेश्च पृथक्त्वं भवति अतः पृथक्करणस्य कार्यं मन स्यादिति, इत्थं मनः दिक्कालादितो-ऽपि सर्वथा भिन्नमेव सिध्यति ।

पूर्वमीमांसायां प्रपञ्चस्य विलयो मोक्षो नैव भवति । पूर्वमीमांसायाः मते प्रपञ्चेन सह सम्बन्धस्य विलय एव मोक्षो भवति, प्रपञ्चस्य विलयस्तु न, यतो हि मीमांसामते प्रपञ्चः परमार्थसत्यभूतो भवति । प्रपञ्चेन सह पुरुषस्य सम्बन्धं वर्णयिता इदं ज्ञापितमस्ति, यत् पुरुषस्य प्रपञ्चेन सह सम्बन्धः प्रकार-त्रयेण भवति- [1] शरीरद्वारा, [2] इन्द्रियद्वारा, [3] विषयद्वारा च ।

शरीरं भोगायतनमस्ति । भोगसाधनानीन्द्रियाणि सन्ति । शब्द-स्पर्शरसादयश्च भोग्यपदार्था एव विषयाः सन्ति । सुखदुःखादीनां विषयाणा-मपरोक्षानुभव एव भोगार्थः । शरीरेन्द्रियविषयैरेव च पुरुषो बन्धनबद्धो भवति । एतस्यैव बन्धस्य नाम संसारो भवति । शरीरेन्द्रियविषयाणामात्यन्तिकनिवृत्ति-रेव मोक्षोऽस्ति । एतस्य मोक्षयुक्तस्य पृथक्करणस्यासाधारणं कारणं मन स्यादिति। अनेन सिध्यति यत् पूर्वमीमांसादर्शने मनो विभु, नित्यं तथा चात्मनो भिन्नं करणमस्ति । प्रभाकरस्य मतेऽपि मनस इदमेव स्वरूपं स्वीकृतमस्ति । यथा-

"सुखाद्युपपरोक्षसाधनेन्द्रियत्वेन कल्प्यमन्तरिन्द्रियं मनः ।"[1]

---

1. श्रीचिन्तामणिशास्त्रिकृत "तन्त्रसिद्धान्तरत्नावलिः" - पृ० 161.

वेदस्यापौरुषेयत्वाङ्गीकारात् मीमांसकः सृष्टिप्रलयौ नाङ्गीकरोति । ते केवलमेतावन्मात्रमेव कथयन्ति, यत् समग्रप्रपञ्चस्य सर्वथा प्रलयो नैव भवति । अतः प्रपञ्चस्य सृष्टिप्रलयार्थं कस्यापि सर्वज्ञपुरुषस्य अर्थात् ईश्वरस्य स्वीकृतिर्व्यर्था । अत एव मीमांसकाः निरीश्वरवादिसम्प्रदायाः भवन्ति ।

इत्थञ्च मीमांसादर्शने मनः एकादशद्रव्येषु एकं द्रव्यमस्ति । मनः आत्मसंयोगेन मनसो विशेषगुणाः सुखादय उत्पद्यन्ते । चैतन्याश्रय आत्मा अस्ति, अतो मनः करणीभूतमस्ति । मनो बाह्येन्द्रियेभ्यो भिन्नमन्तरिन्द्रियमस्ति एतस्य परिमाणञ्च आत्मन इव परममहद् अस्ति । अतः एतस्योत्पत्तिविषये प्रश्न एव नोपतिष्ठते । मोक्षेऽपि मनआत्मसंयोगेनैव सुखानुभूतिर्जायते ।

[ख] जैनदर्शने मनसः स्वरूपं लक्षणञ्च

जैनदर्शनमनेकान्तवादस्य नाम्ना प्रसिद्धमस्ति । जैनदर्शनं द्रव्यं द्विधा विभाजयति -

1. एकप्रदेशव्यापिद्रव्यम्, तथा
2. बहुप्रदेशव्यापिद्रव्यम् ।

जैनदर्शने विस्तारधारकं द्रव्यमस्तिकायपदवाच्यं भवति । सत्ताधारणकारणात् ते "अस्ति" पदवाच्याः भवन्ति । शरीरस्येव विस्तारेण समन्वितकारणात् ते "काय" पद-वाच्याः भवन्ति । एवम्भूत पञ्चद्रव्याणां सत्ता जैनदर्शने स्वीकृता वर्तते -

1. जीवास्तिकायः,
2. पुद्गलास्तिकायः,

3. आकाशास्तिकायः,

4. धर्मास्तिकायः,

5. अधर्मास्तिकायः ।

अस्तिकायद्रव्याणां द्वौ प्रधानतयौ भेदौ भवतः, जीवोऽजीवश्च । चेतनद्रव्यं जीवपदवाच्यं भवति ।

"चैतन्य लक्षणो जीवः"[1]

प्रत्येकं जीवः नैसर्गिकत्वेन अनन्तज्ञानानन्तदर्शनानन्तसामर्थ्यादिगुणैर्युक्तः स्वीकृतो भवति, परन्तु आवरणीय कर्मकारणात् जीवे तेषां स्वाभाविकधर्माणामुदयो न भवति । तत्र तत्रैव शुभाशुभकर्मप्रभावेण जीवस्य स्वाभाविकगुणेषु एकप्रकारकमावरणमापतति । शुभाशुभकर्मणामनुष्ठानेन आवरणस्य तिरोधानं जायते, अनन्तज्ञानादिगुणानां साक्षात्कारश्च जीवस्य भवति । जीवः शुभाशुभकर्मणां कर्ता तथा कर्मफलानां भोक्ता चापि भवति । नित्ये सत्यपि जीवः परिणामशीलो भवति, अतश्च शरीराद्भिन्नो भवति । तदीयसत्तायाः प्रमाणं चैतन्योपलब्धिरस्ति । अनादिनि जीवः अल्पपरिणामवान् मन्यते, संकोचविकासशीलश्चापि स भवति । अतः शरीरावच्छिन्नो जीवो भवति, तथा च स स्वनिवासभूतं परिणामं प्राप्नोति ।

अजीवद्रव्येषु पुद्गलास्तिकायस्योपरि उल्लेखो भूत् । पुद्गलशब्दस्य निरुक्तिः "पूरयन्ति गलन्ति च" इत्यस्ति । तेषां पुद्गलसंज्ञा भवति यत् अर्थात् यः पूर्णो भवति अपि च यः गलितो भवति तेषां द्रव्याणां संज्ञा पुद्गलसंज्ञा इति

---

1. हरिभद्रसूरि "षड्दर्शनसमुच्चयकारिका" - 49.
चौखम्बा संस्कृत सीरीज आफिस, वाराणसी. वि०सं० 1986.

यतीति । पुद्गलस्य एवं द्वयमस्ति- प्रथमम् अणु तथा द्वितीयं संघातः । पुद्गलस्य सूक्ष्मतमनिरवयवांशः, यस्यान्यत्सूक्ष्मतमं विभाजनं नैव कर्तुं शक्यत इति "अणु" पदवाच्यतां लभते । द्वयोरंशयोरितो व्यधिकसूक्ष्मांशानां वा परस्परैकीकरणेन "संघातो" जायते । एतैरेव च संघातैः अस्माकं शरीरं तथा तदीयभिन्न-भिन्नांशानां मनः प्राणादीनां सृष्टिर्भवति । पौद्गलिकपदार्थानां चत्वारो गुणा उपलभ्यन्ते- 1. स्पर्शः, 2. रसः, 3. गन्धः, 4. वर्णश्चेति ।

"स्पर्शरसगन्धवर्णवन्तः पुद्गलाः"[1]

जैनदर्शने मोक्षस्य त्रीणि साधनानि भवन्ति -

"सम्यग्दर्शनज्ञान-चारित्राणि मोक्षमार्गः"[2]

सम्यग्दर्शनस्यार्थः "तत्त्वार्थश्रद्धान" इत्यस्ति । अर्थात् तत्त्वेषु अर्थेषु च श्रद्धा स्थापनम्, अथवा तत्त्वद्वारा अर्थेषु श्रद्धास्थापनम्, सम्यग्दर्शनमस्ति । जीवादितत्त्वमस्ति । त एव चार्थोऽपि भवति, तत्र श्रद्धाया अर्थः "प्रत्ययावधारणम्" इति भवति । तत्त्वानामर्थानां श्रद्धानं तत्त्वेन वा अर्थानां श्रद्धानं तत्त्वार्थश्रद्धानम् । तद् सम्यग्दर्शनम् । --- तत्त्वानि जीवादीनि वक्ष्यन्ते । त एव चार्थाः । तेषां श्रद्धानं तेषु प्रत्ययावधारणम् । तदेवं प्रशम-संवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं तत्त्वार्थश्रद्धानं सम्यग्दर्शनमिति ।[3]

तीर्थङ्करैः प्रतिमादिषु शास्त्रसिद्धान्तेषु अतिशयितश्रद्धास्थापनं मोक्ष-मार्गस्य साधकस्य कृते सर्वप्रथमं साधनमस्ति । जैनदर्शने निम्नलिखितं सप्ततत्त्वं

---

1. उमास्वातितत्त्वार्थाधिगमसूत्र - 5/23.
2. तत्रैव - 1/1.
3. तत्रैव - 1/3.

भवति -

"जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥"[1]

प्रमाणनयद्वारा येषां तत्त्वानां विस्तरेण ज्ञानं जायते ।

"प्रमाणनयैरधिगमः ।"[2]

परोक्षप्रत्यक्षभेदेन जैनदर्शने द्विप्रकारकं प्रमाणमस्ति । सम्यग्दर्शनस्यार्थः ज्ञानमस्ति, ज्ञानस्य ज्ञानं पञ्चप्रकारकं भवति- 1. मतिज्ञानम्, 2. श्रुतज्ञानम्, 3. अवधिज्ञानम्, 4. मनः पर्यायज्ञानम्, 5. केवलज्ञानञ्च ।

यथा -

"मतिश्रुतावधिमनः पर्यायकेवलानि ज्ञानम् ॥"[3]

जैनदर्शने कर्मसिद्धान्तमन्यदर्शनापेक्षया नितान्तं भिन्नं भवति । ते कर्म एवं भौतिकक्लेशानङ्गीकुर्वन्ति । एतानि कर्माण्येव जीवं सर्वांशमभिव्याप्य दुःखमये प्रपञ्चे पातयन्ति । कर्मणः मुख्यतया अष्टौ भेदाः भवन्ति । यथा -

1. ज्ञानावरणीयं कर्म,
2. दर्शनावरणीयं कर्म,
3. मोहनीयं कर्म,
4. वेदनीयं कर्म,
5. आयुष्यं कर्म,
6. नाम कर्म,
7. गोत्र कर्म,
8. अन्तराय कर्म ।

---

1. तत्त्वार्थाधिगमसूत्र - 1/4.
2. तदेव - 1/6.
3. तदेव - 8/5-16.

भोगात्मकं जगत् तथा भोगात्मकशरीरेण सह जीवस्य सम्बन्धस्थापकं प्रधानं कारणं कर्म भवति । कर्मणां सम्बन्धे सति जीवस्य बन्धनं भवति, तथा कर्माभावात् मुक्ते सति जीवस्य मोक्षो भवति । स्वव्यापारार्थमवतरत्कर्मणां जीवेन सह-सम्बन्धस्थापनम् "आस्रवः" इत्युच्यते । तत्त्वार्थाधिगमसूत्रे शरीर-वचनमनसां क्रियायाः नाम योग इति प्रदत्तमस्ति । अयमेव च योगः "आस्रवः" इत्युच्यते । अयमास्रवः द्विप्रकारको भवति- प्रथमो भावास्रवः, अर्थात् कर्मो-त्पादकरागादिभावः, द्वितीयश्च- द्रव्यास्रवः अर्थात् पुद्गलकर्मणामागमनम्[1] ।

जैनदर्शनं बाह्येन्द्रियान्तरिन्द्रियद्वारा अनुभूतजगतः सत्तां वास्तविकीमङ्गीकरोति । तन्मते बाह्यजगतः सत्तां प्रमापयितुं मनसा सहैव बाह्येन्द्रियाणामप्युपयोगिता स्वीकृता वर्तते ।

<u>इन्द्रियस्य मनसश्च स्वरूपम्</u>

प्रमेयकमलमार्तण्डे इन्द्रियाणि वर्णयता प्रतिपादितमस्ति -

तत्रेन्द्रियं द्रव्यभावेन्द्रियभेदाद् द्वेधा । तत्र द्रव्येन्द्रियं गोलकादि-परिणामविशेषपरिणतस्पर्शरसगन्धवर्णवत्पुद्गलात्मकम्, पृथिव्यादीनामत्यन्त-भिन्नजातीयत्वेन द्रव्यान्तरत्वासिद्धितस्य प्रत्येकं तदारब्धत्वासिद्धेः ---

एवं मनोऽपि द्वेधा द्रष्टव्यम्[2] ।

अर्थात् मनः एकदृष्ट्या द्रव्येन्द्रियमन्यदृष्ट्या च भावेन्द्रियमस्ति, अतस्तदुभयात्मकमपि भवितुमर्हति । द्रव्येन्द्रियत्वान्मनः पुद्गलात्मकमस्ति ।

---

1. द्रव्यसंग्रह गाथा - 30.
2. प्रमेयकमलमार्तण्ड प्रत्यक्ष-परिच्छेद - सूत्र 2-5.

भावेन्द्रियस्य लक्षणमित्थं वर्णितमस्ति -

भावेन्द्रियं तु लब्ध्युपयोगात्मकम्। ज्ञानावरणक्षयोपशम प्राप्ति-रूपार्थग्रहणशक्तिर्लब्धिः।

इत्थमस्य जैनदर्शने एकमेव मनः स्वतः द्रव्येन्द्रियमन्यच्च भावे-न्द्रियमपि भवति। [1] प्रत्यक्ष, [2] परोक्षभेदेन जैनदर्शने ज्ञानं द्विप्रकारकं भवति।

[1] प्रत्यक्षज्ञानम् - आत्ममात्रवेद्यं ज्ञानं प्रत्यक्षज्ञानमित्युच्यते।

[2] परोक्षज्ञानम् - आत्मेतरेन्द्रियमनः सापेक्षं ज्ञानं परोक्षज्ञानमित्युच्यते।

अर्थात् यस्य ज्ञानस्य प्राप्तिरिन्द्रियेण मनसा च भवति तस्य परोक्ष इति नाम दीयते। उमास्वातिमहोदयस्य मते परोक्षं ज्ञानं द्विप्रकारकं भवति- [1] मतिज्ञानम्, [2] श्रुतज्ञानम्।

एते उभे अपि ज्ञाने इन्द्रियमनसोः साहाय्येनोत्पद्येते। प्रत्यक्ष-ज्ञानस्य त्रयो भेदाः समुपलभ्यन्ते - [1] अवधिज्ञानम्, [2] मनःपर्याय-ज्ञानम्, [3] केवलज्ञानम्।

यतोहि एतानि त्रीण्यपि ज्ञानानि इन्द्रियस्य मनसश्च साहाय्यं विनैव केवलमात्मनो योग्यताबलेन उत्पद्यन्ते अतः इदं प्रत्यक्षं ज्ञानमित्युच्यते।

इन्द्रियस्य मनसश्च सम्पर्केण समुद्भूतं ज्ञानं "मतिज्ञानम्" इत्युच्यते। स्मृति, संज्ञा, चिन्ता, अभिनिबोधश्चेति चत्वारः मतिज्ञानस्य पर्यायवाचकाः भवन्ति।[1]

---

1. तत्त्वार्थाधिगमसूत्र - 1/15.

मतिज्ञानमपि सामान्यतः द्विप्रकारकं भवति- [1] इन्द्रियजन्यं बाह्येन्द्रियद्वाराजन्यं ज्ञानमिन्द्रियजन्यमित्युच्यते । [2] अनिन्द्रियजन्यम्, अर्थात् मानसज्ञानम्[1] ।

प्रमाणनयाभ्यां हि वस्तुसिद्धिर्भवति, ताभ्यामेव च पदार्थस्य विवेचनमपि भवति । लोकव्यवहारार्थमनुमानस्य प्रामाणिकता अपि जैनदर्शने संमान्या भवति । यतोहि जैनदर्शनमते वस्तु अनन्तधर्मात्मकं भवति, अतः एतत्समस्तवस्तुधर्माणां यथार्थं ज्ञानं तस्यैव पुरुषस्य भवितुमर्हति, येन कैवल्यं प्राप्तम् । साधारणभ्रान्तिबहुलमानवेषु नैतावत्सामर्थ्यं वर्तते, यत् ते प्रत्येकवस्तुनः समस्त [अनन्त] धर्माणां यथार्थं ज्ञानं प्राप्नुयुः । एवम्भूताः मानवास्तु केवलं एकं धर्मांशं ज्ञातुं शक्नुयुः । अतस्तादृशं ज्ञानं नयविषयांशिकं भवति, वस्तुनोऽनन्तधर्मेषु एकधर्मस्य ज्ञानस्य "नय" इत्युच्यते ।

"एकदेशविशिष्टोऽर्थो नयस्य विषयो मतः ।"[2]

स्याद्वादमञ्जर्यां "नय"पदस्य निरुक्तिरित्थं वर्णिता अस्ति -

"नीयते परिच्छिद्यते एकदेशविशिष्टोऽर्थः
अनेन इति नयः ।"[3]

उपरि विवेचनेन जैनदर्शने मनसः स्वरूपं स्पष्टं भवति । मनः उभयात्मकमस्ति । अर्थात् द्रव्यभावभेदेन च द्विप्रकारकं भवति, तथैव मनः प्राप्यप्रकाशकारि अपि भवति । "मतिज्ञानम्" उत्पादयितुमिन्द्रियैः सह मनस उपयोगिता अपि स्वीकृता

---

1. भारतीयदर्शन, बलदेव उपाध्याय - पृ० 155.
2. न्यायावतार - श्लो० 21. 3. स्याद्वादमंजरी - पृ० 159.

वर्तते । अनिन्द्रियजन्यं ज्ञानन्तु मानसज्ञानमेव भवति । मनोऽनेकधर्मात्मकं द्रव्यमस्ति । जैनमते यदा आत्मा मध्यमपरिमाणवान् स्वीकृतो भवति, तदा मनो विभुत्वाङ्गीकारोऽणुत्वस्वीकारात्मको वा इति प्रश्न एवनोपतिष्ठते । सम्यग् व्यावहारिकार्थज्ञानार्थमिन्द्रियमनसोरुभयोरपि आवश्यकता वर्तते । मनोऽपि द्रव्यभावभेदात् द्विविधम्, प्राप्यप्रकाशकारि चास्तीति[1] ।

अर्थात् द्रव्येन्द्रियभावेन्द्रियभेदेनेन्द्रियं द्विप्रकारकं भवति । इदं पूर्वतोऽपि प्रतिपादितमस्ति, यत् मनो द्रव्येन्द्रियमप्यस्ति भावेन्द्रियमपि तथा प्राप्यप्रकाशकारि अपि वर्तते । जैनदर्शने भावेन्द्रियं द्विप्रकारकं भवति- 1. लब्धीन्द्रियम्, तथा 2. उपयोगेन्द्रियञ्च ।

लब्धीन्द्रियं तदिन्द्रियमस्ति यदिन्द्रियस्यावरणक्षयात् उपशमद्वारा ग्रहणशक्तिर्भवति । अर्थग्रहणव्यापारस्यमिन्द्रियञ्च उपयोगेन्द्रियपदेन व्यवह्रियते ।

भावेन्द्रियमपि द्विविधम्, लब्ध्युपयोगभेदात्, तत्र लब्धीन्द्रियं - इन्द्रियावरणक्षयोपशमापरपर्यायार्थग्रहणशक्त्यात्मकम् । अर्थग्रहणव्यापारस्तूपयोगेन्द्रियम्[2] ।

चक्षुरिन्द्रियं परित्यज्यान्यत्सर्वेन्द्रियं जैनमते प्राप्यप्रकाशकारि कथितं वर्तते । अतो मनः प्राप्यप्रकाशकारि तथा उभयात्मकमिन्द्रियमस्ति । चक्षुरप्राप्यप्रकाशकारि इन्द्रियं भवति ।

जैनसिद्धान्तः प्रमाणनयाधारेण प्रचलति । तत्रैव जैनदर्शनस्य

---

1-2. श्रीप्रमाणनयतत्त्वालोक, श्रीवादिदेवसूरिकृत - पृ० 23.

पदार्थानां विभाजनं भागद्वयेन कर्तुं शक्यते- जीवोऽजीवश्च । जैनदर्शनं स्वकीयं सिद्धान्तं सप्तभंगीनयद्वारा साधयति । एतत्सिद्धान्तं निराकुर्वन्ति शांकर-भाष्ये कथितमस्ति यत् एकस्मिन्नेव धर्मिणि युगपत्सत्त्वासत्त्वधर्माणां समावेशो नैव सम्भवति, किंचा च ये सप्तपदार्थाः निर्दिष्टाः सन्ति, ते एतावन्त एव वर्तन्ते, अन्येव स्यन्ते च वर्तन्ते । ते तथाभूता एव सन्ति, अनिर्धारिता एव च वर्तन्ते । अनेकान्तिकवादे एतस्य निश्चयो भवितुं नार्हति । तथैव वस्तुनामने-कान्तिकवाद स्वीकारो नैवोचितं भवति । अतः सांख्यानामिव तीर्थंकराणामपि प्रमाणमेव प्रमाता-प्रमिति द्वारा अपि च सम्यकतया निर्धारणं नैव भवितु-मर्हति । अत स्वप्रकारकं कणभुग्मतसदृशमपि एव वर्तते । एवमेव च जैनमतस्य जीव-पुद्गलैश्च [अणुभिः] उत्पद्यमानसंघातस्य निराकरणमपि शांकरभाष्येऽवलोक्यते । एतस्य शोधप्रबन्धस्य विषयो अनेकान्तवादस्य निरूपणमस्ति, जैनदर्शनस्यान्य मताः स्वल्पमुपस्थापितं वर्तते ।

[द] <u>बौद्धदर्शने मतः स्वरूपं खण्डनं</u>

बौद्धानां चत्वारः सम्प्रदायाः प्रसिद्धाः सन्ति वर्तन्ते -

1- हीनयानस्य द्वौ दार्शनिकसम्प्रदायौ स्तः -

[अ] वैभाषिकसम्प्रदायः,

[ब] सौत्रान्तिकसम्प्रदायः ।

2- महायानसम्प्रदाये च द्वौ दार्शनिकसम्प्रदायौ स्तः -

[अ] योगाचारसम्प्रदायः [विज्ञानवादः]

[ब] माध्यमिकसम्प्रदायः [शून्यवादः]

वैभाषिकः प्रत्यक्षेण बाह्यार्थं सत्यमङ्गीकरोति । सौत्रान्तिक-सम्प्रदायोः बाह्यार्थं प्रत्यक्षसिद्धमभावा अनुमेयमङ्गीकरोति । योगाचार विज्ञान-वादिसम्प्रदायो च बाह्यं भौतिकं जगत् नितान्तं मिथ्या अङ्गीकरोति. केवलं चित् विज्ञानं च स्वमात्रं सत्यत्वमङ्गीकरोति । चतुर्थमतं माध्यमिकः शून्यवाद इति प्रोच्यते । इदं मतं चित्पदार्थस्यापि स्वातन्त्र्यं सत्तां नैव स्वीकरोति । सन्मतानुसारं न बाह्यार्थो न च विज्ञानमेवास्ति । प्रत्युत शून्यमेव परमार्थ-सत्यमस्ति । समस्तजगतः सत्ता अस्मिन्मते प्रातिभासिकी अर्थात् सांवृतिकी वर्तते । शून्यस्य सत्ता पारमार्थिकी एषां मते भवति ।

वैभाषिकमतानुसारमिदं नानात्मकं जगत् वस्तुतः सत्यमस्ति, प्रत्यक्षज्ञानेन सत्यानुभवो भवति । वस्तुविभागः एतस्मिन्मते प्रकारद्वयेन कर्तुं शक्यते- विषयगतं विषयिगतञ्च । विषयिगतविभाजनमनुसृत्य समस्तपदार्थाः प्रकार-त्रयेण विभक्तुं शक्यन्ते- [1] पञ्चस्कन्धः, [2] द्वादश आयतनम्, [3] अष्टा-दशधातुश्चेति ।

बौद्धदर्शनानुसारं नामरूपशब्दाभ्यां भूतस्य [मैटर] मनसश्च ग्रहणं भवति । रूपान्तर्गतभूतानां ग्रहणं नामान्तर्गतञ्च चतुर्णां मानसिकवस्तूनां [मेन्टल प्रोसेस] ग्रहणं भवति । बौद्धधर्मे एषां सर्वेषां पदार्थानां [1] रूप [मैटर], [2] मनः, [3] चित्तम्, [4] चैत्तम्, संस्कारश्चेति चतुर्धा विभाजयितुं शक्यते ।

एषु आयतनान्तर्गतं षडिन्द्रियाणि षड्विषयाणां कृते उक्तानि सन्ति । यथा- चक्षुः, श्रोत्रम्, घ्राणः, जिह्वा, कायः, [त्वचा] तथा मनश्च । इन्द्रियाणामभ्यन्तरवर्तित्वकारणात् "अध्यात्मायतनम्" इत्यपि कथ्यते.

तथा तदीयविषयभूतरूप, शब्द, गन्ध, रस, स्प्रष्टव्यं धर्मायतनम् [अतीन्द्रियं] बाह्यायतनमित्युच्यते । अष्टादशधातुः- यासां शक्तीनामेकीकरणेन धर्मानामेकः प्रवाहः [सन्तानं] निष्पद्यते तस्यैवनामधातुरिति कथ्यते । एषां धातूनां संख्या अष्टादश इति भवति । षडु प्रतिपादितानि द्वादशायतनानि भवन्ति । तथा षडेवधातुः- 1. चक्षुर्विज्ञानधातुः, 2. श्रोत्रविज्ञानधातुः, 3. घ्राणविज्ञानधातुः, 4. जिह्वाविज्ञानधातुः, 5. कायविज्ञानधातुः, 6. मनोविज्ञानधातुश्च परिगणिताः सन्ति[1] ।

बाह्यार्थविज्ञानवादिनिकायेषु प्रवर्तयितृत्वात्र स्वातीन्द्रियवस्तुविषयस्य मनस एव ग्रहणं स्वीक्रियते । बौद्धानि इन्द्रियायतने मनश्चैतन्यलक्षणमङ्गीकृतमस्ति । पञ्चस्कन्धात्मक एव आत्मेत्युच्यते, तद्भिन्नस्य कस्यापि शाश्वतात्मनः सत्तां बौद्धधर्मो नैव स्वीकरोति । अतीतसंस्काराणां वासनानां वा सन्तानस्य प्रवाहस्य च नाम "मनः" इत्यस्ति । चित्तम्, विज्ञानम्, मनश्चेत्येकप्रकारैणैव शब्दाः पर्यायवाचकाः सन्ति । वेदना [फीलिंग] संज्ञा [आईडियाज] चेतना [वोलिशन्स] स्पर्श [कन्टेक्ट] इत्यादयः सर्वेऽपि चित्तेन सह सम्बद्धाः सन्ति । चित्तचैत्तयोः पारस्परिकः घनिष्ठः सम्बन्धो भवति ।

Pure sensation (Citta) could never appear in file in its true ~~mp~~ separate condition it was always accompanied by some seccondary mental phenomena[1] (caitta).

---

1. भारतीयदर्शन, बलदेव उपाध्याय - पृ० 207.
2. The Central concept of Buddhism : By Stcherbatsky, - P. 15.

षड्विज्ञानानि यानि बाह्यवस्तूनि इन्द्रियसन्निकर्षादुत्पन्नानि भवन्ति, तानि विषयज्ञानार्थं द्वारभूतानि भवन्ति । एतानि स्वीयसत्त्वज्ञानानि मनोविज्ञानपर्यन्तं नयन्ति, यानि स्वयमालयविज्ञानस्य पार्श्वे उपनतं कुर्वन्ति । तदेव चित्तस्य यथार्थज्ञानस्य प्राप्तिर्भवति । समस्तं जगत् चित्तस्य परिणाममात्रमस्ति । एतेषु षाष्टभेदैर्वेदान्तानुसारता भवति ।

योगाचारस्य मते विज्ञानविषययोरन्तरं स्पष्टं भवति । विषयं परिकल्पितसत्त्वमात्रत्वात् वस्तुतो नास्ति, परञ्च विज्ञानस्य प्रतीत्यसमुत्पन्नत्वकारणात् नितान्तं सत्यमस्ति । यद्वस्तु यत्र न भवति तत्रैव तस्योपचारः क्रियते । अस्मिन् जगति न आत्मा न च धर्मोऽस्ति, परन्तु आत्मोपचारो - नादिकालादेव वर्तमानो भवति । उपचारसत्त्वात्वेतत्परिकल्पितमात्रं भवति । पारमार्थिकं सत्स्वरूपं वा नैव कदापि जायते ।

इत्थञ्च विज्ञानवादिनो बाह्यार्थं मायिकं (परिकल्पितं) स्वीकुर्वन्ति । तथा च विज्ञानं वा मन एवयोगाचारस्य मते एकः सत्पदार्थोऽस्ति। विज्ञानमेव बाह्यजगद्रूपेण परिणमति । वस्तुतो विज्ञानातिरिक्तं बाह्यजगतोऽतिरिक्ता काऽपि सत्ता नास्ति । बाह्यपदार्थानां मायिकत्वपरिकल्पितत्वकारणाच्च ते पदार्थाः पारमार्थिकीं सत्तां नैव भजन्ति । ज्ञानं विज्ञानमेव वा एकमात्रं सद् भवति । तच्च एतत्त्वापि विज्ञानस्य क्षणिकत्वकारणात् सन्तानरूपे प्रवाहितं भवति । विज्ञानवादशांकरवेदान्तयोः पर्याप्तसमानताकारणात् केचन-दार्शनिकाः शांकरमतं प्रच्छन्नबौद्धमिति कथयामासुः । किन्तु शांकरदर्शने चितिः

---

1. भारतीय-दर्शन, बलदेव उपाध्याय - पृ0 217-218.

ज्ञानं वा सदात्मस्वरूपं भवति, एकः शाश्वतनित्यानन्दस्वरूपः पदार्थोऽस्ति । स चात्मविज्ञानवादिनां विज्ञाननित्यः, क्षणिकः, वासनायाः संस्कारस्य च तदुद्भवनं नास्ति ।

माध्यमिकमतस्य प्रवर्तका आचार्याः स्वसिद्धान्तं शून्यवादरूपेण व्याख्यातवन्तः । अत्र मते शून्यमेव परमार्थतत्त्वमस्ति । इदञ्च शून्यं भावाद् भिन्नः पदार्थोऽस्ति । अभावस्य कल्पना प्रतियोगिसापेक्षकल्पना भवति । परन्तु शून्यं निरपेक्षं परमतत्त्वस्य रूपं भवति । इत्थञ्च माध्यमिकाचार्याः शून्याद्वैतस्य समर्थकाः सन्ति । संसारस्य नानात्मकप्रपञ्चः एतस्य शून्यस्यैव विवर्तरूपाः सन्ति । परमतत्त्वशून्यस्य निर्विषयचतुष्कोटिविनिर्मुक्तः, वाङ्मनोऽगोचरः, निरालम्बनिर्विकल्पस्वरूपापि भवति ।

शून्यवादाचार्यो नागार्जुनो द्वाभ्यां प्रकाराभ्यां तत्त्वं स्वीकरोति- [1] पारमार्थिकं सत्, [2] सांवृतिकं सत् ।

"लोकसंवृतिसत्यं च सत्यं च परमार्थतः ।"[1]

शून्यशब्दवाच्यं तत्त्वं पारमार्थिकसत्यं बुद्धेरगोचरञ्चापि भवति । बुद्धिज्ञानं विकल्पात्मकमस्ति, विकल्पश्चापरमार्थग्राहित्वाद् अविद्यात्मकं स्यादिति । अतो बुद्धिविकल्पयोर्योग्यता नास्ति यद् परमतत्त्वपदार्थं यथार्थरूपेण गृह्णीयाद् ।

मायाया अविद्यायाः वा संवृतिः कथितत्वात् सत्तासंवृतिकी व्यावहारिकी वा सत्ता नास्ति । अविद्यायाः कार्यद्वयमस्ति- 1. स्वभाव-

---

1. माध्यमिक-कारिका - 24/8.

सांवृतिकत्वेऽपि निर्वाणमार्गः परमार्थनिरोधार्थमवश्यमङ्गीकृतं भवति । अत उपरि पृथिव्यादिषु अन्येषु तत्पदार्थेषु गतो वस्तुतः यत्स्वरूपं उपतिष्ठति, तस्य स्वीकृतिरत्र नास्ति । स्कन्ध, धातु, दुःख, मार्गा- दीनामपि सत्ताऽपि तथा व्यावहारिककारणादस्त्येव न तु पारमार्थि- कमिति तथ्यमेव भाति ।

॥ इति द्वितीयोऽध्यायः ॥



आसीदिति मन्यते स्म । एतानि चत्वारि तत्त्वानि – अग्नि-वायु-जल-पृथ्व्याख्यानि भवन्ति, येषां भूतानां गुणा यथा- ऊष्मा, शीतता, शुष्कता (शैत्य) तथा आर्द्रता (तरलता) प्रभृतिः मानवेषु अङ्गीकृता आसीत् । एतद्-विपरीतभूतानां तदीयकार्याणि च तत्तुल्यतामपि Soul इति वा जीवनमिति वा कथ्यते । पृथक्त्वस्य व्याख्या अपि जीवविज्ञानेषु कृता आसीत्, यथा – दर्शनश्रवणादि सूक्ष्मांशानां संसर्गेण तथैव स्वीकृता आसीत्, यथा गन्धस्वादस्पर्श-विषयाणां निःसृताभिः अनुभूतिः भवति । Soul अथवा Psyche इति वा सर्वथा अलौकिकी सत्ता भवति । पाइथागोरसमहोदयः आत्मनोऽन्यशरीरे गमन-कर्तृत्वसिद्धान्तं विश्वसिति । इदं जीवनमात्मा वा शरीरस्य कोषे बद्ध आसीत् । मृत्युकाले यं सर्वोऽपि विमुच्यते । एम.पी.डोक्लिन, अरिस्टोटलप्रभृति विद्वद्-गणः चेतनाया अस्य आधारं हृदयं मनुते स्म । अल्कमेयिनमहोदयः (यः पाइथा-गोरसमहोदयस्य शिष्य आसीत्) तेनैवात्मानं मस्तिष्कं स्वीकरोति स्म ।

सोक्रेटीजमहोदयस्य विचार आसीद् यत् (Virtue) सद्गुणः ज्ञानेन परिनिर्मितो भवति । एतस्मिन् विचारे प्लेटोमनोविज्ञाननिर्देशे एको दृढो बौद्धिक आधारः प्रदत्तः । दार्शनिकप्लेटो महोदय एव तथाभूत व्यक्तिरासीत्, यः सर्वप्रथमं चेतनायाः प्रश्नं स्पष्टरूपेणोत्थापितवान् । तस्य कथनमासीद् यद् अस्माभिः चक्षुर्भिः नावलोक्यते, अपितु चक्षुर्द्वारा दृश्यते, अस्माभिः कर्णैः न श्रूयते, अपि तु कर्णद्वारा श्रूयते । अतः किमपि तथा भूत सर्वाङ्गव्यापकगुणः सत्ता अङ्गीकरणीया भविष्यति यो हि अवलोकनस्य कार्यं, भिन्नज्ञानानामेकत्व-करणस्य कार्यं, तथा स्मृतेः विचारस्य च कार्यं, संवेदनायाम (Sensation)

धारितं कर्म करोति । स आत्मनो लक्षणमित्थं प्रतिपादयति -

This is the Soul which is defined as a motion that moves itself.

तैः प्रदर्शितमिदं निश्चयं यत् Soul इति वा आत्मा इति वा अनेन कथितव्यम्, यद्यपि आत्मा स्वतः एक एव भवति तथापि तत्र बहवः शक्तयो भवन्ति । ग्रीकी-विचारकोऽपि एतस्मिन् प्रसङ्गे कथयन्ति यत् -

And in the discussion that arises out of the question thus raised he layes the foundation of new. branch of knowledge Psychology, the study of mental life.[1]

एतस्मिन् चिन्तने त्रीणि प्रधानकार्याणि स्थापितानि सन्ति: -

1- (Reason) तर्कबुद्धिः, यस्य स्थानं ब्रेन इति वा मस्तिष्क इति वा भवति ।

2- इच्छाशक्त्यां (Spirit) स्थानं हृदयस्थं भवति ।

3- निम्नाकांक्षाणां (लोअर फीलिंग्स) मुख्यस्थानं स्वकोदरस्थितेर (Abdomianl uiscera) द्वारा प्राप्यते । प्लेटोमहोदयोऽन्यशास्त्राणां एतदेव प्रापयति यं बुद्धिः स्थिरितनामकोऽपरो भवति ।

अरिस्टोटलमहोदयः "डेनिमाऔंत दी सोल" नामके ग्रन्थे तर्क-पूर्णं प्रकटं कास्य विषयस्य निर्णयं कुर्वन्ति । स आत्मनो लक्षणं (form) रूपं कथयति ।

---

1. इन साइक्लोपीडिया ब्रिटेनिका - वाल्यूम 18, पृ0 784.

पूर्वविकसितस्यात्मनः सः स्मरणमनुकरोतीति । सर्वतो निम्नस्तरे आत्मनः कार्यं केवलं शरीरपोषणमस्ति । एतदपेक्षया उच्चस्तरे तदीयं कार्यं संवेदनात्मकमस्ति यथा च पशुषु दृश्यते, सर्वापेक्षयोच्चतमे स्तरे तदीयं बौद्धिकं कार्यमस्ति, यथा च मानवेषु लभ्यते । अरिस्टोटलमहोदयः प्राणं स्पीरिटरूपेण कथयति । प्राचीनस्टोइकसम्प्रदायवर्तिनो जनाः रैन्धोमनोविज्ञानायाः च वर्णनं सुक्रात्मवत् कुर्वन्ति, यद्वर्णनं सुक्रातविचारधारा भवति यतति । परवर्ती-स्टोइकमहोदयः कथयति, यद् दर्शनक्रियायां चक्षुषा स्पीरिट नेत्र बहिः गच्छति, यथा रविकिरणाः, अयञ्च स्पीरिटपदार्थः चक्षुषा बहिर्निर्गत्य बाह्यविषयान् प्रकाशयति ।

एवं पैथागोरस्य जनकाः व्यक्तिमधिकृत्य चिन्तयन्तो विचारयन्ति, यद् मरणकाले व्यक्तिदेहात् किञ्चिद् निःसरति, जन्मनि च सति पुनः परावर्तते । इत्थञ्च तदीयो विचारः द्वैत मूलकः (dualistic) अस्ति, यतो हि सः सोल (मनः) शरीरञ्च पृथक् पृथक् वस्तुत्वेन मनुते । मनो-विज्ञानस्य विभिन्नप्रकारणामुल्लेखः ग्रीकविचारकेषूपलभ्यते -

But now we must look more closely at the life of types of Psychology among the thinkers of Hellas; in particular, atm three conceptions of the mind developed by greek thinkers which are found still embedded in the tissue of our modern Psychological doctrine, the conceptions associated with the names of Democritues, Plato and Aristotle.[1]

---

1. Historical introduction to Modern Psychology.
- By Gardner Murphy, P. 6.

प्लेटोमहोदयः कर्मसिद्धं प्रारब्धवान्, तस्य प्राचीनसिद्धान्तस्य पुष्टिरपि कृतवान् यद् "जीव" पदार्थ शरीरं च मृतौ भिन्नं पदार्थद्वयं भवति । जीवपदार्थो भौतिकपदार्थत्वेन स्वीकृत आसीत् । तथा स आत्मनश्चामरतायाः विचारक आसीदिति प्रतिपादितवान् । शरीरस्य मृत्यौ : पश्चादपि जीवपदार्थ- स्यास्तित्वं तिष्ठति । भौतिकैः सर्वैरपि पदार्थैः जीवात्मकः पदार्थः परो भवति, अपि चामूर्तसम्बन्धानपि विचारयितुं शक्नोति ।

अरिस्टोटलमहोदयः सर्वतो प्रकृतिवादः पक्षी आसीत् । जीव- विज्ञानस्योपरि तेन सः श्रेष्ठमहत्त्वपूर्णानि अनुदानानि दत्तवान् । प्रथमम्, ज्ञानस्य प्रत्यक्षीकरणा तथा जीवात्मपदार्थस्य जीवितशरीरैः व्यावहारिकता- संबद्धकृत्वा वाद्यकम् । द्वितीयम्, जीवपदार्थस्य स्वरूपं तदीयकार्यकलापाना- मेतस्मिन् स्वरूपे वर्णनं यत् - The Soul are expression of the living creature, and the living creature an expression of the Soul तृतीयं यत- Third is his settling down to workaday task of describing of an interpreting human experience and behaviour in concrete terms.

अर्थात् मानवानुभवस्य मानवचेष्टानाञ्च स्पष्टतावेषु वर्णनं, तदीय व्याख्या च, इदं तदीयं तृतीयं महत्त्वपूर्णमनुदानमासीत् । प्लेटोमहोदयस्य जीवशरीरयोरन्तरात्मकः सिद्धान्तः अरिस्टोटलमहोदयं नैव प्रभावितवान्, न च डिमोक्रीटसमहोदयस्य जीव [मन] विषये सन्देहात्मकं मतं स्वीकृतवान् । तदीय- गुरुरेव आसीद् -

He aimed to discover the intimate relation of mental and Physical Processes, yet to define the mental so as to shew its, differences from the Physical. His solutions lay in terms of a conceptions carried out by the living organism.

अर्थात् भौतिकैः अंशैः किमपि वस्तुनिर्मितं भवति, तत् नैवेदं सूचयति, यत् किमिदमस्ति नैव वेदमपि सूचयति यत् तत् किं करोति, अपितु अयं भौतिकांशः तद्रूपं सूचयति, येनेदं कां क्रियां करोतीति ज्ञातं भवेत् । तदीयं ज्ञातमिदमस्ति यत् -

Matter and form are always found together, but it is only through form the Potentialities inherent in matter can be actualized.

We may properly use the term 'Soul' not only for the function of each organ, but for the liking organism as a whole, Soul or mind is the form of the whole organism- - - - - Mind is a process; it is defined interms what it does.

इत्थञ्च अरिस्टोटलमहोदयः मौलपदार्थं तथा आकृत्यात्मकं पदार्थमिमं स्वाङ्गीकरोति, अपि च मनः गत्यात्मकप्रक्रियात्मकत्वादि भवतीति स्वीकरोति ।

के ग्रीसदेशस्येतिचिन्तकानामुक्तयैः तथ्यमिदं स्पष्टं भवति, यत् प्लेटो महोदयः शरीरं मनश्च [सोल] भिन्नपदार्थत्वेनाङ्गीकरोति । तौ-पन प्लेटो महोदयः शारीरिकप्रक्रियातो भिन्नं मनोऽपि प्रक्रियात्मकमेव स्वा-

तीति मनुते । तदीय दृष्टौ देहः [Organism] परिस्थितिश्च स्वतन्त्रा नैव भवति अपितु क्रियाघटनानां द्वौ पक्षौ भवतः, तयोः परस्परमन्यं प्रभावयति ।

Organism and environment are not independent but are two aspects of an interacting system of events.[1]

## यूरोपदेशे मध्यकालिकं मनोविज्ञानम्

महात्मा औगस्टाइनमहोदयः [354-430 ई०] तौलपदार्थम् आत्मनामकं पदार्थं वा एकं निरवयवपदार्थत्वेनाङ्गीकरोति । तदीय विभिन्न-क्रियाकलापानां वर्णनं अपि करोति । स आत्मनो विभिन्नस्तरं स्वीकरोति तथा न्यूट्रेटिव [पोषणकार्यम्] सेन्टीयेन्ट [ज्ञानकार्यम्] तथा रैशनल [तर्ककार्यञ्च]। शाश्वतुपरि एकां भिन्नामपि अवस्थामङ्गीकरोति या अवस्था दिव्यानन्दस्या-वस्था वर्तते । अतिनाट्यात्मिकवातावरणस्य सर्वोच्च प्रातिभज्ञानस्य इन्ट्यूटिवनौलिज [प्रातिभज्ञानस्य] प्राप्तिर्भवति । ज्ञान [नौइंग] भावना [फिलिंग एन आर लविंग] तथा इच्छा [विलिंग] एतन्माध्यमेन स आत्मनः कार्यकलापान् वितरति। ज्ञानक्षेत्रेषु सेन्सेशन्स [संवेदनाः] मेमोरी [स्मृति] इमेजिनेशन [कल्पना] तथा अण्डरस्टेण्डिङ्ग [ज्ञान] इति त्रीणि अन्तर्भवन्ति । अरिस्टाटलमहोदयः संवेदना-स्मृत्योः संयोजिका कल्पनामङ्गीकरोति स्म, किन्तु औगस्टाइनमहोदयः स्मृति-ज्ञानयोः संयोजिका कल्पना इत्येव स्वीकरोति ।

---

1. Historical introduction to Modern Psy.
   - By G. Murphy, P. 18.

<u>यूरोपीयो बुद्धिवादः</u>

<u>द्वैतस्य सिद्धान्तः</u> – पूर्ववर्तिविकानां प्रामाणिकतायाः विरोधेऽस्मिन् युगे विद्रोहः प्रारब्ध आसीत् । अस्मिन्युगे मनोविज्ञानक्षेत्रे डेकार्टे [1596–1650] फ्रान्सिस–बेकन–न्यूटनमहोदयाश्च स्वग्रन्थानां रचनांकृत्वा मनोविज्ञानमपि प्रमाणितमन्वन् । डेकार्टमहोदयः स्वग्रन्थे कथयति, यत् सः प्रत्येकस्मिन् विषये संशयं कृतवान्, अन्यत्तु अन्यत्, तद्वास्तविकतात् सत्तायामपि सन्दिग्ध आसीत्, यां सत्तां पूर्ववर्तिनः प्रायः सर्वेऽपि चिन्तकाः कस्मिंश्चिदेकस्मिन् अर्थे स्वीकृतवन्त आसन् । डेकार्टमहोदयः कथयति यत् स्वकीयमहं सन्देहं किमपि सीमां पर्यन्तं कथं न नयेयम्, तथापि संशयस्यैतस्यां क्रियायां मदीयं चिन्तनं सततमेव तिष्ठति । अतः इदं किमपि वस्तु, यच्चिन्तयति, तथा अस्ति, यत्सन्देहात्परं भवति । "अहं विचारयामि" इदं तथाभूतं वस्तु अस्ति, यत्र कोऽपि सन्देहो नैव जायते ।

डेकार्टमहोदयः मन [माइण्ड] मैटर [प्रकृति] उभयोः पूर्णतैव विभाजितवान् । मैटर तथाभूतं द्रव्यमस्ति यदाकाशे स्थानं रक्षति, किन्तु अयं मैटरपदार्थश्चिन्तनस्य कार्यं न करोति । माइण्ड तथाभूतं द्रव्यमस्ति यच्चिन्तयति किन्तु आकाशे एतस्य प्रसारो नास्ति[1] ।

शरीरविज्ञानमेकं पिनियलग्लैण्डनामकपदार्थस्यान्वेषणं चकार एनमेव च आत्मनो नाडीसंस्थानस्य च पारस्परिकप्रक्रियायाः केन्द्रमङ्गीचकार।

---

1. इन साइक्लोपीडिया ब्रिटेनिका : साइकोलोजी हिस्ट्री आफ खण्ड 18 – पृ0 783.

डेकार्टमहोदयः मैकेनिकल एनालोजी यन्त्रसादृश्येन वा मनसेतर-पदार्थयोः व्याख्यानार्थं प्रयतितवान् । आंत्रपेशीनां स्वतः संकोचनस्य धारणा-मुक्तवान् । सः षड्प्रारम्भिकभावान् स्वीकृतवान् यथा - [1] प्रेम-घृणा च, [2] सुखं-दुःखञ्च, [3] अभ्य आश्चर्यमिच्छा च । मस्तिष्कः स्पिरिटकार्य-शीलतया एतान् भवान् वर्णितवान् ।

<u>एकत्ववादः</u> - स्पिनोजा [1862-1677] महोदयः डेकार्टमहोदयस्य मनस-आत्मनः [मेण्टल सोल] भौतिकशरीरस्य च पारस्परिकक्रिया-प्रतिक्रियायाः व्याख्यामसन्तोषजनिकां स्वीकृतवान् । स्पिनोजामहोदयः मन [माइण्ड] तथा मैटर नामकपदार्थयोः पार्थक्येन सत्तां नैव स्वीकृतवान् अपितु एकस्यैव द्रव्यस्यैतौ द्वौ पक्षौऽभवत् इत्यङ्गीकरोति । इदञ्च द्रव्यं स्वयमुदासीन-मासीत् । एतद् द्रव्यं सः द्वाभ्यां नामभ्यामभिहितवान् - प्रकृतिः [नेचर] तथा ईश्वरश्च [गौड] । इत्थञ्च डेकार्टमहोदयस्य मनोवैज्ञानिकद्वैतवादस्य स्थाने एक-स्योदासीनैकात्मवादस्य [न्यूट्रल मोनोइज्म] स्थापना कृतवान् । अपञ्च स्वतन्त्रे-च्छा एकाभ्रान्तिरिति उक्तवान् यतोहि शारीरिकचेष्टा तु केवलं दृश्यते, किन्तु एतस्याश्चेष्टायाः नावलोकनंभवति । अत एव एतज्ज्ञायते, यत् मुवमेण्ट गतिः स्वत एव कारणादुत्पद्यते ।

स्पिनोजमहोदयस्य कथनमस्ति यत् - "A passion which is evil ceases to be a passion as soon as we form a clear and distinct idea."

परवर्ति पुनः मनोवैज्ञानिक सिग्मन्डफ्रायडसिद्धान्तस्य महत्त्वपूर्ण पूर्वरूपमस्ति ।

## ब्रिटिश इम्पीरिसिज्मः इति सिद्धान्तः

अस्मिन् काले भौतिकवादस्य पुनर्जीवनमभूत् । परमाणुवादस्य च सिद्धान्तः स्थापितोऽभूत् । टोमसहोब्समहोदयः [1588-1679] बेकनमहोदय इवेदमभ्युद्घोषितवान् यत् अनुभूतिरेव केवलं ज्ञानस्रोतो वर्तते । इयञ्चानुभूतिः [एक्सपिरियेन्स], संवेदना [सेन्सेशन] पाश्चात्यापरिता वर्तते, अन्यघटना इव च गतौ परिसमाप्यते । ब्रिटिशव्यवहारवादस्य त्रयः प्रसिद्धाः लेखका बभूवुः ।

1. जानलाकमहोदयः [1632-1704]
2. जोर्जबर्कलेमहोदयः [1685-1753]
3. डेविडह्यूममहोदयः [1711-1776]

## विंशतिशताब्द्यां मनोविज्ञानम्

एतस्यां शताब्द्यां मनोविज्ञानस्य महती उन्नतिरभूत् । ऊनविंशतिशताब्द्यां मनोविज्ञानस्योपलब्धयः, मेडिसिन-आयुर्वेदे वा मनोविज्ञानस्य योगदानमभूत् । भौतिकशास्त्रस्य प्राणिविज्ञानस्य वा साहाय्येन मनोविज्ञानस्य स्वरूपे व्यवहारस्वरूपे चाग्रेसरोऽभूत् । एतस्मिन् [illegible] नूतनं परीक्षणं व्यावहारिकं परीक्षणञ्च प्रारब्धम् । इदानीं यावत् मनोविज्ञानं दर्शनशास्त्रस्यैकमुपाङ्गं स्वीकृतमासीत् किन्तु वैज्ञानिकाधारेण मनोविज्ञानस्य प्रगतिरभूत्, तदैव च विंशतिशताब्द्याः प्रथमदशवर्षेष्वेवोत्पद्यमानैः त्रिभिः प्रधानसम्प्रदायैः मनोविज्ञानमत्यधिकं प्रभावितमभूत् -

1. व्यवहारवादस्य सिद्धान्तः ।
2. गेस्टाल्ट मनोविज्ञानम् ।
3. मनोविश्लेषणवादः ।

प्रयोगात्मकमनोविज्ञानस्योदयः [1810] ईस्वीय मध्येऽभूत् । जर्मनदेशनिवासी शरीरविज्ञानी मिलील महोदयद्वारा लिखितेषु ग्रन्थेषु एतत् साधयितुं यतितवान् यत् मस्तिष्कस्य विभिन्न-विभिन्नभागेषु मनसो विभिन्न-शक्तीनां स्थानं भवति । इत्यस्य व्यक्तिगतमनोविज्ञानस्य क्षेत्रे [इण्डिविजुअल साइकालोजी] डायगौनिस्टकनीकनिदानमूलकप्रक्रियायाः वा स्थापना कृता ।

<u>मनस्तथा शरीरञ्च</u>

व्यक्तेरभ्यन्तरे कतिपय तथाभूताः प्रक्रियाः वर्तन्ते, याः केवलं तस्यामेव ज्ञाता भवति, तासाञ्च शारीरिकेन्द्रियैः सह सम्बन्धो न भवति, यथा अभिव्यक्तीच्छाः भावनाश्च [फिलिंग्स] यतोहि एतासां प्रक्रियाणां स्वरूपं सर्वसाधारणजनाः नेवावलोकयितुं शक्नुवन्ति, न च सरलतया एतस्य क्षेत्रमेव निर्धारयितुं शक्यते, अतः इयं अभौतिक [नान-साइकोलाजी] इति वा स्वीक्रियते, यदाधारोऽपि किञ्चिद् [नन-साइकोलाजी] अशरीरिवस्तु एव स्वीकृतमासीत् । एतेषामशरीरिगतिविधीनां विषयस्तथैव अदैहिकं वस्तु भवति – यथा शारीरिक-गतिविधीनां विषयः शरीरमस्ति । एतस्यैवनाम माइण्ड अथवा सोल इति वा रक्षितवान् । एनक्सागोरसमहोदयस्तथाभूतो दार्शनिको यति, यः सर्वप्रथमं स्पष्ट-रूपेण शरीरमनसोश्च स्थापनां कृतवान् यद्यपि एतस्य छाया पूर्ववर्तिविचारकाणां यथा प्लेटोमहोदयस्यापि चिन्तने समुपलभ्यते ।

मृत्योः पश्चाच्छरीरं विनश्यति, किन्तु माइण्ड [मनस्] सोल इति वा मृत्योः पश्चादपि अमरस्वरूपेणैव स्थातुं शक्नोति । मनशरीरयोरयं, द्वैत-वादो रिस्टोटिलमहोदयस्य सन्तोषजनको नाभूत् । अतः सः सोलनामकं पदार्थं

शरीरस्यैवैकं कार्यत्वं स्वीकृतवान् । इयं कल्पना एकप्रकारेण व्यवहारवाद इव प्रतीयते । यतोहि व्यवहारवादे सोल इति वा मन इति वा शरीरात्सर्वथा पृथग्रूपेण नैव ज्ञायते । अरिस्टोटैलमहोदयः इन्टलेक्ट नामकं पदार्थं बुद्धिं वा शरीरात् पृथक् स्वीकृतवान् ।

मध्ययुगे एतस्या अतन्त्रोपजनकमनःशरीरयोरेकतायाः स्वीकारोऽभूत् । प्राणिशास्त्रस्य धर्मस्य च वृद्ध्या एतस्याः पुष्टिः कृता यतति । सप्तदशशताब्द्यां डेकार्टमहोदयः मतमयं प्रस्तावितवान् -

1. सर्वासां भौतिकघटनानां [फिजिकल इवेन्ट्स] भौतिकनियमद्वारा व्याख्यानं कर्तुं शक्यते ।
2. मनः पूर्वोक्तभूतात् सर्वथा भिन्नस्वरूपवत् यतो यद् कस्मादपि भौतिकवस्तुनः पृथक् कर्तुं शक्यते ।
3. प्रत्येकं मनः केनापि केनापि भौतिकदेहेन सह दृढं कारणात्मकं सम्बन्धं स्थापयति ।

मनःशरीरयोः क्रियाणां पारस्परिकसम्बन्धस्य सिद्धान्तस्य च यतो मानसिकघटनाः, यत्रैकतः शारीरिकघटनानां कारणं भवति, तत्रैव शारीरिकघटनातः मानसिक्योऽपि घटनाः सम्बन्धं स्थापयन्ति । उदाहरणार्थं [सेन्सेशन] मध्ये शारीरिकघटना मानसिकघटनामुत्पादयति, किन्तु इच्छादिषु मानसिकघटना शारीरिकघटनामुत्पादयति, किन्तु कारणतावादमाधारीकृत्य दार्शनिकाः एतत् पारस्परिकप्रभावपातनशीलं मतं नैव स्वीचक्रुः कतिपयवैज्ञानिकसिद्धान्तेभ्यश्च विरोधं कृतवन्तः ।

एपीफिनोमिनालिज्मवादस्य मते समस्ताः भौतिकघटनाः निरपेक्षघटनाः सन्ति, समस्तानि च भौतिकपरिवर्तनानि यानि मानवस्य प्राणिनश्च शरीरेषूत्पद्यन्ते । तदीयाव्याख्या च केवलं भौतिकनियमैः कर्तुं शक्यते । एतन्मते मानसिकघटनानां कारणत्वस्य व्याख्याकृद्‌या निरर्थकैव स मन्यते । मानवशरीरस्य परिवर्तनस्य मानसिकघटनानां कारणत्वेनैवाङ्गीकर्तुं शक्यते ।

व्यावहारिकमते चतुष्प्रकारकाः घटनाः स्वीकृताः वर्तन्ते – 1. फिजिकल-फिजिकल, 2. फिजिकलमेन्टल, 3. मेन्टल-फिजिकल, 4. मेन्टल-मेन्टल । यथा-यथा भौतिकविज्ञाने विचारात्मिका प्रगतिः भवति, तथा-तथा उपरि प्रतिपादितानि मतानि खण्डितानि भवन्ति । व्यवहारवादस्य सिद्धान्ते एकप्रकारेण मनसः सत्ताया एव निषेधो भवति । एतन्मतवादिनां कथनमस्तियत् मानसिकप्रक्रियाणां विषये यासां भाषाणां प्रयोगः क्रियते, तस्मात् शारीरिक-प्रक्रियाणां भेदः केवलं प्रकारमात्रस्यैव भेदो भवति, किन्तु सेन्सेशनगतं तथा एतद्-व्ययगतमपि व्यक्तिगतं व्यक्तेरभ्यंतरस्य वा घटनारूपः भवति । अतो व्यवहार-वादिदृष्ट्या तदीयं पूर्णं समाधानं नाभवत् । अतो मनोनामिकायाः कस्या अपि सत्तायाः स्वीकारः आवश्यकः प्रतिभाति ।

एवमेव यान्त्रिकव्याख्यायामपि [मैकेनिकल थ्युरी] अयं दोषो भवति, यत् मनसः सत्ता अस्माभिर्नैव स्वीक्रियते । एतत्सत्यमस्तियत् मस्तिष्कस्य कतिपयघटनानां सम्बन्धः मनसः कतिपयघटनाभिः सह संयोजयितुं शक्यते । न्यूरो-फिजियोलोजिस्टजनाः सफलतापूर्वकं मस्तिष्कस्य कतिपयक्षेत्राणां मापनमपि चक्रुः ।

यदा मस्तिष्कस्यैतत् प्रेरणाप्रुत्तेजना दीयते. तदा भिन्न-भिन्नप्रकारकैन्द्रियकानुभवाः जायन्ते । उदाहरणार्थं मस्तिष्कस्य विशेषभागस्योत्तेजनेन दृष्टिसम्बन्धिसंवेदना उत्पादयितुं शक्यते । वर्तमानकाले प्रेतविद्यायाः क्षेत्रे तथा परामनोविज्ञानस्य क्षेत्रे यद् व्यावहारिकं तथ्यमेक स्वीकृत मासीत्, तेनैतत्सिध्यति, यद् भौतिकविज्ञाननियमैः सर्वथा स्वतन्त्रभिन्ननियमद्वारा च मानसिकघटनाः नियन्त्रिताः भवन्ति, येन शरीरमनसोः पारस्परिकसम्बन्धस्य पुष्टिर्जायते । टैलीपैथी (विचारसंप्रेषण) दूरदर्शनादिपरामनोविज्ञानस्य तथाभूताः घटनाः वर्तन्ते, याः इदानीं यावत् ज्ञातभौतिकनियमैः शारीरिकनियमैश्च व्याख्याता नैवाभूवन् ।

उपरिप्रतिपादितं तथ्यं विशुद्धं वैज्ञानिकं नैववक्तुं शक्यते, अपितु तद् मैटाफिजिक्सस्य तथ्यमिति वक्तुं शक्यते । व्यावहारिकाधारेण तदीयाव्याख्या अपि नैव भवितुं शक्नुयात् ।

मनश्शरीरयोः पारस्परिकं सम्बन्धमादाय पाश्चात्त्यमनोविज्ञाने पर्याप्तमनुसन्धानमभवत् पुनरपि -

> The main task, however, is that of a coherent theory as to 'the wind and its place is nature' and this remains about where it has remained for the last few hundred years. Most Psychologists appear to feel that the problem is inaccessible to science, or atleast to the science of today.[1]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. Historical Introduction to Modern Psychology.
   - By G. Murphy, Page 388.

मनोविश्लेषकमन्यमनोवैज्ञानिकानां मतं विस्तारभियानेह प्रतन्यते । मनसस्तथा मनसः प्रकृतेः किं स्थानमस्ति ? तस्य विषये कोऽपि सुसम्बद्धः सिद्धान्त इदानीं यावन्निश्चितो नाभूत् । बहवो मनोवैज्ञानिकास्तु इदमनुभवन्त आसन् यत् आधुनिकविज्ञानं मनोविज्ञानञ्च तावत्पर्यन्तं नैवावगतमभूत् ।

## पाश्चात्त्यमनोविज्ञानस्य विषये एका समीक्षात्मिका तुलनात्मिका च दृष्टिः

उपर्युक्तोद्धरणेषु मनस उत्पत्तिः मनसःतत्त्वम् स्वरूपं शरीरे मनसः स्थानम् स्नायुसंस्थानं शरीरेण सह सम्बन्ध इत्यादिविषये किमपि सुस्पष्टं सुस्थिरञ्च चिन्तनं पाश्चात्त्यमनोविज्ञाने अद्यापि नोपलभ्यते । यूरोपस्य विभिन्नदेशेषु मनोविज्ञानस्याध्ययनं स्व-स्वजातीयपरिसीमायामपि कृतम् । एतस्य परिणामोऽयमभूद् यत् अमेरिकनसाइकोलोजी, जर्मन-साइकोलोजी, ब्रिटिश-साइकोलोजी इत्यादि नामभिः मनोविज्ञानस्य पृथक्-पृथक् तथा परम्परासंजाता, यस्या अनेकमान्यताः परस्परविरोधिन्योऽभवन् । व्यावहारिककार्यक्षेत्रे, यथा- शिक्षा, अपराधानामनुसन्धानम्, रोगाणां चिकित्सा इत्यादिक्षेत्रे शोधविद्भिः यदनुसन्धानं तथ्यैकीकरणं कृतम्, तानि तथ्यानि न केवलं निःसन्देहं महत्त्वपूर्णानि सन्ति । अपितु मानवस्य मनोविज्ञानस्य क्षेत्रे विपुलसम्पत्तेरपि सूचकानि सन्ति, तानि च अध्ययनार्थमपि आवश्यकानि भवन्ति, एतेन तथ्येन निषेधः कर्तुं नैव शक्यते।

भारतीयमनोविज्ञानेन सह पाश्चात्त्यमनोविज्ञानस्य तुलनायां निम्नलिखितं तथ्यं दृष्टिगोचरं भवति, येन पाश्चात्त्यमनोविज्ञानस्य विकासमार्गे अस्पष्टताः अपूर्णताश्च समाविष्टाः लक्ष्यन्ते ।

[1] पाश्चात्त्यदार्शनिकचिन्तने, यस्योपरितोषेण लेखः कृतो वर्तते, मनसो लक्षणस्य स्वरूपस्य च सम्यङ्निरूपणं नैवोपलभ्यते । एतस्य प्रधानं कारणमिदमस्तियत् प्रायः पाश्चात्त्यदर्शने मनः [माइन्ड] इति तथा मैटर इति च । द्वावेव पदार्थौ स्वीकृतौ वर्तेते, तत्र च शरीराद्भिन्नस्यात्मनः सत्ता अधिकांशत्वेन स्वीकृता वर्तते ।

[2] कुत्रापि मनसः स्पिरिटविषये कुत्रापि सोलविषये कुत्र च चेतना विषये अन्यत्र लाडकविषये अन्यत्र च मस्तिष्कविषये तथा स्नायुसंस्थान-स्वरूपे विषये च वर्णनं कृतमस्ति,। एतस्मादपि कारणात् मनसः स्पष्टं निरूपणं नाभूत् । भाषायाः एतादृगस्पष्टताकारणादेव पाश्चात्त्यदार्शनिकचिन्तनेषु अनास्था उत्पन्ना अभूत् । पाश्चात्त्यदर्शनस्य च परिणतिः लिंग्विस्टिकरूपे अद्यापि अवलोकिता वर्तते । भारतीयचिन्तने उद्देशलक्षणपरीक्षायाः क्रमस्य स्वीकृति कारणात् यादृशी सम्बद्धव्यवस्था अवलोक्यते, तादृशी पाश्चात्त्य-दर्शने मनोविषयेनोपलभ्यते । मनः साधनमस्ति न वा, मनो नित्यमनित्यं वा, मनस उत्पत्तिः कथं जायते ? सृष्टिप्रक्रियायां मनस उद्भवस्य प्रलयस्य च किं स्थानमस्ति ? मनसः परिमाणं विभु अणु वा ? इत्यादयः प्रश्नाः पाश्चात्त्य-मनोविज्ञानस्य क्षेत्राद् सर्वथा बहिर्भूताः वर्तन्ते ।

[3] मनोविज्ञानस्य वैज्ञानिकाधारं प्रदातुं बाह्यशारीरिकचेष्टासु अधिकतयाबलं प्रदत्तमस्ति, यतो हि ताः यन्त्रद्वारामापितुमपि शक्यन्ते । इत्यस्य जडयन्त्राणां सम्मुखं मानवानुभवानां चिन्तनस्य च गौणता प्रतिपादिता वर्तते, लोकमान्यानुभवानामन्योपेक्षा अपि कृता वर्तते । तथा मनसि शवान्तरिन्द्रिय-

नैक

विषयेऽपि प्रत्यक्षप्रमाणस्य यान्त्रिकपरिमापनस्य च प्रधानताप्रदानकारणात् तत्र विस्तृतं चिन्तनं नैव भवितुं शक्नोति । अनुमानादिप्रमाणानामपि उपेक्षाकृता वर्तते । एतेषां सर्वेषामयं परिणामोऽभूत्, यत् मनोविज्ञानस्य क्षेत्रे विभिन्न-सम्प्रदाया उत्थिताः ये परस्परं विरोधिनोऽभवन् चिन्तनमपि चाचिन्तयन् । भौतिकतायाः एतेन मतेन नूतनाः नूतनाः सम्प्रदाया समुत्थिताः, किन्तु मनो-विषये एतानि सर्वाणि चिन्तनानि साम्मूल्यपेक्षी भावमुन्मुक्तमपि कर्तुं न प्राभवन् । अनया दृष्ट्या मनोविषयकं भारतीयं चिन्तनं कुत्रापि अधिकं सुव्यवस्थितं समन्वया-त्मकञ्चास्ति ।

[5] पाश्चात्यमनोवैज्ञानिकाः यत्र चिन्तनः धारेणानेकप्रकारकान् सिद्धान्तान् स्थापितवन्तः, तत्रैवान्यतः एतादृशचिन्तनात् स्पेकुलेशनाद्वा दूरमपि पलायन्ते स्म, यत्तेषां मते केवलं तथ्यमाधृतं न भवति । पाश्चात्यमनोविज्ञानस्य दृढतानिश्चितता विज्ञानस्यैषां दरिद्रतान्याभिनयोपर्युक्तमुत20 Edna Heid-breader महोदयस्य शब्दाः सम्यक्प्रकाशं प्रसारयन्ति ।

Psychology, expecially in the united states, has risked everything on being ~~maxem~~ science on princi;le ref-rains from Speculation that is not permeated and stablized by fact. Yet there is not enough fact in the whole science of Psychology to make a single solid system.

No one knows this better than the Psychologists themselves. they see with the eyes of familiar association not only the undeuiable poverty of their science, but hte flimsiness and shoddiness of much of the material they are asked to accept as genuine fact. Psychologists are continu-ally looking upon the work of their colleagues and finding

that it is not good. And with little hesitation, or with none at all, they expose the weaknesses and flaws they discover.[1]

(5) यत्र भारतीयमनोविज्ञानस्य प्रधानभूतं लक्ष्यं पारलौकिकस्य मोक्षस्य प्राप्तिः दुःखस्यात्यन्तिकनाशः जन्म-मृत्युचक्रान्मुक्तिरित्यादिकमस्ति, तत्र पाश्चात्यमनोविज्ञानस्य लक्ष्यं जीवनस्य बहिर्मुखसमस्यानां समाधानकरण-मेवास्ति । अस्य प्रधानं कारणं देशगतं वातावरणं परिस्थितिः, तत्तद्देशस्य संस्कृतीनां समुत्थानात्र्च प्रभावोऽस्ति । भारतीयाश्चिन्तकाः अन्तर्मुखाः सन्तः मूलकारणस्यानुसन्धाने प्रवृत्ता अभूवन्, यदा च पाश्चात्यचिन्तनधाराः बहिर्मुखाः सत्यः मानवीयसंसारस्य बहिःप्रश्नानां समाधानायैव प्रवृत्ता आसन् । उभयोः मध्ये प्रतीयमानस्य भेदस्य दूरतो पलायनं नैव कथमपि कर्तुं शक्यम् ।

भारतीयचिन्तनधारायामपि तथ्यानां सम्यक्तया चयनं कृतमस्ति प्रमाणानामाधारेण च चिन्तनस्य निर्णयपरिणामा उपस्थिताः सन्ति । "स्पेकु-लेशन" इत्यस्य विचारस्य वा साहाय्येन भारतीयाश्चिन्तकास्तु भयभीताः न भवन्ति, न च तर्कयुक्तिसंगतविचारैः विमुखा एव भवन्ति ।

उपरि प्रतिपादितेषु पाश्चात्यचिन्तनेषु भारतीयचिन्तनेषु च बहुषु अंशेषु अद्भुतं साम्यमपि अवलोक्यते । स्थूलशरीराद् भिन्नस्य सूक्ष्मशरीरस्य सत्तायाः विश्वासः, मृत्योः पश्चात् सूक्ष्मशरीरस्य बहिर्गमनम्, तथा पुनर्जन्मानि

---

1. Seven Psychologies : By Edna Heidbreder, P. 3.

अन्यशरीरे तस्य गमनम्, योगशक्त्या परकायाप्रवेशः, आत्मन उपनिषद्विवर्णनम्, आत्मार्थे प्राणशब्दस्य प्रयोगः, बुद्धेः हृदयदेशे स्थितिः, शरीराणां कोशत्वे वर्णनं यथा वेदान्तदर्शने ~~पञ्चकोशानां वर्णनम्~~ पञ्चकोषाणां वर्णनमित्यादि विभिन्नानि तथ्यानि तस्याः प्राचीनतायाः द्योतकानि भवन्ति, किन्तु एतत्तथ्यस्वीकृतावपि सर्वेऽपि पाश्चात्त्याः विद्वांसः नैकमत्यमवलम्बन्ते ।

<u>आस्तिकदर्शनेषु उपलब्धमनस्तत्त्वलक्षणानां पारस्परिकीसमीक्षा:</u>

न्यायवैशेषिकदर्शनानुसारं मनसः स्वरूपं पूर्वमेव वर्णितमासीत् । तन्नित्यं तथा विभिन्नमस्ति, यत् कोटिशः प्राणिनोऽनन्ताः भवन्ति, प्रत्येकं प्राणिषु पृथक्-पृथक् मनस्तिष्ठति, अतः मनसोऽपि संख्या अनन्तैव भवति । न्यायवैशेषिकमतानुसारं मनसोऽष्टौ गुणाः कथिताः सन्ति - [1] संख्या, [2] परिमाण, [3] पृथक्त्व, [4] संयोग, [5] विभाग, [6] परत्व, [7] अपरत्व, [8] वेग इति ।

न्यायवैशेषिकदर्शने मनसः सत्ता स्वीकृता वर्तते, मनसश्च सत्ताया अनुमितिः प्रमाणेन सिध्यति । अनुमानप्रयोगश्चेत्थम् - "आत्मनः सुखदुःखादि ज्ञानं किमपि करणसाध्यं सुखाद्युपलब्धिक्रियात्वात् यत्र यत्र क्रियात्वं तत्र सर्वत्र करणसाध्यत्वम्, यथा काष्ठछेदनादिक्रिया कुठारादिकरणसाध्यात्वात्, अतः सुखादिज्ञानमपि क्रियात्वात् केनापि करणेन साध्यं भवति । इत्थमत्र सुखादिज्ञानस्य करणसिद्धत्वात् चक्षुरादीन्द्रियाणां सुखाद्युपलब्धेः कारणत्वाभावात् अन्तःकरणमन्तरिन्द्रियमिति वा सिध्यति ।

मनसः स्वरूपज्ञापनाय पूर्वमेव प्रतिपादितमस्ति, यत् विषयेण घटपटादिना सह चक्षुरादीन्द्रियाणां संयोगे जातेऽपि ज्ञानस्यान्यान्यसामग्र्-साधनोपस्थितौ सत्यामपि युगपत् अनेकानि ज्ञानानि नोत्पद्यन्ते । इत्थञ्च युगपदनेकज्ञानानामुत्पत्त्यभावोऽपि मनसोऽनुमानस्य हेतुः सिध्यति । एतेन सिध्यति यत् उक्त दशापन्नं चक्षुः, उपधायकस्य घटस्य कस्यापि द्रव्यस्य संयोग-शून्यम्, यस्य द्रव्यस्य संयोगाभावोऽपि चक्षुर्ज्ञानस्य सर्वेषु करणेषु सत्स्वेऽपि व्यासंगदशायां चाक्षुषज्ञानं नोत्पद्यते । यथा चक्षुषा असंयुक्तो घटः चाक्षुषं ~~चक्षुः~~ प्रत्यक्षात्मकं ज्ञानमुत्पादयतः कस्यापि पदार्थस्य संयोगाभावेन चाक्षुषं ज्ञानं नोत्पादयति । अनेनैतदपि नैव वक्तुं शक्यं यत् अदृष्टविशेषस्योपस्थिति-कारणात् अर्थात् भाग्यविशेषस्योपस्थितिकारणात् एतस्यां व्यासंगदशायां चाक्षुषं ज्ञानं नोत्पद्यते । इत्थञ्चादृष्टकल्पने इन्द्रियाणामप्यनावश्यकत्वापत्तिरापद्येत । अदृष्टद्वारैवान्येन्द्रियैरुत्पन्नविषयाणां ज्ञानस्योत्पत्तौ वा अदृष्टस्य कारण-त्वेऽङ्गीक्रियमाणे अन्येषामिन्द्रियाणामावश्यकतैव न स्यात् । इत्थञ्चान्येन्द्रि-याणां कल्पनाभावोऽप्येतस्य प्रसङ्गेन उत्पत्स्यते । अतो मनसः सत्तार्थमान्ये-न्द्रियमनसां संयोगेनोत्पद्यमान प्रत्यक्षज्ञानार्थञ्च मनसः सत्ताकल्पनैव युक्ति-संगता प्रतीयते ।

मनसः परिमाणस्य विषये पूर्वं यत्किञ्चित्प्रतिपादितमस्ति यत् न्यायवैशेषिकदर्शने युगपज्ज्ञानोत्पत्त्यभावकारणात् मनसोऽणुपरिमाणत्वमङ्गीकृत-मस्ति । ये हि तावन्मीमांसकाः मनसो विभुत्वमङ्गीकुर्वन्ति, तेषां मतं नैव समीचीनम्, यतो हि तन्मते विभुत्वविशिष्टमनसः आत्मनश्च संयोगः सदैव

स्थास्यति, तथा च व्यासंगस्य सिद्धिरेव न स्यात्, यस्य व्यासङ्गस्य कारणात् चक्षुरादिसंयोगसत्त्वेऽपि ज्ञानं नोत्पद्यते, इयञ्च ज्ञानानुत्पत्तिर्व्यासङ्गदशायां सर्वानुभवसिद्धा भवति ।

द्वितीयश्चायमपि दोषो पतेदियत् द्वयोः विभुपदार्थयोः संयोगो-नैव जायते । इत्थञ्च विभुनोरात्ममनसोः । परस्परं संयोगाभावात् सुखादि-ज्ञानानामुत्पत्तिः नैव कदापि सिध्येत् । एतदपि वचनेन न वाच्यं यत् कति-पयावस्थायां सर्वेन्द्रियैर्जन्यज्ञानस्य यौगपद्यं सर्वानुभवसिद्धमस्ति । यथा- अपूपं भक्षयतः पुरुषस्य रसनया रसज्ञानम्, नासिकया गन्धज्ञानम्, त्वचा मृदुकठोरयोः युगपज्ज्ञानम्, एतच्च सर्वेन्द्रियजन्यज्ञानस्य युगपद्भवनं सर्वानुभवसिद्धम्, किन्तु न्यायदर्शनानुसारमेतत्कथनं नैवयुक्तिसंगतं प्रतिभाति । ज्ञानस्यायं युगपदनुभवः तन्मते भ्रमविषयो भवति । मनसोऽणुत्वाद्वेगवत्त्वाच्च तत्तद्भिन्नेन्द्रियैः एतावता वेगेन संयुज्यते यत्तेभ्यः क्रमशः भिन्नभिन्नक्षणेषु उत्पन्नानि ज्ञानानि युगपदुत्पद्यन्ते इति भ्रमो जायते । यथा- सहस्रकमलदलानां सूचीभेदे जाते भ्रमो भवति यत् समस्तपत्राणां भेदनमेकस्मिन्नेव क्षणेऽभूत् । प्रत्येकपत्रस्य भेदनं तु क्रमेणैव भवति, किन्तु भेद्यक्षणमेतावत्स्वल्पम्, भेदनञ्चैतावच्छीघ्रं भवति यत् तदीययुगपद्-भेदनस्य भ्रमो जायते ।

वेदान्तदर्शनमते मनः मध्यमपरिमाणविशिष्टं सावयवः पदार्थोऽस्ति, संकोचविकासशालि चापि भवति । इत्थञ्च तन्मते व्यासङ्गयौगपद्ययोरुभयोः सिद्धिर्जायते, किन्तु एतदपि मतं नैयायिकानां मते तुच्छमेव प्रतिभाति, यतो हि अनन्तान्तःकरणानामुत्पत्तिः तेषां विनाशः, तेषां कार्यकारणभावः, तदीय-

प्रतियोगिकानुयोगिकभेदकल्पनायां महद्गौरवं भविष्यति । सर्वेषां ज्ञानानां साधनं मनोऽस्ति । संख्यायां मनोऽनन्तं भवति । संक्षेपतः प्रतिपादनीयमेतदेव भवति, यद् मनः न तु मीमांसकैः प्रतिपादितं विभु अस्ति, नापि वेदान्तिभिः मान्यं मध्यमपरिमाणविशिष्टमेव भवति ।

एतत्पूर्वमेव प्रतिपादितमस्ति, यत् न्यायवैशेषिकमते मनसि चैतन्यगुणो न भवति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाख्याः संयोगेन जायमानम्, बुद्ध्यादि गुणानां ज्ञानं केवलं मनसैव जायते अर्थात् एते गुणाः केवलं मनोमात्रग्राह्या भवन्ति । आत्मन एकत्वं परिमाणवत्त्वञ्चापि मनसैव गृह्यते । अतः आत्मनः संख्यापरिमाणञ्चापि मनोमात्रग्राह्यमेव भवति, किन्तु संख्यायाः मानसत्वे प्रमाणाभावः स्वीक्रियते, यतो हि न्यायवैशेषिकमते मनसि अष्टौ गुणाः भवन्ति, अतो नवद्रव्येषु मनः एकं द्रव्यत्वेनाऽङ्गीकृतमस्ति । न्यायवैशेषिकमते मनसः परिमाणमणु अस्ति यतो हि तन्मते ज्ञानानां युगपदुत्पत्तिर्नास्ति, अत एव सृष्टिप्रक्रियायां मनस उत्पत्तिरपि नोक्ता अपितु एतन्मते मनो नित्यपदार्थत्वेनास्ति । मनोऽन्तरिन्द्रियत्वेन परिगणितमस्ति, अन्यानि सर्वाण्येन्द्रियाणि अतीन्द्रियाणि भवन्ति तेषां ज्ञानञ्चानुमानेनैव जायते । मनस इन्द्रियत्वानीन्द्रियत्वविषये शोधप्रबन्धे अग्रे विचारयिष्यते ।

<u>न्यायवैशेषिकसम्मतमनोविषयकमतपर्यालोचना</u> -

न्यायवैशेषिकदर्शनस्य तर्कपुष्टमनोविषयकस्वल्पस्य सिद्धान्तस्य च तुलनात्मिका समीक्षा अत्र प्रासङ्गिकी प्रतिभाति । एतेन मनस्तत्त्वविषयकसम्यग्ज्ञानस्योपलब्धिर्भविष्यति । सांख्ययोगयोर्वेदान्तस्य च मते सृष्टिप्रक्रिया-

वर्णने मनस उत्पत्तिः वर्णिता अस्ति । अतो नैयायिकसम्मतमनसो नित्यतायाः स्पष्टतः निराकरणं जायते । यदि मनसो नित्यत्वमङ्गीकृतं स्यात्तदा सर्वेषां जीवात्मनां न्यायमते नित्यत्वेऽङ्गीक्रियमाणे सर्वेषां मनसां सर्वैः आत्मभिः सह, सर्वेषां चात्मनां सर्वैः मनोभिः सह संयोगः सदैव सिध्यति । अतो व्यवस्थासुखदुःखयोः पृथक् पृथगनुभूत्या विरोधो जायते ।

न्यायवैशेषिकमते गुणाश्रयत्वकारणात् मनसो द्रव्यत्वमुक्तमस्ति । एतदर्थं गुणगुणिनोर्भेदाङ्गीकार आवश्यको भविष्यति, किन्तु भेदसिद्धिरेकमत्यन्तं दुष्करं कार्यमस्ति । न्यायमते गुणगुणिनोश्च सम्बन्धः समवायसम्बन्धरूपेणाङ्गी-कृतोऽस्ति, किन्तु वेदान्तमते समवायसम्बन्धस्य निराकरणं कृतमस्ति । श्रुतिं प्रमाणयतां नैयायिकानां मते मनसो नित्यत्वकथनं स्पष्टतः श्रुत्या विरुध्यते ।

अनया दृष्ट्या श्रुतिं युक्तिमनुभवञ्चाधारीकृत्य परिपुष्टकारणात् वेदान्तस्य मनोविषयकं मतं सम्यक् प्रतीयते । प्रथमतः सांख्ययोगयोर्वेदान्तस्य मते च मनस उत्पत्तिः वर्णिता अस्ति । सांख्ययोगदर्शनयोः च मन इन्द्रियाणि च प्रकृतेरेव परिणामविशेषभूतानि सन्ति । अतस्त्रिगुणात्मकानि सन्ति । किन्तु वेदान्तदर्शने सांख्ययोगयोः द्वैतवादो निराकृतोऽस्ति । प्रकृतिः मायां[1] वा आत्मन एव शक्तिविशेषस्वरूपा भवति । अतः सम्पूर्णस्य प्रपञ्चस्य [यत्र प्राणः, मनः, सर्वेन्द्रियाणि आकाशोऽपि सम्मिलितोऽस्ति] उत्पत्तिरेकमात्मन एव स्वीकृता भवति । अतो मनसः [मनोबुद्धिचित्ताहंकारस्य] प्रकृतेः पृथक् सत्ता

---

1. मुण्डकोपनिषद् - 2/1/3.

स्वीकृता नास्ति । अतः समस्तप्रपञ्चमनोबुद्धिचित्ताहंकाराख्याः सर्वेऽपि पदार्थाः आत्मन एव विवर्तभूताः सन्ति । आत्मनः परिणामित्वाङ्गीकारादात्मनि अनित्यत्वदोषः समापतति । मुण्डकोपनिषदि स्पष्टं प्रतिपादितमस्तियत् –

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥"[1]

अथैतत्सर्वं स्पष्टमेव जायते यत् आत्मन एव प्राणः, मनः, सर्वेन्द्रियाणि, आकाशम्, वायुः, ज्योतिः, आपः, पृथ्वी चेति सर्वेऽपि उत्पद्यन्ते। किन्तु एतदुत्पत्तिः विवर्तवादसिद्धान्तानुसारमस्ति । सांख्ययोगसम्मतपरिणामवादस्य सिद्धान्तानुसारं न एतदवबोद्धव्यम् ।

बौद्धदर्शने पञ्चस्कन्धादेः वर्णनं हीनयानसम्प्रदाये स्वीकृतमस्ति । किन्तु परवर्तिदार्शनिकचिन्तनस्य विकासे विज्ञानवादशून्यवादौ पञ्चस्कन्धायतनादीन् माया भ्रम इति चोक्त्वा खण्डितवन्तौ, उपनिषदि प्रतिपादितस्याद्वैतवादस्य नामान्तरं रूपान्तरं च कृत्वा विज्ञानवादशून्यवादयोः स्वरूपं प्रतिपादितम् । एतत्पूर्वत एवोक्तमस्तियत् अनात्मवादस्य दार्शनिकसिद्धान्तस्य चिन्तनात्सर्वथा पृथग्रूपेण वर्णनं नैव कृतमस्ति । विज्ञानवादे अवश्यमेव मनो विज्ञानशब्दस्य प्रयोगोऽभूत् किन्तु अयं विज्ञानवाद उपनिषत्प्रतिपाद्याद्वैतवादस्यैव प्रच्छन्नं रूपमस्ति । सद्धर्मलंकावतारसूत्रस्य भूमिकायां डा०शीतांशुशेखरबाग्चीमहोदयस्य निम्नलिखिताः शब्दाः

---

1. मुण्डकोपनिषद् - 2/1/3.

एतस्मिन् प्रसङ्गेऽत्यन्तं महत्त्वपूर्णाः सन्ति -

Mahayana stressed without fatigue the one ness of all creatures, Budhahood is innate in all. It came too near to the Upanisadic doctrine of one and absolute brahman as the ultimate reality Barring terminological differences, Monistic Vedanta and Budhism, So for as it is expounded by Asanga's School and the Lankavatara and other Mahayana Again as are indistinguishable in spirit.[1]

लंकावतारसूत्रे प्रतिपादितमस्ति यत् निर्वाणस्य प्राप्तिस्तदैव सम्भाव्यते, यदा आलयविज्ञानं सर्वग्राहिमनो वा, यत्सर्वप्रकारकस्य विज्ञानस्य मूले उपादानरूपेणाङ्गीकृतं भवेत्, सर्वथा परिशुद्धं भवेत् । "इदमालयविज्ञानं स्वाध्यात्मिकस्वरूपे शाश्वतसत्तात्वं वर्तते, यदज्ञानिनामहम्, पुद्गल, आत्मरूपस्य वा प्रतीयते । इदञ्च तस्मादालयविज्ञानात्पृथङ्नास्ति, यस्य नामचित्तमान-मप्यस्ति । तस्यापरं नाम "तथा गतगर्भ" इत्यप्यस्ति । स तथा गतगर्भः स्वभावतः सर्वथा निर्दुष्टो वर्तते, परन्तु ~~[illegible]~~ दोषैः विकारैश्च सर्वथा आवृत-त्वकारणात् इदं स्वविशुद्धस्वरूपेऽर्थात् पूर्णचित्तस्वरूपे, यो न विषयी न च विषयो भवति, सत्यतः (यथार्थस्वरूपे) नैव परिगृह्यते । एतस्य "तथ्यता" "सत्यता" "भूतता" धर्मधातु, निर्वाण, नित्यसमता, अद्वयमित्यादीनि नामानि भवन्ति।

---

1. सद्धर्मलंकावतारसूत्र भूमिका - पृ० ११.

एतस्यानुभवः सत्यग्राहिबुद्ध्या सम्यग्ज्ञानेन वा जायते । एतदेव सम्यग्ज्ञानं परम-तत्त्वबोधस्यैकमात्रं साधनमस्ति । अयञ्च निर्विकल्पोऽस्ति । विकल्पः स भवति यस्माद् जडचेतनयोर्नानात्वं प्रतीयते । तदेवालयविज्ञानं यदा एतत्समस्तमिथ्या-धारणाभिर्विमुच्यते, तदा तस्य निर्वाणप्राप्तिर्जायते । प्रत्येकव्यक्तिश्च तथागत-स्वरूपेऽवस्थितो भवति[1] । इत्थञ्च लंकावतारे शाश्वततथ्यं प्रतिपादितं भवति ।

शांकरवेदान्ते यद्व्यावहारिकपारमार्थिकसत्यस्य वार्ता कथिता वर्तते सा सांवृतिकसत्त्वं पारमार्थिकसत्यञ्चादाय स्वीकृता वर्तते, तथैव वर्णनं विज्ञानवादेऽप्युपलभ्यते । वेदान्तमते समस्तस्य जगतो मूले एक एवात्मा ब्रह्म वा वस्तुरूपेण विराजमानमवलोक्यते । समस्तप्रपञ्चः मायाशक्तिकारणात् तस्यैव विवर्तो भवति । वस्तुनि विकल्पो- न भवत्यतः आत्मा सर्वविकल्पात्परो भवति । आत्मनो ज्ञानात् प्रपञ्चोत्पत्तिः, स्थितेर्नाशस्य च वर्णनम्, ब्रह्मणो लक्षणरूपेण क्रियते, किन्तु वास्तविकस्वरूपेण ब्रह्म आत्मा वा समस्तप्रकारलक्षणेभ्यः परो वर्तते, अतः सोऽवाङ्मनसगोचरतत्त्वभूतो भवति । तत्त्वज्ञानादज्ञानस्य निवृत्तौ जातायां सत्यां जीवात्मा स्वपरमार्थस्वरूपेऽवतिष्ठते ।

"अविद्यास्तमयो मोक्षः" इत्युक्त्वा आचार्यसुरेश्वरः एतदेव तथ्यं संकेतयति । माण्डूक्योपनिषदः गौडपादकारिकायामाचार्यगौडपादमहानु-भावाः कथितवन्तो यद् न परमार्थबुद्ध्या निरोधो भवति, न वा जगत उत्पत्तिरेव भवति ।

---

1. सद्धर्मलंकावतारसूत्र, भूमिका - पृ० 22.

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥"[1]

एतस्याः कारिकायाः भाष्यं भाषयन् आचार्यः शंकरः कथयति यत् -

उत्पत्तिप्रलययोरभावात् बद्धादयो न सन्तीत्येषा परमार्थता । कथमुत्पत्तिप्रलययोरभाव इत्युच्यते द्वैतस्यासत्त्वात् । "यत्र हि द्वैतमिव भवति "य इह नानेव पश्यति" आत्मैवेदं सर्वम्" ब्रह्मैवेदं सर्वम्" एकमेवाद्वितीयम्" इदं सर्वं यदयमात्मा" इत्यादिनानाश्रुतिभ्यो द्वैतस्यासत्त्वं सिद्धम् । - - - - - - - न हि निरुद्धे मनसि सुषुप्ते वा द्वैतं गृह्यते । अतो मनो विकल्पनामात्रं द्वैतमिति सिद्धम् ।

उपरि प्रतिपादितानामुद्धरणानां तुलनया स्पष्टमेव परिज्ञायते यदुपनिषत्प्रतिपाद्यमद्वैततत्त्वमेव [निर्विशेषब्रह्मैव] महायानसम्प्रदायस्य विज्ञानवादे विशुद्धचित्तम्, विज्ञानं वा, शून्यवादे च शून्यमेव परमार्थतत्त्वं प्रतिपादितमस्ति । विज्ञानवादशून्यवादयोः निराकरणं वेदान्तसूत्रस्य तर्कपादे कृतं वर्तते । एतस्य शोधप्रबन्धस्य विषयः तत्त्वमीमांसाया अभावात् तेषां सर्वेषां तर्काणां प्रमाणानाञ्च अत्रोपस्थापनं नात्यन्तमावश्यकतां भजते।

उक्त विवेचनेनैतत्स्पष्टं जातं यत् प्रपञ्च इव मनोऽपि एकं व्यावहारिकं वस्तु वर्तते, तस्योत्पत्तेः स्वरूपस्य च वर्णनं वेदान्तस्य सृष्टिप्रक्रियान्तर्गतं पूर्वमेव वर्णितम् । मायायाः अर्थात् प्रकृतेः परिणामः मनोऽस्ति । कृतभूतानां सात्त्विकांशैः मनस उत्पत्तिर्भवति तैरेव चेन्द्रियाणि उत्पद्यन्ते इति

---

1. माण्डूक्य-कारिका - 2/32.

तु पूर्वमपि प्रतिपादितम् ।

प्रमाकरणस्यैव नाम प्रमाणमस्ति प्रमातागमान्यस्य तदन्य चैतन्य-मस्ति । अन्तःकरणे भवति या वृत्तिरुत्पद्यते । इयं वृत्तिरपि मनसः परि-णामस्वीकारोऽस्ति । "कामः संकल्पः" इत्यादिश्रुत्यैतत्सिध्यति यद् कामादयः अपि वृत्तयोऽन्तःकरणस्यैव परिणामभूताः सन्ति । अहं वृत्तिरपि अन्तःकरणस्यैवैका-वृत्तिरस्ति । अहम्पदार्थविषयविद् ग्रन्थिरूपत्वादन्तःकरणस्यैव यद्यपि धर्म-रूपापि कामादिरपि अन्तःकरणस्य वृत्तिविशेष एवास्ति, एतस्मिन्विषये कस्यापि संशयो न जायते । अनेकाशंका भवितुमर्हति, यद् यदि अन्तःकरण-मिन्द्रियमस्ति, तदा अहम्बुद्धेः तस्य भानं कथं भवेत् ? इन्द्रियाणामप्रत्यक्षत्वात् । एतस्योत्तरं समाधानं भवति, यद् अन्तःकरणमिन्द्रियं नास्ति यतो हि अन्तःकरण-स्येन्द्रियत्वे किमपि प्रमाणं नास्ति: -

"इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः[1] ।
मनसस्तु पराबुद्धिर्बुद्धेरात्मा महान्परः ।।"

इति श्रुतौ इन्द्रियात्पृथक् मनसो निर्देशो भवति । "मनः षष्ठानीन्द्रियाणि" इति स्मृतिवाक्ये नापि मनस इन्द्रियत्वं नैव सिध्यति । यद्यपि मनोऽनिन्द्रियमस्ति, तथापि इन्द्रियगतसंख्यायाः पूर्तौ अनेन कथन विरोधो न भवति । अतः कतिपय वेदान्ताचार्याः मनस इन्द्रियत्वमपि नाङ्गीकुर्वन्ति[2] । यथा समस्त-प्रपञ्चः मायोपकल्पितः, तथैव पारमार्थिकदृष्ट्या मनः एकः कल्पितपदार्थ

---

1. कठोपनिषद् - 1/3/10.   2. वेदान्तपरिभाषा - पृ० 75.

स्वास्ति, परन्तु व्यावहारिकदृष्ट्या सृष्टिप्रक्रियायामपंचीकृतभूतानां सात्त्विकांशैः मनस उत्पत्तिः प्रतिपादिता वर्तते ।

एतेन समग्रविवेचनेन मनस्तत्त्वविषयकोऽयं परिणामः निःसरति यत् मनोऽन्तःकरणं वा मायाजन्यमस्ति, अर्थात् प्रकृतेः अपञ्चीकृतभूतानां सात्त्विकांशैः मन उत्पद्यते । मनोऽन्नस्य परिणामो भवति, अर्थात् अनेन पुष्टं भवति । सृष्टिरिव मनोऽपि अनादि अस्ति, किन्तु आत्मनस्तत्त्वज्ञानेनाविद्या तत्कार्यमन आदीनां नाशो जायते । इत्थञ्च तत्त्वज्ञानमविद्यायाः कार्यरूपमनसो नाशस्य कारणं भवति । अविद्याया अयं प्रलय एवमोक्षो भवति । अविद्यैव बन्धस्य कारणमेतस्याश्चाविद्यापर पर्यायवाच्यायाः मायायाः नाशो विद्याविरोधितत्त्वज्ञानेनैव जायते, उपासनया यज्ञादिकर्मणा वा न । अत एवोपनिषदि स्पष्टं प्रतिपादितमस्तियत् नेदं यद् इदमुपासते" इति । निष्कामभावनया ईश्वरार्पणबुद्ध्या वा कृतं शास्त्रप्रतिपादितं नित्यनैमित्तिकादिकं कर्म अन्तःकरणशुद्धेः कारणं भवति । वैष्णवाचार्यैः प्रतिपादिता भक्तिः, उपासनाया एव रूपान्तरितं नाम भवति, सा च ब्रह्मतत्त्वे निरन्तरं चित्तस्य संयोजने कारणं भवति । उपासनायाः भक्तेर्वा अज्ञानेन सह क्वचन विरोधो नास्ति, यतोहि भक्तिरुपासना वा संवादिभ्रमस्यैव भवति । एतस्य विवेचनं शोधप्रबन्धस्यास्य सप्तमाध्याये करिष्यते ।

इत्थञ्च मनः शरीराभ्यन्तरीयायाम्, अपञ्चीकृतभूतानां सात्त्विकांशैरुत्पन्नप्रमायाः {यथार्थज्ञानस्य} करणं भवति । केचन आचार्याः मनस इन्द्रियत्वं नाङ्गीकुर्वन्ति, अन्ये च मनस उभयात्मकत्वं स्वीकुर्वन्ति । अत एव मनुस्मृतौ प्रतिपादितमस्ति यत् -

"एकादशं मनोज्ञेयं स्वगुणेनोभयात्मकम्"

इत्यस्य मनस एतदेव लक्षणं स्वरूपञ्चावगन्तव्यम् । न्यायवैशेषिक-दर्शनाभिमतं मनसो नित्यत्वमित्यत्र निराक्रियते । श्रुतियुक्तिविरोधकारणाच्चनतः पक्षः समीचीनपदवीमधिरोहति । शांकरवेदान्तः केवलं श्रुत्याधारेणैव दर्शनं नास्ति । श्रुतियुक्त अनुभवाधारेण तत्र तत्त्वनिर्णयो विधीयते । सांख्ययोग-दर्शने च मनस एकाग्रतायाः मनोनिरोधस्य च वर्णनमस्ति, मनसो नाशस्य तत्र लक्ष्यं नास्ति । अत एव वेदान्तसूत्रे सांख्ययोगदर्शनयोः निराकरणम् -

"एतेन योगः प्रत्युक्तः" [2/1/3]

इत्यनेन सूत्रेण क्रियते । सांख्यदर्शने प्रधानं [प्रकृतिं] स्वतन्त्रत्वेन कारणमङ्गीकृतमस्ति, तेनैव च महदहंकारादिकार्याणामुत्पत्तिः कल्पिता वर्तते. किन्तु लोके वेदे चैवम्भूतस्य स्वतन्त्रप्रधानस्य तत उत्पद्यमानानां महदादिकार्याणाञ्च कुत्रापि प्रसिद्धिर्नास्ति । योगदर्शने च सांख्यप्रतिपादितस्य स्वतन्त्रप्रधानस्य तत उत्पद्यमानस्य महदादिकार्यस्य च स्वीकारो वर्तते । पूर्वोक्तसूत्रेण तस्यैव खण्डनं भवति । किन्तु योगः सम्यग्दर्शनस्य सम्यग्ज्ञानस्य चोपायो भवति, तस्य विधानञ्चोपनिषद्यपि कृतं वर्तते । अतः सम्यग्ज्ञानोपायदृष्ट्या योगस्य निरा-करणं नास्ति । सांख्ययोगौ द्वावपि द्वैतवादिनावतो नतावात्मन एकत्व-मङ्गीकुरुतः । अतो द्वैतवादिवेदान्तदर्शनमपि द्वैतवादिनं सांख्ययोगं नैव सहते । वेदान्तदर्शनं ज्ञानस्य नित्यतां साधयति । यतो हि "सत्यं ज्ञानमनन्तं ब्रह्म" एतदेव ब्रह्मणः स्वरूपलक्षणमस्ति । अन्तःकरणवृत्तेरुदयनाशाभ्यां ज्ञानोत्पत्तिः नाशभ्रमश्च जायते । अनुमानप्रमाणद्वारा ज्ञानस्यैषां नित्यतां पञ्चदशीकार

आचार्यो विद्यारण्यः साधितवान् । अनुमानप्रकारश्चेत्थम् - विवादाध्यासिता संवित्, स्वाभाविकभेदशून्या, उपाधिपरामर्शमन्तरेण अविभाव्यमानभेदत्वात् गगनवत् - इति । अर्थात् संवित् ज्ञानं वा स्वाभाविकभेदशून्यमस्ति । उपाधि-ज्ञानं विना अर्थात् घटपटाद्युपाधिज्ञानं विना संविदि भेदानुभवो नैव जायते यथा आकाशमेकमभिन्नं वस्तु भवति तथापि घटपटाद्युपाधिकारणात् घटाकाशः महा-काशाद् भिद्यते किन्तु वास्तवरूपेण आकाशे क्वचन भेदो न भवति ।

द्वितीयः प्रयोगश्चेत्थम् - शब्दसंवित् स्पर्शसंविदो न भिद्यते संवित्त्वात्, स्पर्शसंविद्वत् । अर्थात् शब्दज्ञानं स्पर्शज्ञानान्न भिद्यते ज्ञानत्व-कारणात् स्पर्शज्ञानमिव । यदा एकस्यैव ज्ञानस्यौपाधिकभेदेन भिन्नव्यवहारस्यो-त्पत्तिर्भवितुमर्हति, तदा वास्तविकभेदकल्पना गौरवग्रस्ता, स्वान्नोचिता प्रति-भाति । अतोऽन्तःकरणस्य वृत्तिभेदेन ज्ञानानामर्थात् शब्दज्ञानस्पर्शज्ञानादिज्ञानानां भेदो लौकिकव्यवहारार्थं सिध्यति, एतेषु ज्ञानेषु भेदाङ्गीकार आवश्यको नास्ति ।

वेदान्तमते मनसोऽन्तःकरणस्य चोत्पत्तिः पूर्वं ज्ञापिता वर्तते । एतदपि प्रतिपादितमस्ति यत् मनः पारमार्थिकनित्यपदार्थो नास्ति, अपितु अयमेकः भौतिकः पदार्थः वर्तते, तच्चमध्यमपरिमाणविशिष्टं भवति । मनोऽन्नस्यैव परि-णामभूतमस्ति । मनः इन्द्रियमस्ति, तस्य प्रत्यक्षविषयत्वमपि भवतीति भामती-काराः आचार्यश्रीमद्वाचस्पतिमिश्रमहानुभावा अपि कथयन्ति । एकमेवान्तःकरणं मनो वा संशय, निश्चय, गर्व, स्मरणाख्य चतुष्प्रकारकवृत्तीनां कारणं क्रमशः मनो बुद्धिरहङ्कारश्चित्ताख्यां संज्ञां लभते । इदमेवान्तःकरणमान्तरकरणमस्ति अर्थात् शरीराभ्यन्तरीयाणां कामसंकल्पादिव्यापारोत्पादने साधारणकारणं भवति ।

यतो मनः रूपादिविषयस्य ग्रहणे उपयोगित्वम् अङ्गीकृतमस्ति । विषयान्तरे यदा चित्तमासक्तं भवति, तदा विषयसन्निहितत्वादपि चित्तं विषयं नैव गृह्णाति, इत्यस्य मन उभयात्मकमिन्द्रियं स्वीकृतमस्ति ।[1]

जैनदर्शने पदार्थः सामान्यविशेषात्मकः स्वीकृतो वर्तते । तस्य अनन्ताः गुणाः स्वीकृताः भवन्ति । अनेकान्तवादेनैव पदार्थस्यानेकरूपाणां वर्णनमस्ति । अतः एवम्प्रकारकं ज्ञानं निश्चयात्मकज्ञानत्वेन गीयते । अनेकान्तसिद्धान्तानुसारं सर्वेषां पदार्थानां ज्ञानस्यानेकात्मकत्वात् संशयज्ञानमात्मैव ज्ञातुं शक्नोति, संशयज्ञानस्य नैव प्रमात्वेन यथार्थज्ञानत्वेन वा वक्तुं शक्यते ।

जैना विभिन्नवृत्तीनां पश्चात् एकस्याऽऽत्मनः शाश्वतचेतनस्य स्वीकार एतदर्थमावश्यको वर्तते, यतो हि तदैव विभिन्नचित्तवृत्तिद्वारा उत्पन्नज्ञानानां मूले तस्य समन्वयात्मकः कश्चन एकः शाश्वतोपदार्थोऽवश्यं भवेत् । जैनदर्शने आत्मा संकोचविकासशाली चापि वर्तते, किन्तु यः पदार्थः संकोचविकासशाली भवति, तस्य परिणामित्वेनैव स्वीकार आवश्यकः, न तु शाश्वतोऽपि । अतः शाश्वता परिणामिचितिः सत्ताया सांख्ययोगवेदान्तेषु च स्वीकृता वर्तते, अधिकतया युक्तिसंगता प्रतीयते ।

अन्तःकरणस्यावश्यकता :-

जैना भौतिकपदार्थमङ्गीकर्तारः वेदान्तदर्शनेऽपि मनसोऽन्तःकरण

---

1. प्रभाचन्द्राचार्यकृत प्रमेयकमलमार्तण्ड - पृ0 229-230.

स्वीकुर्वन्ति । "अन्नमयम् वै मनः" इत्युक्तिः एतदेव तथ्यं पुष्यति । अर्थात् मनोऽन्नस्य विकारभूतमस्ति । अस्माकमाहारस्याणुभागोऽस्ति, यत् मादकद्रव्य-सेवने मनोदशा परिवर्तते । वेदान्तानुसारमिदं कथनं श्रुतिप्रमाणद्वारा पुष्यति । यथा -

"अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो
स्तत्पुरीषं भवति । यो मध्यमस्तन्मांसम् ।
योऽणिष्ठः तन्मनः । ---- अन्नमय
हि सौम्यमनः ।"

पूर्वोक्तं कथनं न केवलमुपनिषत्प्रमाणेनैव सिध्यति, अपितु संसारस्य सर्वे जनाः अनुभवेनैव एतत्तथ्यं पोषयन्ति । अतोऽन्नमयतायाः तात्पर्यं केवलमिदमेव अस्ति यदन्नस्य सूक्ष्मांशः मनः पोषयति, न च अन्नं मन उत्पादयति ।

आध्यात्मिकसाधनायां अतो वैशिष्ट्यार्थमाहारशुद्धेः कारणता कथिता अस्ति -

"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ।[2]
स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥"

अतः शुद्धौ सत्त्वे एव मानवजीवनस्य परमलक्ष्यस्य अर्थात् आत्मनः साक्षात्कारस्य स्मृतिः निरन्तरं जागरूका तिष्ठति एतेन च दुःखस्या-त्यन्तिक नाशः परमानन्दप्राप्तिरूपो मोक्षश्च सिध्यति ।

---

1. छान्दोग्योपनिषद् - 9/5/1.
2. " - 7/2/6/1.

प्राग्विवेचनस्य पश्चाद् मनोविषयकसमीक्षायाः पश्चाच्चेदानीं मनसो निष्कृष्टस्वरूपस्य संक्षिप्तवर्णनमप्रासंगिकं न भविष्यति । मनोविषये तुलनात्मकपरीक्षाकरणेन वेदान्तसम्मत मनोविषयकमान्यता प्रमाणेन पुष्टा, युक्तिसंगता अनुभवानुकूला च सिध्यति । मनसो व्यावहारिकसत्तैव स्वीकृता वर्तते यतो हि समग्रप्रपञ्चस्यैव व्यावहारिकसत्ता वेदान्तमतेऽङ्गीकृता भवति समग्रप्रपञ्चश्च चिताध्यस्तो वर्तते, इति दृष्ट्या घटपटादिरिव मनोऽपि चिति अध्यस्तमारोपितं कल्पितञ्च भवति । विज्ञानवादिनो बौद्धा अपि सांवृतिकसत्यं पारमार्थिकसत्यञ्चेति भेदद्वयं स्वीकुर्वन्ति । तन्मतेऽपि केवलं विज्ञानमेव पारमार्थिकं सत्यं भवति । यथा समुद्रस्य तरंगैः क्वचन भेदो न भवति तथैव विज्ञानस्यापि चित्या क्वचन परिणामो न भवति । चित्ता कर्मणां चयनं भवति, मनसा तस्य विचयनं भवति विज्ञानेन च दृश्यस्य ज्ञानं भवति । वस्तुतो-यं सर्वोऽपि भेदः कल्पितो भवति । केवलमज्ञानिनां बोधनायमिदालयविज्ञानस्य सागरेण सहोपमितो वर्तते ।

"चित्तेन चीयते कर्ममनसा च विचीयते ।
विज्ञानेन विजानाति दृश्यं कल्पेति पंचभिः ।।
- - - - - - - - - - - - - - - -
बालानां बुद्धिविकल्पादालयं बुद्बुदिर्यथा ।
तरंगवृत्तिसाधर्म्यं दृष्टान्तो नोपनीयते ।।"

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. लंकावतार-सूत्र - पृ० 21.

विज्ञानवादे केवलमालयविज्ञानस्यैव सत्ता स्वीकृता वर्त्ते वर्तते, एतद्विज्ञानमपि च क्षणे क्षणे परिवर्तनशीलं भवति । हीनयानवादिभिः स्कन्धधातु आयतनादि-पदार्थाः कल्पितरूपेणाङ्गीकृताः सन्ति । वेदान्तशास्त्रमारोपापवादाभ्यां निष्प्रपञ्चब्रह्मतत्त्वस्य विस्तारेण व्याख्यां करोति, किन्तु विज्ञानवादः समा-रोपापवादावपि न स्वीकरोति । लंकावतारसूत्रे कथितमस्ति -

"समारोपापवादो हि चित्तमात्रेन विद्यते ।
समारोपापवादेषु ते चरन्त्यविपश्चितः ॥"

अन्यत्रास्मिन्नेव ग्रन्थे पुद्गलादयः केवलं चित्तमात्रस्य विकल्परूपेण कथिताः सन्ति, यथा -

"पुद्गलः संततिस्कन्धाः प्रत्यया अणवस्तथा ।
प्रधानमीश्वरः कर्ता चित्तमात्रं विकल्पते[1] ॥"

अद्वैतवेदान्ते मन एव प्रपञ्चकल्पनायाः कल्पकरूपेण बोधितं वर्तते । बन्धमोक्षयोः कारणमपि मन एव भवति । मुक्तिकोपनिषदि मनसो भ्युदयस्य नाशः कथितो वर्तते, मनोनाश एव च "महोदय" इति कथ्यते ।

"मनसोऽभ्युदयोनाशो, मनोनाशो महोदयः[2] ।"

"मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इत्युक्त्या मनसो महत्त्वं विशेषरूपेणादधाति । अनया दृष्ट्या विज्ञानवादवेदान्तयोरत्यन्तं सादृश्यं परि-ज्ञायते । एतस्मादेव कारणात् कतिपयवैष्णवाचार्याः शंकरस्य मायावादं बौद्ध-

---

1. लंकावतारसूत्र - पृ० 34.

2. मुक्तिकोपनिषद - श्लो० 31.

दर्शनादयश्चाभिलाङ्गीकृतवन्तः मायावादञ्च "असच्छास्त्रम्" इत्युक्त्वा वेदा-न्तिनमपि "प्रच्छन्नबौद्ध" इति पदवीं प्रदत्तवन्तः, किन्तु तदीयमिदं कथनं नौचित्यं भजते । वेदान्तदर्शनं मायावादमात्मानं स्वीकरोति ब्रह्मसत्तां मायाञ्च सदसद्भ्यामनिर्वचनीयां प्रतिपादयति किन्तु विज्ञानवादे तथा न भवति ।

आधुनिकविज्ञानं सम्पूर्णजगतो मूले एकां शक्तिं [एनर्जी] कल्पयति। तत्र मैटरपदार्थः [भौतिकपदार्थः] एतस्या एव शक्तेः स्वरूपं परिणामो वा स्वीक्रियते । "कन्जर्वेशन आफ एनर्जी" अर्थात् शक्तेः शाश्वततायाः नश्वरताया-श्चेदानीमप्याकलनं प्रारब्धमस्ति । प्रसिद्धभौतिकविज्ञानवेत्ता डा०सरआर्थर एडिंगटनमहोदयः स्वविरचिते "दी नेचर आफ दी फिजिकल वर्ल्ड" इति नामके ग्रन्थे एतत्सम्बन्धि विचारं सूक्ष्मतया समारोपितमस्त्यतः, प्रमाणञ्चाङ्गीकृत-वानस्ति । स च मैटरविषये रदरफोर्डमहोदयस्य सम्मतिमप्युल्लिखितवान् । सः व्यावहारिकमैटेरियलस्य शक्तिपुंजस्य प्रतिक्रियया उत्पन्नमैटेरियलस्य च वर्णनमपि कृतवान्। एतत्सम्बन्धे तन्मूले च एकस्याः शक्तेः कल्पना अद्वैतवादस्यात्यन्तं समीपं गत-वती, तथा एतत्सिद्धान्तमपि वेदान्तस्यैतत्सिद्धान्तस्यैव पोषकं भवति, यत् विश्वस्य मूले एकस्याः निर्विशेषचित्तशक्तेः सत्तां स्वीकरोति । एतेनापि वेदान्तद्वारा प्रतिपादितसिद्धान्तस्य प्रामाणिकता वैज्ञानिकता च स्पष्टं प्रतीता भवति । अत एव एतस्मिन् शोधप्रबन्धे मनस्तत्त्वस्य वैज्ञानिकीं व्याख्यां विधाय वेदान्तदर्शनस्यैव मतं प्रामाणिकं वैज्ञानिकञ्च सिद्धान्तत्वेन दर्शितमस्ति । यतो हि वेदान्तदर्शनस्य सिद्धान्तो न केवलं श्रुतेरनुभवस्य वा निकषायां निकषायमाणं भवति अपि तु आधुनिकयुगस्य भौतिकविज्ञानमपि [फिजिक्स] एतदेव पोषयति । स्वामि-

परा: रंगनाथानन्दमहोदया: स्वविरचिते "दी मैसीज् आफ दी उपनिषद्" तथा "वेदान्त एण्ड माडर्न साईंस" इत्यभिधानके च ग्रन्थे एतद्विषयमधिकृत्य सम्यक् प्रकाशं प्रकाशितवन्तः उक्तवन्तश्च यत् विभिन्नजीवचेतनायाः मूले एका तथाभूता विश्वचेतना विराजमाना वर्तते या अनन्ता द्वैतरहिता च वर्तते । इयमेव चेतना मानवस्य तत्त्वभूत आत्मा अस्ति विश्वसंरचना यस्य मौलिकसत्तारूपेण वर्तते । तेषां कथनमस्ति यत् आधुनिकभौतिकविज्ञानमपि अद्वैतवेदान्तस्यैव मतं परि-पोषयदस्ति,।

पाश्चात्त्यतत्त्वचिन्तनेऽपि स्पिनोजामहोदयो भेदाद्वैतवादे बलं दत्तवान् । स एकस्यैव मूलतत्त्वस्य शरीरात्मानौ द्वौ पक्षौ अङ्गीकरोति । अनया दृष्ट्या इदं मूलतत्त्वं वेदान्तप्रतिपादितात्मानं संकेतयति ।

<u>मनस आत्मना, शरीरेण जगता च सह सम्बन्धनिरूपणम्</u>

<u>न्यायवैशेषिकदर्शनम्</u> - न्यायवैशेषिकदर्शने शरीरं भोगायतनपदेन कथितमस्ति, अर्थात् सुखदुःखादेः भोगस्याश्रयः शरीरमेव भवति ।

मनस्तु शरीरात्सर्वथा भिन्नं बाह्येन्द्रियाच्च भिन्नं शरीराभ्यन्तरीयमिन्द्रिय-मस्ति । यथा अन्यानीन्द्रियाणि प्रत्यक्षादिज्ञानोत्पादने करणस्य [इन्स्ट्रुमेण्ट] कार्यं कुर्वन्ति तथैव मनोऽपि करणमस्ति । बाह्यविषयाणामिन्द्रियेण सह सम्बन्धे जाते तत्तदिन्द्रियेण सह मनसः संयोगो जायते, पुनश्चात्मनि विशेषगुणं ज्ञानं इन्द्रियसंयुक्तं मन उत्पादयति । इत्यन्येन्द्रियसंयुक्तं मनः आत्मना सह संयुक्तं सत् बाह्यजगदात्मनोः मध्ये संयोजकस्य कार्यं करोति ।

<u>सांख्ययोगदर्शनयोः</u> – सांख्ययोगदर्शने मनःकरणमर्थात् अन्तःकरणमेव स्वीकृत-
मस्ति, किन्तु तत्र आत्मा केवलं चितिशक्तिरूपमसंगश्चापि
स्वीक्रियते । कामसंकल्पादयो धर्मा अन्तःकरणस्यैव सन्ति, न तु आत्मनः ।
योगे सांख्ये चैतत्वेव मनः त्रिगुणात्मकमस्ति, यथा प्रपञ्चस्य सर्वेऽपि पदार्थाः
सांख्ययोगदर्शने त्रिगुणात्मकत्वेन स्वीकृताः सन्ति । मनस्तत्त्वस्य निरूपणे योग-
दर्शनं विशेषत्वेन महत्त्वशालि वर्तते । यतो हि योगस्य लक्षणमेव चित्तवृत्तेः
निरोधः प्रतिपादितोऽस्ति –

"योगश्चित्तवृत्तिनिरोधः"[1]

मूढक्षिप्तविक्षिप्तैकाग्रनिरोधभेदेन च योगदर्शने मनसः पञ्चावस्थाः कथिताः सन्ति।
शान्तावस्थानामाधारोऽपि सत्त्वरजस्तमसां गुणानां तारतम्यमेवास्ति ।
निरोधावस्थायां त्रयाणां गुणानां साम्यं परिणामोऽवतिष्ठते । अतः एषा
अवस्था भवतीति कथनमनुचितमेव प्रतिभाति, यतो हि अत्र गुणानां साम्यस्य
वैषम्यस्य वाभाव एव जायते, अतस्तस्यामवस्थायां नैव वक्तुं शक्या । मनसि बहूनां
वृत्तीनामुदयास्तादिकं जायते । एतासां वृत्तीनां निरोधस्यैव नाम योगोऽस्ति ।
अतः शरीरं भोगायतनमस्ति । अन्तश्चान्तःकरणं भूत्वा बाह्यक्रियाणां सुखदुःखा-
स्यन्तरक्रियायां च ज्ञानमुत्पादयति । आत्मनो संसर्गेऽपि अन्तःकरणेन सह
आत्मा अनादिविद्यायाः कारणं स्वकीयं मनुते । एतस्मात् कारणाच्च सः सुख-
दुःखादीनां भोक्ता भवति । एवं रीत्या दर्शनेषु अन्तःकरणस्य शरीरेणात्मना च
सम्बन्धो वर्तते ।

---

1. पातञ्जलयोगदर्शन – 1/1/2.

<u>पूर्वमीमांसा-उत्तरमीमांसादर्शनम्</u> - पूर्वमीमांसोत्तरमीमांसादर्शनयोश्च मनोऽन्तःकरणत्वेनैव स्वीकृतमस्ति, यस्य स्वरूपं पूर्वमेव वर्णितमस्ति । द्वयोः दर्शनयोः प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यप्रमाणद्वारा यज्ज्ञानं प्राप्यते, तदन्तःकरणं विनानैव सम्भाव्यते । वेदान्तदर्शने परोक्षापरोक्षोभयविधज्ञानार्थमन्तःकरणस्य (मनसः) आवश्यकता अपरिहार्या वर्तते । आचार्यवाचस्पतिमिश्रस्तु ब्रह्मसाक्षात्कारार्थं मनस एव करणत्वमङ्गीकरोति । यद्यपि विवरणकारः साक्षात्कारार्थं मनसः करणत्वं नाङ्गीकरोति, इति मनसः इन्द्रियत्ववर्णनप्रसङ्गे पूर्वमेव कथितमस्ति । वेदान्तदर्शने प्रत्यक्षस्य या प्रक्रिया वर्तते, तत्रान्तःकरणस्य वृत्तिरेवेन्द्रियद्वारेण निःसृत्य घटाद्याकारस्य विषयपर्यन्तं गच्छति विषयाज्ञानावरणञ्च विनाशयति । अतो मनसः करणतास्वयं सिद्धा भवति । मनश्शरीरे स्थितं तिष्ठति तथा सः मध्यमपरिमाणवत्त्वात् सुखदुःखादि असाधारणविषयाणां ज्ञानमभ्यन्तरे एव करोति। शरीरं विना मनसः स्थितिः नैव सम्भवति । इत्थञ्च मनश्शरीरयोः पारस्परिको घनिष्ठः सम्बन्धः सिध्यति ।

मनः स्वतः जडमात्मैव चितिशक्तिरस्ति प्रकाशकश्चापि भवति । अतो विषयाणां प्रकाशोऽन्तःकरणवृत्तौ प्रतिबिम्बितात्मनैव जायते । अयमेव वेदान्तस्य सिद्धान्तो वर्तते ।

उपनिषदि अपि मनश्शरीरयोः सम्बन्धः स्वीकृतो वर्तते । शरीरान्तर्गतसूक्ष्महितादिनाडीसंस्थानस्य वर्णनं कृतमस्ति, यत्र मनसो माध्यमेन चेतनाया आविर्भावो जायते । एतत्सूक्ष्मतमनाडी पुरीतति आदि नाडीनां सम्बन्ध आदि-

त्येन कथितोऽस्ति. बोधितमप्यस्ति यत्कथमेतासु नाडीषु विलीनं सत् स्वप्नावस्थातो विशुध्यसुषुप्ती गच्छति । बृहदारण्यकोपनिषदि एतासां सूक्ष्मनाडीनां वर्णनमित्थं कृतमस्ति -

"ता वा अस्यैता हितानाम्नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्नातिष्ठन्ति शुक्लस्य नीलस्य पिंगलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति ।"[1]

एकस्य केशस्य सहस्रतमभागेऽपि एतासां सूक्ष्मनाडीनां साहाय्येन मनः कार्यं करोति । एतासु एकानाडीमनुष्यस्य मस्तकोपरिगच्छति, या सुषुम्नापदवाच्या भवति । योगिनां प्राणो यदा एतदूर्ध्वं गत सुषुम्नाख्यनाड्या सूर्यरश्मीनां साहाय्येन शरीराद् बहिर्गच्छति, तदा जीवस्य देवयानमार्गेण गतिः कथिता भवति। अयं विषयो योगी नाअलौकिकशक्तिद्वारा अनुभवितुं शक्यते । मृत्योः पश्चात्य जीवस्य विभिन्नलोकेषु गमनस्य गतेः विज्ञानमस्ति । इत्थमेव निद्रावस्थायां शरीरोपरि यद्रूपादिनामनोजीवयोः पृथक्त्वस्यापि वर्णनकृतमस्ति । एतेन शरीरं शरीराभ्यन्तरीय नाडीसंस्थानस्य च महत्त्वं सूचितं भवति । पाश्चात्त्यमनोविज्ञानेऽपि नाडीसंस्थानद्वारा क्रियाकलापानां वर्णनं कृतमस्ति, किन्तु तत्तुनिषद्विवर्णितं शरीरविज्ञानादत्यन्तं स्थूलं भवति । जीवात्मनः सत्ता पृथग्रूपेणास्वीकृतत्वात् जीवस्य पुनर्जन्म, एकदेहाद् देहान्तरप्राप्तिस्तथा देवयानम्, पितृयानमार्गादिमहत्त्वपूर्णप्रश्नेषु पाश्चात्त्यमनोविज्ञानस्य ध्यानमिदानीं यावन्न गतम् ।

---

1. बृ0 30 - 4/3/20.

<u>जैनदर्शने बौद्धदर्शने च</u> - जैनदर्शने शरीरमिव मनसः स्थितिः स्वीकृता वर्तते । मनश्चोभयेन्द्रियमिति पूर्वमेव प्रतिपादितमस्ति । विषयज्ञानार्थञ्च वैशेषिकदर्शनमिव मनो नामककरणस्यापेक्षा वर्तते ।

बौद्धदर्शनस्य विज्ञानवादशाखायान्तु मन एव बुद्धिरेव वा एकमात्रं तत्त्वमस्ति । इदं विज्ञानमेव शरीराद् बहिर्निःसृत्य घटपटादिविषयाणामाकारं गृह्णाति । विज्ञानवादे शाश्वतभूतस्यात्मनः स्वीकृतिर्नास्ति । हीनयानसम्प्रदाये पञ्चस्कन्धादिसमूहः आत्मपदवाच्य आसीत् । विज्ञानवादे पंचस्कन्धादिः केवलं भ्रमात्मकमेव स्वीकृतं भवति, तस्य पारमार्थिकीसत्ता न स्वीकृता+ भवति । शून्यवादे तु केवलं शून्यमेव परमार्थसत्यमस्ति । अतः शून्यवादे शरीर, मनः इत्यादीनां सम्बन्धस्य प्रश्न एव नोदेति । व्यावहारिकदृष्ट्या शरीर-मनआदि-कल्पना तदीयसम्बन्धस्य च कल्पना भवति ।

<u>पाश्चात्यमनोविज्ञानम्</u> - पाश्चात्यमनोविज्ञाने मनसो विषये नानाप्रकारकाः विचाराः सन्ति । माइण्डमैटर इति द्वयोः पदार्थयोरङ्गीकृतिकारणात् मनसः कदाचित् साधक (चेतनाशक्ति) इत्यादीना-मपि बोधो जायते इत्यन्यत्रात्मशरीराणां पृथक् पृथक् स्पष्टं वर्णनं नोपलभ्यते इति पूर्वमेव संकेतितं वर्तते ।

यथा विज्ञानवादिनो बौद्धाः विज्ञानातिरिक्तस्यान्यस्य कस्यापि पदार्थस्य सत्तां न स्वीकुर्वन्ति, तथैव पश्चिमदेशेऽपि हीगलमहोदयस्तथा तन्मता-नुयायिनोऽपि मनसोऽतिरिक्तान्यबाह्यवस्तूनां सत्तां नैव स्वीकुर्वन्ति । आधुनिक-मनोविज्ञाने फ्रायडादि आचार्याः मनसो चेतन, चेतनाचेतननामकं स्तरत्रयं स्वी-

making one harmonious whole.[1]

स्पिनोजामहोदयः एकस्यैव मूलतत्त्वस्य मनःशरीरौ द्वौ पक्षौ स्वीकरोति ।

Mind and body are two aspects of one reality so that physiology and psychology are utterly fused.[2]

लिबिट्समते मानसिकक्रियाः एकनियमितसंघटनायाः परम्परायां गच्छति किन्तु मनःशरीरयोः पारस्परिकी क्रिया-प्रतिक्रिया चापिनैव जायते ।

There is no causal connection between mental and physical events.[3]

अयं सिद्धान्तः मनःशरीरयोः पारस्परिकं प्रभावितं सिद्धान्तं निरर्थकं कृतवान् । हर्बर्टस्पेन्सरमहोदयस्य सिद्धान्तः मनोवैज्ञानिकानां ध्यानं निजविषयाकृष्टवान् -

We may regard the mind, said spencer, as a series of events, as the Physical processes in the brain as a series of parallel events, but both of these arise from a deeper underlying reality.[4]

---

1. Historical Introduction to modern Psychology.
   - By Gardner Murphy, P. 5.

2. Do - P. 20.
3. Do - P. 21.
4. Do - P. 109.

एतेन कथनेन पुनः टिचनोवामहोदयस्याद्वैतात्त्वमुपलभ्यते ।

एततो विलियमजेम्समहोदय प्रस्तुतवान् यत् मनोविज्ञानस्य चेतना आत्मा निःसारणीयः, किन्तु अन्यतरं भिन्न-भिन्नानुभवान् सुसम्बद्धान् समन्वितांश्च कर्तुं मूले कस्या अपेक्षायाः शक्तेरावश्यकतां प्रतिपादितवान् । वाटसनमहोदयस्तु चेतनामन्तर्दृष्ट्या विश्लेषणद्वारा ज्ञातुं प्रयतितवान् ।

As an avowed materialist, wetsondecided to through over board the entise concept of mind or consciousness, and to make both animal and human Psychology the study of behaviour.[1]

वाटसनमहोदयः मनःशब्दार्थश्चेतना इति कथयति । अतएव तन्मते सर्वथा अस्वीकृतमस्ति । सः शारीरिकचेष्टानामध्ययनमेव मनोविज्ञानस्य विषयः इति स्वीकरोति । फ्रायड तथा युंगमहोदयोऽपि स्व-स्वमतान्यताः मनोविज्ञान एव रचितवान् । युंगमहोदयः बहिर्मुखी [एक्स्ट्रावर्ट] अन्तर्मुखी [इन्ट्रोवर्ट] इति द्विप्रकारकस्य मनुष्यस्य स्थापनां कृतवान् । बहिर्मुखव्यक्तिः सामाजिकसम्बन्ध-ग्रथितमाया सम्बन्धं वाञ्छति, यदा चान्तर्मुखव्यक्तिः स्वशरीरास्वन्तरीय कल्पनायाः जगति मग्ना भवति शारीरिकगतिविधिभिश्च शंकिता भवति[2] ।

वर्तमाने काले पाश्चात्त्यं मनोवैज्ञानिकाध्ययनं कामपि एवं -

---

1. Historical Introduction to Modern Psychology.
   - By G. Murphy, P. 260.

2. - Do - P. 335.

क्रियामधिकृत्य प्रवर्तितमस्ति अर्थात् मानसिकघटनेन शारीरिकघटनस्य अथवा शारीरिकघटनेन मानसिकघटनस्य प्रभावसम्बन्धः स्वमतो विवेच्यत इति द्वारा [illegible] । स अनेक प्रकारकरोगाणां दूरापसारणस्य प्रयत्न-मपि कुर्वन्नासीत्, तस्य च स्वीयेऽस्मिन् प्रयत्ने महती सफलता अपि जाता इति महतः प्रमोदस्य विषयः । शरीरस्य विद्युत्सिद्धान्तमधिकृत्यापि अध्ययनं प्रचलित। मुख्यत्वेन विचारणायां विविधानां सिद्धान्तानां तुलनया च व्यावहारिकोऽपि परिस्थितिसमाधानोऽपि नवीनतमीय प्रकृतौ च स्थानस्य सम्यक्निरूपणं जातम् । मर्फीमहोदयस्य निम्नलिखिताः शब्दाः एतस्मिन् प्रसङ्गे ध्यानयोग्याः:-

The main task, however, is that of a coherent theory as to 'the mind and its place in nature', and this remains about where it has remained for the last few hundred years. Most Psychologists appear to feel that the problem is inaccessible to science, or at least to the science of todgy.[1]

पाश्चात्त्यमनोविज्ञानस्य चिन्तने एतद्विषयस्य निराशायाः भावनायाः प्रधानं कारणं शरीरस्य आत्मनः तत्त्वस्य स्वीकृतिरथवा तस्य स्पष्टधारणाया अभावश्चापि भवति । भारतीयतत्त्वचिन्तने विशेषतो वेदान्त-दर्शने एकमूलभूततत्त्वस्यात्मनः स्थापना तर्कसम्मतचिन्तनद्वारा स्थापिता अभूत्. तथा मूले अद्वैततत्त्वस्य स्वीकृतिः, तत उत्पद्यमानस्य सम्पूर्णस्य व्याख्या

- - - - - - - - - - - - - - - - - - - - - - - - -

1. Historical Introduction to Modern Psychology.
- By G. Murphy, P. 388.

तत्स्वरूपेण युक्ता वर्तते । अतो भारतीयमनोविज्ञानेषु सुव्यवस्थितां समीचीनां च दिशां प्रदातुं शक्नुयात्, इति मदीयो विश्वासः ।

भारतीययोगिनां प्रक्रियामधिकृत्य तथा उपदेशकान् तत्त्व-चिन्तकांश्चाधिकृत्य पाश्चात्त्यसंसारोन्मुख इव भातीति समीचीनमेवं तथ्यं प्रतिभाति । वर्तमानकाले महर्षिरमणयोग्यरविन्दयोगानन्दयोगिषु च पाश्चात्त्या-नां ध्यानमनुगतमस्ति । प्राचीनकाले उपनिषदः ~~[illegible]~~ऋषयो यान् उपदेशान् कृत-वन्तो यत् "उत तमादेशमप्राक्ष्यः । येनाश्रुतं श्रुतं भवति, अमतं मतम्, अविज्ञातं विज्ञातम् इति ।[1]" अन्यो च "सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयम्" इत्युक्त्वा समग्रप्रपञ्चस्य मूले विराजमानस्य एकस्य सतो द्वितीयतत्त्वस्य निरसनं कृतवन्तः । तन्निरसनं स्थापनेन च सर्वेषां प्रश्नानां समाधानस्य निःसन्देहः एकमात्रोपायो वर्तते, इति विदुषां विचारो भवति ।

निःसन्दिग्धतया व्यवहारक्षेत्रे पाश्चात्त्यमनोविज्ञानस्यापि उपयोगिता वर्तते तदीयं तात्पर्यं गृहीतव्यम् । किन्तु मनोविज्ञानस्य स्थापनार्थं सुदृढतम आधारो भारतीयमनोविज्ञानस्य तत्त्वचिन्तनेनैव लब्धुं शक्यते ।

।। इति तृतीयोऽध्यायः ।।

:: :: ::
:: :: ::

---

1. उपनिषद्सूक्तः छान्दोग्योपनिषद् - 6/2.3.

सन्निकर्षेणोत्पद्यते । अतो वृत्तिविशिष्टं चैतन्यमनादिः सद् सादि एव भवति । ज्ञानावच्छेदकत्वकारणाच्चान्तःकरणस्य वृत्तावेव ज्ञानशब्दस्य गौणः प्रयोगो भवति ।

ननु चैतन्यमनादि, तत्कथं चक्षुरादीन्द्रियकरणकत्वेन प्रत्यक्षमिति ? उच्यते, चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिः इन्द्रियसन्निकर्षादिना जायते इति वृत्तिविशिष्टं चैतन्यमादिमदुच्यते । ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः । तदुक्तं विवरणे - "अन्तःकरणवृत्तौ ज्ञानत्वोपचारादिति[1] ।

अनेनोदाहरणेन स्पष्टमेव परिज्ञायते, यद् वेदान्तदर्शने व्यवहारेऽन्तःकरणात्मनः पृथक्पदार्थत्वेनाङ्गीकृतमस्ति, यद्यपि ज्ञानमात्मनः स्वरूपं भवति, तथापि अन्तःकरणवृत्तिरपि ज्ञानस्याभिव्यञ्जकत्वकारणात् ज्ञानशब्देन व्यवह्रियते । ज्ञानावच्छेदककथनस्य तात्पर्यमिदमस्ति यद् ज्ञानमेवाज्ञानस्य निवर्तकं भवति, वृत्त्युपारूढचैतन्यमेव च स्वविरोध्यज्ञानस्य निवर्तकं भवति । यथा सूर्यका-न्तमण्युपारूढोऽग्निः स्वविरोधिनं निवर्तयति, तथैवान्तःकरणवृत्तौ प्रतिबिम्बितं चैतन्यमेव [यस्य स्वरूपं ज्ञानमस्ति] स्वविरोध्यज्ञानस्य निवर्तकं भवति । इदमत्र वृत्तिविशिष्टचैतन्यमेव अज्ञानस्य विरोधितया परन्यासमासी । किन्तु शुद्धचैतन्यस्याज्ञानेन सह कश्चन विरोधो नास्ति ।

अथायं प्रश्नो भवितुमर्हति यद् यदा ज्ञानं [चितिः] आत्मन एव

---

1. धर्मराजाध्वरीन्द्र, वेदान्तपरिभाषा, कलकत्ता-संस्करण - पृ० 28-31.

स्वरूपमस्ति. आत्मा च वेदान्तमते एक एवास्ति. तदा वेदान्तमते कथं अर्थात् प्रमातृप्रमाणप्रमेयमित्यादि व्यावहारिको भेदः कथङ्कारं तिष्ठेत् ? एतस्य प्रश्नस्योत्तरं प्रदातुं सिद्धान्तबिन्दुनामके ग्रन्थे आचार्यमधुसूदनसरस्वतीमहोदयः प्रमातृप्रमाणप्रमेयादिव्यवहारमित्थं निरूपितवान्. अन्तःकरणस्य सावयवः पदार्थो भवति । अतोऽविद्यायाः कार्यमिदं यत् इदमन्तःकरणं देहाभ्यन्तरे घटादौ पूर्णरीत्या व्याप्तं तत् देहघटयोः मध्येऽपि चक्षुरिन्द्रियाऽविच्छिन्नं तिष्ठति । तत्र च देहावच्छिन्नान्तःकरणस्य भागोऽहङ्काराख्यः कर्तृपदवाच्यो भवति । देहघटादिविषयाणां मध्ये विद्यमानो दण्ड इव लम्बायमानोऽन्तःकरणस्य भागो वृत्तिज्ञानमित्युच्यते "क्रिया" इत्युच्यते । विषयं[घटादिं] व्याप्नुवन् अन्तःकरणस्य भागः, विषयं ज्ञानस्य कर्म बोधयति. तदभिव्यक्तियोग्यत्वं प्रमापदवाच्यं भवति । भागत्रयवदिदमन्तःकरणमित्यवधेयमस्ति । अतश्चैतन्यस्य तदभिव्यक्तिर्भवति । उक्ताभिव्यक्तचैतन्यं यद्यपि एकं भवति तथापि अभिव्यञ्जकान्तःकरणस्य भागभेदेन त्रिप्रकारकमुच्यते । कर्तृभागावच्छिन्नचिदंशः "प्रमाता" इति कथ्यते । क्रियाभागावच्छिन्नचिदंशः प्रमाणपदेनोच्यते । विषयगताभिव्यक्तियोग्यत्वस्यान्तःकरणभागावच्छिन्नचिदंशः "प्रमितिः" पदवाच्यो भवति । "प्रमेय"न्तु विषयगतमज्ञातं ब्रह्मचैतन्यमेव भवति तदेव च ज्ञातं सत् प्रमाणस्य फलं भवति ।

स च सावयवत्वात् परिणममानो देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्येऽपि चक्षुरादिनाविच्छिन्नो व्यवतिष्ठते । तत्र देहावच्छिन्नान्तःकरणभागोऽहंकाराख्यः कर्तेत्युच्यते । देहविषयमध्यवर्ती दण्डायमानस्तद्भागो वृत्तिज्ञानाख्यः क्रियेत्युच्यते । विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्व-

तस्मादभिव्यक्तिविषयीभूतत्वमित्युच्यते । तस्य च मिथ्याभूतस्यान्तःकरणस्यातिस्वच्छत्वात् चैतन्यं तत्राभिव्यज्यते । तस्य चाभिव्यक्तस्य चैतन्यस्यैकत्वेऽपि अभिव्यञ्जकान्तःकरणभेदात् त्रिधा व्यपदेशो भवति । कर्तृभागावच्छिन्नचिदंशः प्रमाता । क्रियाभागावच्छिन्नचिदंशः प्रमाणम् । विषयगताभिव्यक्तियोग्यत्व-भागावच्छिन्नचिदंशः प्रमितिः । प्रमेयं तु विषयगतं ब्रह्मचैतन्यमेवाज्ञातम् । तदेव तु ज्ञातं फलम्[1] ।

इत्थमेकस्यैवात्मनः सत्त्वेऽपि प्रमातृप्रमाणप्रमेयादीनां स्थापना युक्तियुक्ता प्रतीयते ।

शांकरवेदान्ते शरीरस्थितो सम्पूर्णे शरीरे व्यापकसत्त्वप्रधान-सत्त्वकारणात् सूक्ष्मभूतरचितोऽन्तःकरणात्मकः पदार्थः, अविद्या विवर्तः, दर्पणादिरिव स्वच्छो भवति । इदमन्तःकरणं नेत्रादिद्वारा निःसृत्य घटादि-विषयान् व्याप्नोति, द्रवीभूतं ताम्रमिव च तत्तद्घटादिविषयाकारेण परिणमते। सूर्यस्य प्रकाश इवान्तःकरणे दीपप्रभेव संकोचविकासावुपपद्येते[2] ।

प्रत्यक्षज्ञानस्य प्रक्रियायाम् अन्तःकरणस्य वृत्तिः कार्यं करोति, एतस्य वर्णनं पञ्चमाध्याये करिष्यते । अन्तःकरणात्मका विद्यायाः स्थितौ यद्यपि शरीराभ्यन्तरे एव तिष्ठति सत्त्वगुणस्य प्रधानतया च सूक्ष्मपञ्चभूतैः निर्मितो भवति, तथापि अत्यन्तं स्वच्छमिदमन्तःकरणं नेत्रादिद्वारा बहिर्निःसृत्य-

---

1. मधुसूदनसरस्वती, सिद्धान्तबिन्दुः, अच्युतग्रन्थमाला कार्यालय, काशी - पृ० 95-98.

2. तदेव - पृ० 95.

योग्यान् घटपटादिविषयान् व्याप्नोति, तत्तद्विषयाकारेण च परिणमते । इत्थमन्तःकरणं स्ववृत्तिरूपेण देहविषययोर्मध्ये चक्षुरादिभिः बहिर्गतः सन् तिष्ठति । देहाभ्यन्तरीयोऽन्तःकरणस्य भागः "अहंकार" नाम्ना अभिधीयते एतस्यैव च नाम कर्ता इति भवति । देहविषययोर्मध्यवर्ति दीर्घायमानोऽन्तःकरणस्य भागो वृत्तिज्ञानमित्युच्यते, एतदेव च "क्रिया" इत्युच्यते । सिद्धान्तबिन्दु-नामके ग्रन्थे आचार्यो मधुसूदनः इत्थमेव वर्णितवान्।

वेदान्तमतेऽन्तःकरणं निरवयवपदार्थो नास्ति, अपितु सादि-द्रव्यत्वात् सावयवपदार्थो भवति । वृत्तिरूपं ज्ञानं मनसो धर्मो भवति । अत एव श्रुतौ प्रतिपादितमस्ति यत् -

"कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा-धृतिरधृति-
र्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव ।"[1]

अत्र धी-शब्देन वृत्तिरूपं ज्ञानमभिहितमस्ति, अत एव कामादयोऽपि मनस एव धर्माः भवन्ति । कामादीनामन्तःकरणधर्मत्वेऽङ्गीक्रियमाणे "अहमिच्छामि; अहं जानामि" इत्याद्यनुभवस्तु आत्मन एव धर्माः प्रतीयन्ते । अतः एतेऽन्तःकरणस्य कथं धर्माः स्युः ? एतस्योत्तरमिदमस्ति यत् यथा लौहपिण्डे स्वयं दाहकत्वशक्तिर्नास्ति, किन्तु यदा सः दाहकमग्निमाप्नोति, तदा अग्निना-सह तादात्म्याध्यासेन "लौहपिण्डं दहति" इति व्यवहरति । इत्थमेव सुखा-द्याकारे परिणतेनान्तःकरणेन सह चितैक्याध्यासेन वा "अहं सुखी अहं दुःखी" इत्यादयो व्यवहाराः भवन्ति ।

---

1. वेदान्तपरिभाषा - पृ0 35-38.

एतत्पूर्वमपि प्रतिपादितमस्ति, यद् परिभाषाकारो मनः इन्द्रियं नाङ्गीकरोति. यदा आचार्यवाचस्पतिमिश्रो मनस इन्द्रियत्वमङ्गीकरोति ।

साङ्ख्ययोगयोर्वेदान्ते च संकल्पविकल्पात्मकान्तःकरणं "मनः" इत्युच्यते । निश्चयात्मकान्तःकरणस्य नाम बुद्धिरस्ति, अहम्वृत्तिविशिष्टान्तः-करणस्य नाम "अहंकारः" भवति । चैतन्यानुभावकस्यान्तःकरणस्य नाम "चित्तम्" इत्यस्ति ।

सांख्ययोगदर्शनेऽपि "अध्यवसायो बुद्धि"रित्युक्त्वा अध्यवसाया-त्मकान्तःकरणं बुद्धिपदवाच्यं भवति । "अभिमानोऽहंकारः" इत्युक्त्वा "अतोऽह-मस्मि" इत्यभिमानोऽहंकारपदवाच्यो भवति ।

योगदर्शने तु स्पष्टमेव प्रतिपादितमस्ति, यद् यद्यपि चित्तमेक-मस्ति, तथापि सत्त्वरजस्तमोभिस्त्रिभिः गुणैः निर्मितत्व कारणात्, तेषां गुणानां पारस्परिकविमर्दवैचित्र्यकारणाच्चेदं चित्तं विविधपरिणामान् प्राप्नोति, इत्यनयैकस्यैव चित्तस्य मूढक्षिप्तविक्षिप्ताद्यनेका अवस्थाः जायन्ते । योगदर्शनानु-सारं चित्ते प्रख्याशीलत्व कारणात् सत्त्वगुणस्य सत्ता सिध्यति । इत्थञ्च रजोगुणतमोगुणयोरपि सत्ता प्रवृत्तिशीलतया स्थितिशीलतया च सिध्यति ।

मनसः प्रत्यक्षतायाः विषये पूर्वमेव प्रतिपादितमस्ति, यद् न्याय-वैशेषिकमते मनोऽनुमानगम्यमस्ति । "मम मनः" इत्याद्यनुभवे च यन्मनः प्रत्यक्षं तथा ज्ञायते, तदपि विभुत्वेन ज्ञातव्यम् । वेदान्तदर्शनं न्यायवत्स्वमनसो लौकिकं प्रत्यक्षं नाङ्गीकरोति

"बुद्धिर्मनीषा धिषणाधीः प्रज्ञाशेमुषीमतिः ।
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्ति चेतनाः ॥
धीर्धारणावती मेधा, संकल्पः कर्ममानसम् ।
अवधानं समाधानं प्रणिधानन्तथैव च ॥"[1]

एतेषां नाम्नां विशिष्टानां वर्णनं शोधप्रबन्धस्य पञ्चमेऽध्याये करिष्यते चतुर्वेदाधारेण यत्र प्रकाशो भविष्यति ।

उपनिषत्स्वपि अन्तःकरणं क्वापि प्राणः, क्व च मनः, अन्यत्र हृदयं एकत्र संकल्पादिनाम्नापि वर्णनमस्ति । एकस्यैवान्तःकरणस्य भिन्न-भिन्नवृत्तीनां प्रकार्यभेदस्य कारणात् विभिन्नानि नामानि दत्तानि सन्ति । वेदान्तसांख्ययोगेषु एतद्विविभिन्नप्रकारवृत्तीनां मनोबुद्धिचित्ताहंकाराणामन्तः-करणान्तर्गतत्वमेव मन्तव्यम् । अस्यैव शोधप्रबन्धस्य पञ्चमाध्याये मनसः सर्वासां प्रकार्याण्यधिकृत्य [फंक्शन्स] वर्णने अत्र विशेषविचारो भविष्यति ।

॥ इति चतुर्थोऽध्यायः ॥



---

1. अमरकोशः [धीवर्ग] - श्लो० 1-2.

परं वस्तुजातं शक्नुयात् ।

एवम्भूताः घटना अपि तथ्यपूर्णाः जाताः सन्ति, यत् मनः यदा कदाचित् भविष्यत्कालिकघटनायाः संकेतमपि कारयति । परीक्षाऽवसरे यदा-कदाचित् परीक्षार्थी तथा स्वप्नमवलोकयति, यदागच्छन्तं परीक्षाप्रश्नानपि यदा-कदाचित् आभासो जायते । यद्यपि साधारणतया इत्थम्भूतानि स्वप्नानि अधिकतया मिथ्याभूतान्येव सिध्यन्ति, तथापि यदा-कदाचित् कतिपयघटनानामा-श्चर्यजनकस्यैव पूर्वाभासः स्वप्नेऽपि जायते । मनो द्वारा आगामिन्यः घटनाः यदा-कदाचित् प्रत्यक्षीकृताः भवन्ति । तासु च घटनासु जातासु तासां सम्पुष्टि-रपि भवति । योगशास्त्रे एवम्भूतस्य मनसः क्षमतायाः नाम 'प्रातिभज्ञानम्' इत्यु-क्तमस्ति ।

## 2. मनसो वैशिष्ट्य च सीमा

शरीरस्य सान्निध्येऽपि मनः [अन्तःकरणं] देशस्य सीमासुसंब-द्धमेव । शरीरस्य स्थूलचेतनायां मनसः इयं शक्तिः कुंठिता भवति । किन्तु स्वप्नावस्थायां यदा च प्राणी स्थूलशरीरस्य चेतनया मुक्तो भवति, तद् कस्मिं-श्चित् अनुभवातीतदेशे कदा-कदाचिद् भविष्यत्कालेऽपि आगच्छन्तीं स्थितिमपि भ्रमणं करोति ।

शुक्लयजुर्वेदस्य चतुस्त्रिंशत्तमाध्यायस्य षट्सु मन्त्रेषु मनसः क्षमतायाः विषये च उल्लेखः समुपलभ्यते, तस्योद्धरणदानमत्राप्रासंगिकं न भविष्यति । एतेषां षण्णां मन्त्राणां देवता मन एवास्ति । एतेषु मन्त्रेषु मनोविषये यत् सम्यग् वर्णनं

कृतमस्ति, तदन्तर्गतं समग्रं मनोविज्ञानं परामनोविज्ञानमपि अन्तर्भुक्तमिव भवति । अत्रोक्तमस्ति यत् जाग्रत्पुरुषस्य मनः चक्षुरादीन्द्रियापेक्षयादूरं गच्छति । यन्मनः "दैवम्" अस्ति, अर्थात् यो विज्ञानात्मा वर्तते, तदपि मनोगृह्णाति, अत एव श्रुतौ प्रतिपादितमस्ति –

"मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्"

अर्थात् यः शाश्वतः, स्थिरः, समस्तप्रमाणैः परोविज्ञानात्मा वर्तते, सः मनसैवानुद्रष्टव्यो भवति । मनः शयानस्य पुरुषस्य शरीरात्कथं गच्छति, तथैव परावर्ततेऽपि अर्थात् सुषुप्त्यवस्थायां यन्मनः स्वकारणे विलीयते, तत्पुनः स्वप्नावस्थायां परावर्तते ।

मनः "दूरं गमम्" इति कथ्यते । अर्थात् मनोऽतीतानागतवर्तमान-व्यवहितविप्रकृष्टानपि पदार्थान् गृह्णाति । एतस्मिन् मन्त्रे मनः "ज्योतिषां ज्योतिः" इत्युप्युच्यते । एतस्य मन्त्रस्य भाष्यं भाषयन् आचार्यो महीधरः कथयति यत् मनः ज्योतिषामपि ज्योतिर्वर्तते । अर्थात् यानि श्रोत्रचक्षुरादीनि इन्द्रियाणि प्रकाशकानि भवन्ति, तेषामपि प्रकाशकेन्द्रियाणामेकमात्रं ज्योतिः "प्रकाशकम्, प्रवर्तकं" वा मन एव भवति । मनसः सम्बन्धं विनाऽइन्द्रियाणां स्वविषयान्प्रतिप्रवृत्तिरेव न स्यात् । एवम्भूतस्य शक्तिमतो मनसः शिवसंकल्पस्योपासना विहिता वर्तते ।

द्वितीयस्मिन् मन्त्रे कथितमस्ति यत् मनीषिणो मेधाविनो वा यज्ञे [देवपूजासंगतिकरणदानादिकार्येषु] मनसैव सर्वं कार्यं करोति । धीराः एतेना पूर्वेण मनसा कर्माणि प्रवर्तन्ते। मनः अत एवा पूर्वम् इत्युच्यते यतोहि इन्द्रियाणां

सृष्टेः पूर्वं मनतः सृष्टिर्भवति । यन्मनः प्रजानां शरीरे तिष्ठति, यतो हि मनो बाह्येन्द्रियैः भिन्नमन्तरिन्द्रियमन्तःशरीरे तिष्ठति, यतो हि बाह्येन्द्रियैः भिन्नमन्तरिन्द्रियमन्तःकरणं वा भवति ।

तृतीयस्मिन् मन्त्रे मनः विशेषज्ञानजनकत्वेणोक्तमस्ति । मन एव चेतो भवति अर्थात् धैर्यत्वं जायते । यतो हि मनस्येव धैर्यत्वावृत्तिरुत्पद्यते । अतः कार्यकारणयोरभेददृष्ट्या मनः "धृतिः" रूपेण कथितं भवति । प्रजासु इदं मन एवामृतमस्ति अर्थात् अमरणधर्मत्वेण वर्तते । अर्थात् आत्मरूपे परिणमते । मनो विना प्राणी किमपि कर्मेव कर्तुं शक्नुयात् । सर्वे प्राणिनः सर्वेषु कर्मसु मनः पूर्वकमेव प्रवर्तन्ते । यदि मनः स्वस्थं न भेव भवेत्तदा कस्या अपि क्रियायाः सम्यक् स्थितिः नैव भवितुमर्हति ।

चतुर्थमन्त्रे प्रतिपादितमस्ति यत् येन मनसा भूत-भविष्यद्-वर्तमान-कालसम्बद्धवस्तूनि प्रतिमानवः प्रवति, तन्मनः मुक्तिपर्यन्तं तिष्ठति । अत एवैत-दपि "अनश्वर"पदवाच्यं भवति ।

पञ्चममन्त्रे प्रतिपादितमस्ति यत् समग्रर्यः सामस्त्राः यजुर्मन्त्राश्च मनस्येव प्रतिष्ठिताः सन्ति । स्वस्थे स्वच्छे च मनसि समग्रज्ञानस्य भण्डागार-वेदत्रयस्य स्फूर्तिर्जायते । अर्थात् मनतः स्वस्थे सत्येव वेदानामुच्चारणशक्तिः पुरुषं प्राप्नोति । ऋषीणां च वेदमन्त्राः प्रतिभान्ति । यथा रथचक्रस्य नाभिः आरे प्रतिष्ठितो भवति, तथैव समग्रशब्दजालं मनस्येव प्रतिष्ठितं भवति । प्रजानां "सर्वचित्तम्" अर्थात् सर्वपदार्थविषयकज्ञानम् एतस्मिन्नेव मनसि ओतप्रोतत्वेण तथैव निहितं भवति, यथा पटे तन्तुतन्ततिरोतप्रोतत्वे विराजमाना भवति । मनतः

स्वस्थे सत्त्वे एव ज्ञानमुत्पद्यते, मनसो व्यग्रतायां विक्षेपे च ज्ञानाभावो जायते ।

षष्ठे मन्त्रे प्रतिपादितमस्ति यद् यथा सुसारथिः अश्वान् प्रग्रहद्वारा यथमानीय विभिन्नेषु पथिषु नयति तथैव मनोरूपप्रग्रहद्वारा मनुष्यस्येन्द्रियरूपानश्वान् तैयम्यधिविधेषु मार्गेषु नयति । मनः "हृत्प्रतिष्ठम्" अर्थात् हृदये प्रतिष्ठितं स्थितं वा कथितमस्ति, यतोहि मनस उपलब्धिः हृदये एव जायते। मनोऽजिरमस्ति, अर्थाज्जरारहितमित्यर्थः, यतोहि बाल्ययुववृद्धेषु स्वसमानायामेवावस्थायां तिष्ठति । मनः "जविष्ठम्" अर्थात् सर्वापेक्षया वेगवत् कथितमस्ति ।

एतेषां सर्वेषां मन्त्राणामन्ते मनसे शिवसंकल्पविशिष्टमिति प्रार्थना-कृता वर्तते[1] । शुद्धस्य मनसः संकल्पः अमोघो भवति, एतस्यानुभवः योगसाधकाः अकुर्वन् कुर्वन्ति च ।

3. <u>मनसः कल्पनाशक्तिः</u>

मनसः एका अद्भुतक्षमता तदीया कल्पनाशक्तिः सर्जनशक्तिर्वर्तते । एतस्मिन् विश्वस्मिन् यस्मिन् वस्तुनि मानवो पूर्णतां पश्यति, मानवः कल्पनाशक्तिद्वारा अपूर्णतायां पूर्णतायाः स्वरूपं प्रयच्छति । समग्रमपि साहित्यं मनसः कल्पनाशक्तेः परिणतिमात्रं भवति । आचार्यमम्मटेन काव्यप्रकाशस्य प्रारम्भे कविवाण्याः या स्तुतिः कृता वर्तते, तस्याः प्रेरिका शक्तिर्मन एवास्ति । मनः स्वकल्पनाशक्ति (भावना)द्वारा नियतिकृतनियमरहिताम्, अनन्यपरतन्त्रां तां वाणीं सर्जति, या ह्लादैकमयीआनन्दमयी च वर्तते, यां श्रुत्वा सहृदयहृदयः

---

1. शुक्लयजुर्वेद - 34/1-6 उव्वट तथा महीधरभाष्य.

सहृदयः परनिर्वृत्तिं तत्क्षणमेव परमानन्दम् प्राप्नोति । कविवाण्याः एतस्याः सृष्टेः मूले मनसः कल्पनाशक्तिरेव कार्यशीला भवति ।

4. <u>मनसः संकल्पशक्तिः</u>

साधनसम्पन्नमुत्कृष्टं मनः सत्त्वसंकल्पशक्तिद्वारा संसारस्य समग्रकार्यकलापान् सर्जति । तत्त्वदर्शिनां सतां मनसः सत्संकल्पः यत्रैकतो विश्वस्मिन् आनन्दं मङ्गलञ्च सर्जति, तत्रैवान्यतो रजस्तमोगुणाभ्यामभिभूतं मनः विश्वस्मिन् सर्वप्रकारकाणि दुःखानि अमङ्गलानि चोत्पादयति । व्यक्तिगतौ जातिगतौ वा रागद्वेषौ ताभ्यां प्रेरितः क्रियात्मकसंघर्षः पुनश्च मनसः संकल्पशक्तेरेव परिणामरूपं भवति । शुद्धं मनः अर्थात् सत्त्वप्रधानं मनः दैवीं सम्पत्तिं प्रेरयति, राजसतामसञ्च मनः आसुरसम्पत्तेरधिष्ठानं भवति, तेन च संसारे दुःखशोकमोहलोभादिकमुत्पद्यते ।

5. <u>मनसोऽन्यस्मिन् मनसि प्रभावपातनस्य क्षमता</u>

व्यक्तेः मनः दीर्घकालेन नैरन्तर्येण च साधितया योगशक्त्या अन्यप्राणिनां मनसि स्वाभीष्टं प्रभावं पातयति । सामान्यरूपेण एकस्य मनसोऽन्यस्मिन् मनसि प्रभावो वलोकयितुं शक्यते । एकः कश्चन कुशलोऽध्यापकः स्वमनसः प्रभावं वाणीमाध्यमेन छात्राणां मनसि पातयति । एकः कुशलो व्याख्याता स्वमनोद्वारा प्रवर्तितवाणीद्वारा सहस्रश्रोतॄणां मनः प्रभावयति । एकः समर्थः कविः गायको वा स्वमनोद्वारा प्रवर्तितकलाभिः विश्वस्य मानवोपरिप्रभावं पातयति । एवं समर्थं मनः केन प्रकारेण विश्वमानवस्य मनांसि प्रभावयति, एतस्य

वर्णनं शोधप्रबन्धस्य सप्तमाध्यायस्य अतिमनःप्रसङ्गे वर्णितं भविष्यति, तत्रैव चातिमानसस्य लोकोत्तरक्षमताया अपि वर्णनं भविष्यति ।

सामान्यरूपेण मनोविषयकालोचनायाः पश्चादिदानीमास्तिकदर्शनेषु वर्णितस्य मनसः क्षमतासु च विचारो भविष्यति ।

<u>आस्तिकदर्शनेषु वर्णित मनसः क्षमताः</u>

<u>न्यायवैशेषिकदर्शनयोः मनसः क्षमताः</u>

यथा च पूर्वमपि प्रतिपादितमस्ति, यत् न्यायवैशेषिकोभयदर्शनयोः मनसः परिमाणमणुभवति, तच्च जडमस्ति । आत्मना सहसंयुक्तं सत् मनः आत्म-विशेषगुणानुत्पादयति । यद्यप्यात्मनि समवायसम्बन्धेन इच्छाद्वेषप्रयत्नसुखदुःख-ज्ञानात्मकाः विशेषगुणास्तिष्ठन्ति, किन्तु ज्ञानादिलिङ्गैरात्मा अनुमानगम्य एव भवति । एवमेवेच्छादीनि यस्यानुमापकलिङ्गादीनि सन्ति, तदेवात्मपद-वाच्यं भवति । आत्मनो भोगायतनं शरीरमस्ति । हितप्राप्त्यर्थमहितपरिहारार्थं च या क्रिया विधीयते, सा चेष्टा पदवाच्या भवति । आत्मनो भोगसाधना-नीन्द्रियाणि सन्ति, तानि पृथ्व्यादिपञ्चमहाभूतेभ्य उत्पद्यन्ते । सांख्ययोगदर्शनं समस्तेन्द्रियाणामेकमात्रं कारणं प्रकृतेः कार्यमहंकारं स्वीकरोति, यदा च न्याय-वैशेषिकः तत्नैवाङ्गीकरोति, यतो हि यद्यहंकारः सर्वेन्द्रियाणामेकमात्रं कारणं भवेत्तदा घ्राणेन्द्रियेण केवलं गन्धस्यैव ज्ञानं भवति, रसनेन्द्रियेण केवलं रसस्यैव ज्ञानं भवेत्, न तु गन्धादीनाम् - इति नियमो न भविष्यति । यद्यपि न्यायदर्शने मनस इन्द्रियत्व प्रतिपादनं नास्ति, तथापि वैशेषिकदर्शने मनस इन्द्रियत्वस्य न

निषेधो नास्ति । एषा मनस एव क्षमता वर्तते, यद् तत्तदिन्द्रियैः सह संयुक्तं सद् तद् भिन्नभिन्नविषयाणां ज्ञानमात्मनि उत्पादयति । इन्द्रियेण ज्ञानमुत्पादयितुं कस्यापि पदार्थस्य सन्निधिरपेक्षितो वर्तते. अयमेव च पदार्थः मनो भवति यतो हि चक्षुरादिज्ञानेन्द्रियाणां तत्तद्ग्राह्यविषयैः सह सन्निकर्षे जातेऽपि एकस्मिन्नेव क्षणे चक्षुरादिज्ञानेन्द्रियैरुत्पद्यमानं चाक्षुषरासनेत्यादिकं ज्ञानमेकस्मिन्नेव क्षणे नोत्पद्येत् । अतो युगपज्ज्ञानानुत्पत्तिलक्षणहेतुना मनसोऽनुमानं जायते, तच्च मनोऽणुपरिमाणविशिष्टमङ्गीक्रियते ।

शरीरमनोवाणी द्वारा पुण्यमयी अथवा अपुण्यमयीप्रवृत्तिर्भवति. यया प्रवृत्त्या रागद्वेषमोहकारणात् पुरुषाः अनेकक्रियासु प्रवर्तन्ते । अतः प्रवृत्ति-हेतुभूताः रागद्वेषादयो न्यायदर्शने दोषाः कथिताः सन्ति । रागद्वेषादिदोषैः पुण्यप्रवृत्त्या अपुण्यप्रवृत्त्या च वा सुखदायको दुःखदायको वा भोग एव मुख्यं फलं भवति, यतो हि अयमुपभोगः इन्द्रियमनआदिसत्त्वे एव जायते, अत एतदपि गौण-फलमेव वक्तुं शक्यते । बाधापीडातापादिशब्दैः आत्मनो यावन्तो गुणाः सङ्केतिताः वर्तन्ते, तेषामेव नाम दुःखमस्ति । अतो दुःखोत्पादनवन्ति एतानि वस्तूनि प्रति-मुमुक्षुव्यक्तिभिः दुःखस्य भावना भावनीया । मनस इयं क्षमता एतादृशी वर्तते यद् मनोबाह्यविषयैरिन्द्रियैश्च सह संयुक्तं सद् आत्मनि सुखदुःखादीनं उत्पाद्य मानवं सुखदुःखादेर्भोगं कारयेत् । इत्थञ्च दुःखानामत्यन्तविमोक्षस्यैव नाम "अपवर्गो" भवति, न्यायवैशेषिकदर्शनस्य नाम परमपुरुषार्थ इति भवति । इत्थञ्च बाह्यविषयस्य ज्ञानोत्पत्तेः प्रारभ्य मोक्षपर्यन्तविषयान् प्रति दुःखस्य भावनोत्पादनं मनस एव क्षमतायाः कार्यमस्ति ।

न्यायवैशेषिकसम्मतो मनसो निषेधः सांख्ययोगदर्शनस्य वर्णनप्रसंगे पूर्वमेव प्रतिपादितः न्यायवैशेषिकदर्शनयोरपि सर्वप्रमाणार्थं मनः करणरूपेण स्वीकृतमस्ति । किन्तु लौकिकप्रत्यक्षज्ञाने इन्द्रियातिरिक्तं मन एवासाधारणं कारणमस्ति. किन्तु अलौकिकप्रत्यक्षार्थं न्यायवैशेषिकाः योगजप्रत्यक्षमपि स्वीकुर्वन्ति । इत्थञ्च न्यायवैशेषिकदर्शने लौकिकप्रत्यक्षालौकिकप्रत्यक्षभेदेन च प्रत्यक्षस्य भेदद्वयमङ्गीकृतमस्ति । अलौकिकव्यापारस्य सन्निकर्षस्य वा त्रयो भेदाः स्वीकृताः वर्तन्ते, यथा -

"अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा[1] ।।"

<u>सांख्ययोगदर्शनयोः मनसः क्षमताः</u>

सांख्ययोगदर्शनानुसारं मनस उत्पत्त्यादिवर्णनं पूर्वमेवाभूत् । प्रकृतेः समस्तपदार्थ इव मनोऽपि त्रिगुणात्मकः भौतिकःपदार्थो भवति । सांख्ययोगदर्शनानुसारं मनो विभुपरिमाणमात्मा चासंगः शुद्धश्चापि भवति. अतो विश्वस्य समग्रक्रियाकलापाः मनसैव सम्बद्धाः सन्ति । भारतीयमनोविज्ञानस्य सम्यङ्निरूपणोपलब्धये च सांख्ययोगदर्शने वर्णितस्य मनसः स्वरूपं लक्षणञ्च यस्य प्रथमद्वयाध्याये वर्णनमस्ति । अवश्यं ध्यातव्यं भवति ।

योगदर्शने कैवल्यार्थं चित्तवृत्तिनिरोधद्वारा मनसः सविकल्प-

---

1. न्यायसिद्धान्तमुक्तावलिः, प्रत्यक्षखण्डः - श्लोक 63.

समाधितो निर्विकल्पसमाधिपर्यन्तं विकसितं करणीयं भवति । चित्तं निरोधाव-
स्थायां वृत्तिरहितं जायते । यावत्पर्यन्तं चित्तवृत्तयो व्युत्थानदशायामुत्ति-
ष्ठन्ति,,तावत्पर्यन्तं पुरुषो वृत्तिभिः स्वमेकं जानाति । अनवस्य चित्तं
पुरुषकृत्तरमिव अस्ति, तद् सन्निधिमात्रेण पुरुषमुपकरोति, शब्दस्पर्शादिषु च
परिणतं सच्चित्तवृत्तिजातं पुरुषस्य भोगसाधनं भवति । शब्दाद्याकारायां
वृत्तौ चित्प्रतिफलनमेव भोगपदार्थः ।यद्यपि वृत्तिश्चित्तस्य धर्मस्तथापि
चित्तचैतन्ययोर्द्वयोरभेदसमारोपकारणाद् पुरुषवृत्तेः समानरूपमात्मानं जानाति।
इत्थञ्च भोगहेतुरविद्यैव वर्तते । चित्तवृत्तेः बोधस्योपभोगे अनाद्यविद्या
पुरुषस्य संयोग एव च हेतुर्भवति । अविद्याभिर्वासनानां प्रवाह उत्पद्यते, नूतन-
नूतनवासनाभिश्चाविद्यायाः कार्यभूताश्चित्तवृत्तय उत्पद्यन्ते । बीजांकुर-
प्रवाह इवाविद्यानां वासनानान्चानादिप्रवाहो वगन्तव्यः । चित्तवृत्तिबोधेनैव
चित्तस्य शान्तघोरमूढाकारवतीनां चित्तवृत्तीनामुपभोगः पुरुषस्य जायते, अत
एतासां चित्तवृत्तीनां निरोधः परमावश्यकः प्रतिभाति । पञ्चावयवात्मिका-
श्चित्तवृत्तयो भवन्ति । यथाः-

"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ।।"[1]

इत्थञ्च पञ्चप्रकारकवृत्त्यन्तर्गतं चित्तस्यानन्ताः वृत्तयो न्तर्भूताः
भवन्ति । एतासां पञ्चवृत्तीनामपि भागद्वयेन विभागः कर्तुं शक्यते- [1] क्लिष्ट-
वृत्तयः, [2] अक्लिष्टवृत्तयश्च । अस्मिता इत्यादिकारणाद् याः वृत्तय

---

1. पातंजलयोगदर्शन - 1/6.

उत्पद्यन्ते, ताः क्लेशपदवाच्याः भवन्ति । अर्थात् रजोमयी तमोमयी च वृत्तिः क्लेशस्य कारणं भवति, तदीयाप्रवृत्तिश्च क्लेशदानार्थमेवाभूत् । क्लेशोपार्जनार्थमेवैताः वृत्तयः प्रवर्तन्ते । प्रमाणादिवृत्तिद्वारा अयं प्रमाता सुखविषयान् निश्चिनोति तत्रासज्यते च, अथवा तत्र द्वेष्टि, तथा चाग्रे कर्मवासनायाः संचयनमपि करोति । अतः एताः क्लिष्टवृत्तयः धर्माधर्मयोः प्रसवभूमिः रूपेण ज्ञातव्याः भवन्ति ।

अक्लिष्टवृत्तयः सत्त्वपुरुषस्य विवेकख्यातिमुत्पादयन्ति । यदा बुद्धिरूपे परिणतं सत्त्वं रजस्तमोभ्यां रहितं भवति तदेदं बुद्धिसत्त्वं "प्रशान्तवाहि" सञ्जायते, प्रज्ञायाः प्रसादता निर्मलता वा "ख्याति" शब्देनोच्यते । इमां ख्यातिं विषयीं कुर्वत्यो क्लिष्टवृत्तयः गुणाधिकारस्य विरोधिन्यो भवन्ति । कार्यारम्भकरणमेव गुणानां प्रकार्यमधिकारश्चापि वर्तते । एते त्रयोऽपि गुणाः विवेकख्यातिपर्यन्तं स्वकार्यं साधयन्ति, यदा च विवेकख्यातिरूपमन्तिमं कार्यं गुणैः सम्पन्नं भवति, तदा पुनः गुणाः कार्यं नारभन्ते ।

योगिनो क्लिष्टवृत्तिद्वारा क्लिष्टवृत्तीनां निरोधं कुर्वन्ति पुनश्चाक्लिष्टवृत्तिद्वारा चित्ते विवेकख्यातिरुदेति । विवेकख्यातिप्राप्त्यनन्तरं योगिनः कैवल्यपदं लभन्ते । अतः एतच्चित्तस्यैव सामर्थ्यमस्तियत् तत् विवेकख्यातिमुत्पादयत् साधकाय कैवल्यप्राप्तिं कारयेदेव ।

चित्तवृत्तीनां संख्याया अनन्तत्वेऽपि तासां प्रमाणविपर्ययविकल्पादिपञ्चरूपेषु विभाजनं कर्तुं शक्यते । चित्तवृत्तेरेतानि पञ्चरूपाण्येव चित्तस्य प्रकार्यपदेनोच्यन्ते ।

प्रत्यक्षादिप्रमाणजन्यसम्पूर्णज्ञानस्य योगजानां सिद्धीनाञ्च मूले मनसः शक्तिरेव विराजमाना वर्तते । मनस एतदपरिमितशक्तीनां क्षमतानाञ्च विस्तृतं सूक्ष्मञ्च वर्णनं योगदर्शनस्य विषयो भवति । चित्तवृत्तीनां निरोध एव योग-पदवाच्यो भवति प्रकृतिपुरुषयोर्यथार्थस्वरूपस्य ज्ञानमपि मनस एवाधीनमस्ति । पुरुषस्यासङ्गो शुद्धस्वरूपे च स्थितिं प्रापयितुं चित्तवृत्तिविरुद्धनिरोधावस्था-विशिष्टमेव मनः सक्षमं भवति । प्रकृतिरनन्ता अस्ति प्रकृतेश्च सर्वोत्कृष्टपरिणामः मनो भवति । अतो मनोऽपि अनन्तशक्तिविशिष्टमेव जायते । प्राणिनां भिन्न-भिन्नस्तरेषु जन्मग्रहणकारणमपि मन एव भवति । त्रयाणां गुणानां ससन्तारतम्येन देवताः, राक्षसाः विविधचित्तवृत्तिमन्तः प्राणिनश्चोत्पद्यन्ते । मानवस्या-न्तिमं लक्ष्यं सांख्ययोगदर्शने प्रतिपादितं कैवल्यमेवास्ति । पुरुषः सर्वथा प्रकृति-पुरुषयोः सर्वथा पृथक्स्वरूपस्य ज्ञानाभावो मनसः क्षमतैव जायते । प्रकृतेः कार्यमेव पुरुषाय भोगापवर्गौ प्रददाति । मनस्येव तथा क्षमता वर्तते या तद् पुरुषं भोगा-पवर्गं प्रति नयेद् । मनसश्चित्तवृत्तीनां सर्वथा निरोधे जाते एव द्रष्टा स्व-स्वरूपे-ऽवस्थीयते ।

"तदा द्रष्टुः स्वरूपेऽवस्थानम्"

अर्थात् चित्तवृत्तीनां निरोधे जाते तस्यैव द्रष्टृपुरुषः स्व-स्वरूपेऽवस्थितो भवति । अविद्याकारणात्पुरुषः यः स्वमात्मानं बद्धं प्रकृत्या आसक्तञ्चापि जानाति, तद्विवेकज्ञानस्य विवेकख्यातेर्वोत्पत्तौ तस्यामेव स्वात्मशुद्ध, मुक्त, अपरिणामि, स्वरूपेऽवस्थीयते, एतस्याः स्थितेरेव नामकैवल्यमस्ति । विवेकख्यात्युत्पादनं मनस एव क्षमता वर्तते । इत्थञ्च मन एव स्वक्षमता द्वारा पुरुषं बध्नाति स्व-

क्षमता द्वारा च पुरुषं विमोचयति । विवेकज्ञाने जाते सति चित्तं बुद्धिं वा "हेयमेवेन्यस्ताम्" इत्युक्त्वा चित्तं चित्तस्य परिणामस्वरूप । विवेकख्याति-र्चापि हेयतया प्रतिपादयन्ति विद्वांसः ।

<u>पूर्वमीमांसादर्शने मनसः क्षमता:</u>

पूर्वमीमांसायां मनसः क्षमता प्रायस्तथैव वर्तते यथा वैशेषिकदर्शने प्रतिपादिताऽस्ति । पूर्वमीमांसायां सर्वेषां प्रमाणानां कृते मनः करणत्वेन स्वीकृतमस्ति । पूर्वमीमांसायामपि अन्यदर्शनमिव शरीरमात्मनो भोगायतनं भवति । मनसः एतत्सामर्थ्यमस्ति यत् चैतन्यस्याश्रय आत्मनः प्रत्यक्षकर्ता भवति। अर्थात् आत्मा चैतन्याश्रयो भवति मानसप्रत्यक्षगम्यश्चापि वर्तते[1] ।

मोक्षावस्थायामात्मनि सहजविराजमानसुखस्य भोगोऽपि मनसैव जायते । आचार्यकुमारिलस्यैवेदं मतमस्ति, यथा -

"दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः ।
सुखस्य मनसा भुक्तिर्मुक्तिरुक्ता कुमारिलैः ।।

देहेन्द्रियादीनामत्यन्तिकपरिध्वंसानुगृहीतं मनस्तदनुभवसाधनम्[2] ।

इत्थञ्च मनस एव सामर्थ्यमस्ति, यत् मोक्षेऽपि सुखस्यानुभावकं साधनं भवति । सुखादेरपरोक्षसाधनमिदमन्तरिन्द्रियं मन एवास्ति, इदञ्च मनो विभु भवति मनसि स्पन्दनमपि नैव जायते । मीमांसकाः वैशेषिकदर्शने प्रति-

---

1/2. नारायण, मानमेयोदयः - पृ० 212.

पादितस्य मनसः अणु परिमाणं न स्वीकुर्वन्ति, न च मनसश्चञ्चलत्वमङ्गी-
कुर्वन्ति । इत्थञ्च व्यवहारे सुखादेर्योगस्य मोक्षावस्थायां सुखस्य चानुभवः
अन्तरिन्द्रियमनस एव कारणमस्ति । यतो हि मनो विभु अस्ति, अत आका-
शादिरिवेदं स्पन्दरहितं भवति । इत्थञ्च मनस्यात्मनि च विभुत्वे सत्ये-
ऽपि द्वयोरितरेतरसंयोगोऽपि जायते । मीमांसकाः विभुद्रव्याणां परस्पर-
संयोगं कर्मजक्रियाद्वारा नैव स्वीकुर्वन्ति, आत्ममनसोः संयोगमजन्यमङ्गी-
कुर्वन्ति । अनया दृष्ट्या न्यायवैशेषिकमतेन, यदात्ममनसोः संयोगं क्रियाजन्य-
मङ्गीक्रियते, तेन मतभेदो नास्ति । दिक्काकाशादीनां मीमांसका प्रत्यक्षत्वमङ्गी-
कुर्वन्ति । दिक्कालाकाशादीनाञ्च प्रत्यक्षज्ञानार्थं मन एव करणत्वेन स्वीकृतमस्ति -

दिक्काकाशादीनां प्रत्यक्षत्वात् तदवगमे मनसः
करणभूतत्वात् दिक्काकाशादिव्यतिरेक सिद्धिरपि
स्पष्टयवसेया । इति सिद्धं नवमं मनोद्रव्यम् ।

आचार्य प्रभाकरमतेऽपि मनोऽणु स्वरूपमेव भवति [1]

द्रव्यानारम्भकत्वे सति अणुद्रव्यं भवेन्मनः ।
सुखादेरापरोक्ष्यस्य साधनं मन इन्द्रियम् ॥
अयौगपद्यं तल्लिंगं ज्ञानानामक्षजन्मनाम् ।

अर्थात् मनः किमपि द्रव्यं नोत्पादयति । अथवा मनस्तदिन्द्रियमस्ति यत्सुखादेः
प्रत्यक्षानुभवस्य साधनमस्ति, इन्द्रियैरुत्पद्यमानानां ज्ञानानां युगपदुत्पत्त्यभाव-
कारणान्मनसः सत्ता सिध्यति ।

---

1. मानमेयोदय - पृ० 214-218.

<u>उत्तरमीमांसायां [वेदान्तदर्शने] मनसः क्षमता:-</u>

अद्वैतवेदान्तमते आत्मा निर्विशेषतत्त्वरूपेण स्वीकृतो वर्तते । लोकव्यवहारे प्रमाणद्वाराज्ञानमुत्पादयितुं मनोऽन्तःकरणरूपेणैव स्वीकृतमस्ति, यतो हि अद्वैतवेदान्ते आत्मनः स्वरूपं सच्चिदानन्दात्मकमस्ति । अतः आत्मा ज्ञानाश्रयो न भवति । अपितु ज्ञानस्वरूपमेवाङ्गीक्रियते ।

मोक्षावस्थायामपि मनसः कारणतां वेदान्तदर्शनं नैव स्वीकरोति, अपि तु आत्मा अवाङ्मनसगोचर एवाङ्गीक्रियते । "न तत्र मनो गच्छति" इति श्रुतिरपि आत्मनः मनसः परत्वमेव सूचयति । कामसंकल्पादयोऽपि मनसो वृत्तिरूपेणैव कथिताः सन्ति, एतत्पूर्वमेव स्पष्टीकृतं वर्तते । मनस इदं सामर्थ्यमस्ति, यद् स्वस्वरूपात्मज्ञानेनाविद्यां विनाशयति । तदैव सर्वे जीवाः बन्धनान्मुक्ताः सन्तः स्वात्मस्वरूपे [मोक्षावस्थायाम्] अवतिष्ठन्ते । अद्वैतवेदान्तः "मनसैवानुद्रष्टव्यम्, यन्मनसा न मनुते" एतद्द्वयपरस्परविरुद्ध-प्रतीयमानश्रुत्योः पारस्परिकविरोधस्य निराकरणं करोति । वेदान्ते मनो-वृत्तिव्याप्यत्वमङ्गीकृतमस्ति, किन्तु ज्ञानविषयत्वरूपफलव्याप्यत्वस्य निषेधः कृतो वर्तते, यथा -

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् ।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥"

"तत्त्वमसि" अथवा "अयमात्मा ब्रह्म" शोधितस्य मनस एव सामर्थ्यमस्ति, यद्

---

1. वेदान्तसार - पृ० 27.

इत्यादि महावाक्यश्रवणद्वारा तन्मनो जीवब्रह्मणोः प्रतीयमानं भेदरूपमज्ञानम- खण्डाकारां वृत्तिमुत्पाद्यविनाशयति । एतेनैव वेदान्ती मनतः महत्ता स्पष्ट- रूपेण ज्ञातुं शक्यते ।

वैष्णवाचार्यः उपासनाद्वारामुक्तिं स्वीकरोति । ते अद्वैत- वादिनः सन्तोऽपि शांकराद्वैतमते जीवब्रह्मणोः ब्रह्मणः एकतां नैव स्वीकुर्वन्ति। भावनाध्यानोपासनाद्वारा च तेऽपि अज्ञानस्य निवृत्तिविषये ऐकमत्यमेवाव- लम्बन्ते । उपासनामानसिकी क्रिया वर्तते।स्मिन् विषये शंकराचार्येण सह कस्यापि मतभेदो नास्ति । व्यवहारकाले समग्रप्रमाणानां मूलेऽन्तःकरणस्यासाधारणकारणता स्वीकृता वर्तते । तैलधारावदविच्छिन्नध्येयाकार वृत्त्युत्पादनमेवोपासना वर्तते । अतः समग्रोपासनाविधिः मनो मूलक एव वर्तते ।

<u>जैनदर्शने मनसः महत्ता</u>: -

अन्यदर्शनानामिव जैनदर्शनमपि मनसः करणतां स्वीकरोति । एतत्पूर्वमपि प्रतिपादितमस्ति यत् जैनदर्शने ज्ञानस्य भेदद्वयमङ्गीकृतमस्ति - ‖1‖ प्रत्यक्षज्ञानम्, ‖2‖ परोक्षज्ञानञ्च ।

आत्ममात्रापेक्षं ज्ञानं प्रत्यक्षज्ञानं भवति । एतस्मिन्ज्ञाने इन्द्रियमनसो रपेक्षा नास्ति, किन्तु परोक्षज्ञानार्थं केवल मनसो एवापेक्षा वर्तते । इत्थमन्येत- न्मनस एव सामर्थ्यमस्ति, यत् जैनदर्शने समस्तपरोक्षज्ञानमन्येन्द्रियसाहाय्येन कदाचित् कदाचित् स्वत एव सुखदुःखादीनां ज्ञानमुत्पादयेत् ।

<u>बौद्धदर्शने मनसः क्षमताः</u>

यथा च पूर्वतोऽपि प्रतिपादितमस्ति यद्बौद्धदर्शनस्य विकासश्चतुर्षु सम्प्रदायेषु अभूत् -

॥1॥ <u>वैभाषिकाः</u> - बाह्यार्थप्रत्यक्षज्ञानस्य सिद्धान्तं स्वीकुर्वन्ति । बाह्यवस्तूनां प्रत्यक्षं कारयितुमेतस्मिन् मते परमावश्यकता भवति । मनस एवैषा शक्तिर्वर्तते, यथा बाह्याभ्यन्तराणां सर्वेषां धर्माणां ज्ञानमिन्द्रियेण मनसा वा जायते ।

॥2॥ <u>सौत्रान्तिकाः</u> - एते बाह्यवस्तूनां सत्तां स्वीकुर्वन्ति, परन्तु वस्तुनः सत्ता अनुमेयैव भवति । अतः सौत्रान्तिकबौद्धा बाह्यार्थानुमेयवाद स्वीकुर्वन्ति । अनुमित्यर्थं व्याप्तिज्ञानमावश्यकम् । अतः एतस्मिन्सम्प्रदायेऽपि बाह्यार्थस्य ज्ञानं मनसैव जायते ।

॥3॥ <u>योगाचाराः</u> - एतत्सम्प्रदायानुयायिनो विज्ञानवादस्य सिद्धान्तं स्थापयंति । एतस्मिन्मते विज्ञानमर्थाद् मनोबुद्धिरेवा एकमात्रं सत्यमस्ति । एते समग्रं बाह्यं भौतिकञ्च जगत् नितान्तं मिथ्या मन्यते, चित्तस्यैव चैकां सत्तामङ्गीकुर्वन्ति । एतन्मतानुसारं चित्तस्यैवेदं सामर्थ्यमस्ति यत् चित्तमेव शरीराभ्यन्तरं शरीराद् बहिश्च नानाप्रकारकाणां वस्तूनां रूपं धारयति । अत्र मते योगोपरि तदपेक्षया बलमधिकं दत्तं भवति । अतः एतन्मतं योगाचारपदवाच्यमपि भवति ।

॥4॥ <u>माध्यमिकाः</u> - एते "शून्यवादस्य" सिद्धान्तं स्वीकुर्वन्ति । एतस्मिन् सम्प्रदाये समस्तजगतः सत्ता प्रातिभासिकी भवति केवलं

शून्यस्यैव च सत्ता पारमार्थिकी वर्तते । मनसः शक्तिकारणादेव माध्यमिकशून्यवादिबौद्धाः "सर्वं शून्यं शून्यम्" इति भावनां भावयन्ति । एतद्भावनायाः प्राबल्येन च निर्वाणावस्थायां गच्छन्ति । यद्यपि एतस्मिन् मते संसारोऽपि असत्यः अस्ति निर्वाणमपि चासत्यमेवास्ति तथापि शून्यस्य भावना मनोद्वारैव कर्तुं शक्यते । मानमेयोदयग्रन्थे बौद्धानामेषां चतुर्णां सिद्धान्तानां वर्णनमेकस्मिन्नेव-श्लोके इत्थं प्रतिपादितवन्तौ, यथा -

"मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगत्,
योगाचारमते तु सन्ति मतयस्तासां विवर्तोऽखिलः ।
अर्थोऽस्ति क्षणिकस्त्वसावनुमितो बुद्ध्येति सौत्रान्तिकः,
प्रत्यक्षं क्षणभंगुरं च सकलं वैभाषिको भाषते ।।"[1]

बौद्धधर्मस्याष्टांगिकमार्गे सम्यक्संकल्पादिसाधना मनस्यैवाश्रिता वर्तते । बौद्धदर्शनस्य "नैरात्म्यवादः" मुख्यसिद्धान्तो वर्तते । "सर्वं दुःखं दुःखम्" सर्वमनात्म्यमनात्म्यम्" "सर्वं शून्यं शून्य"मिति तिस्रो भावनाः मनसैव भाविताः भवन्ति । वस्तुतो मनस एतस्मिन् सम्प्रदाये एतावन्महत्त्वं प्रदत्तमस्ति यत् [1] रूप. [2] वेदना. [3] संज्ञा. [4] संस्कार. [5] विज्ञानमिति पञ्चस्कन्धानां समुदाय एव "आत्म" पदवाच्यो भवति एतदर्थञ्च मन एव मूलं कारणमस्ति । सविकल्पकप्रत्यक्षं निर्विकल्पकञ्च प्रत्यक्षमपि मनसः शक्त्यैव सम्भाव्यते ।

आस्तिकदर्शनेषु मनसः महत्तायाः विवेचनम्, न्यायवैशेषिकदर्शनयोः आत्मनो विशेषगुणानां सुखदुःखप्रयत्नादीनां वर्णनं च पूर्वमेवाभूत्, तत्रैव चैतदपि

-----------------------------------

1. मानमेयोदय [अड्यार सं0] - पृ0 300.

कथितमस्ति, यदात्मनो विशिष्टगुणानामेतेषामभिव्यक्तिरात्ममनसोः संयोगेनैव जायते । मनस एवेयं क्षमता अस्ति यद् आत्मनो विशिष्टगुणानां अभिव्यक्तिं स्व-संयोगद्वारा आत्मनि उत्पादयति । मनस्तत्त्वस्य सर्वनक्षमता विषये मनसः संक-ल्पशक्तिविषये च योगदर्शने मनस्तत्त्वस्य वर्णनप्रसङ्गेऽत्र संकेतितां वर्तते । अतस्त-स्यात्र पुनरावृत्तेरावश्यकता नास्ति ।

[ख] मनसः प्रकार्याणां विवेचनम्

मनसः स्वरूपस्य मनसः क्षमतायाश्च वर्णनप्रसंगे मनसः प्रकार्याणामपि स्पष्टता अधिकतया कृताऽस्ति । अतः पुनस्तस्य विस्तारेण वर्णनस्यावश्यकतानैव प्रतिभाति । न्यायवैशेषिकसांख्ययोगपूर्वोत्तरमीमांसादर्शनेषु प्रत्यक्षानुमानोपमान-शब्दार्थापत्त्यभावज्ञानोत्पत्तौ मनः अन्तःकरणस्य रूपेण कार्यं करोति । ज्ञानोत्पत्त्यर्थमपि मनसो साधारणकारणतां सर्वाण्यपि दर्शनानि स्वीकुर्वन्ति ।

बौद्धदर्शनस्य विज्ञानवादे तु बुद्धेश्चित्तस्यैवेदं प्रकार्यमस्ति यद् , तद् शरीराभ्यन्तरं सदपि बाह्यवस्तूनां घटपटादीनां रूपे परिणम्यते । वेदान्त-दर्शनेऽपि अविद्यायाः नाशः मनोवृत्त्यैव सम्भवति, यतोहि वेदान्तदर्शने आत्मना चित्या वा सहाविद्यायाः क्वचन विरोधो नास्ति । अपितु आत्मा अविद्याया आश्रयो विषयश्चापि भवति । अतोऽविद्यायाः नाशार्थं तत्त्वमस्यादिमहावाक्य-द्वारा या अखण्डाकारावृत्तिः मनसि उदेति, सावृत्तिः अविद्यायाः विरोधिनी वर्तते। सैव चाविद्यां विनाशयन्ती आत्मानं स्वस्वरूपावस्थितौ अर्थाद् मोक्षाव-स्थायामवस्थापयति ।

जैनदर्शनेऽपि प्रत्यक्षादिव्यावहारिकज्ञानोत्पादनार्थं मनसः प्रकार्याणां स्वीकृतिः वर्तते । सांख्ययोगदर्शनयोरपि अविद्यायाः नाशः सुसंस्कृतमनस एवाधीनो भवति । चित्तवृत्तेर्निरोधः सविकल्पकनिर्विकल्पकसमाध्यवस्थानामुत्पादनं मनस एवाधीनो वर्तते । एतत्सर्वथा सत्यमस्ति यत् सांख्ययोगदर्शनयो विवेकज्ञानमर्थात् सत्त्वपुरुषान्यताख्यातिः मनोवृत्तिद्वारेवोत्पद्यते । ऋतम्भरा प्रज्ञा अपि विशुद्धसत्त्ववतो मनस एकावस्था विशेषरूपा जायते । व्यवहारस्य सम्पूर्णं कार्यं प्रकृत्यन्तर्गतत्वकारणात् मनोमूलकमेव वर्तते । यतो हि आत्मा तु असंगः, अपरिणामी चितिशक्तिस्वरूपश्चापि वर्तते । साधनान्तो विवेकख्यातिरपि हेयपक्षे एव स्थापिता वर्तते । इन्द्रियगोचरस्य बाह्यजगतः पदार्थद्वारोत्पद्यमानं शब्दस्पर्शरूपरसगन्धादीनां ज्ञानमिन्द्रियस्य मनसश्चाधीनं वर्तते । अत एव मनोऽन्तःकरणं शरीराभ्यन्तरीयमसाधारणकारणं वा कथितमस्ति, इन्द्रियाणि च बाह्यकरणभूतानि सन्ति । वेदान्ते "मन एव जगत्सर्वम्" इत्युक्त्वा मनसो महत्त्वपूर्णं प्रकार्यं गोचरत्वेन प्रतिपादितं वर्तते । मनः केवलमात्मनि पतिताविद्यावरणभंगं करोति, वेदान्तदर्शने चात्मा स्वयम्प्रकाशकारणात् मनोद्वारा प्रकाशनीयं नैवाङ्गीकरोति ।

षष्ठाध्याये मनसः प्रमाणानाञ्च विवेचनं भविष्यति तत्रैव च सन्दर्भानुसारं मनसः प्रकार्याणां यथास्थानमुल्लेखोऽपि भविष्यति ।

[2] प्रकार्याणां तुलनात्मिका समीक्षा:-

प्रकार्याणां तुलनात्मकसमीक्षायां जातायामेतत् स्पष्टमेव जायते यत् प्रकार्यदृष्ट्या आस्तिकदर्शनानां निम्नभागेषु विभाजनं कर्तुं शक्यते -

(1) तदास्तिकदर्शनं यदात्मनिविशेषगुणान् स्वीकरोति, इन्द्रियमनसोः संयोगेनात्मनो विशेषगुणानामभिव्यक्तिमङ्गीकरोति । यथा- न्यायः, वैशेषिकम्, पूर्वमीमांसादर्शनम्, जैनदर्शनञ्च ।

(2) आत्मा असंगः, अपरिणामी, शुद्धः, चितिमात्रमित्यङ्गीकुर्वत्सु दर्शनेषु व्यावहारिकसम्पूर्णक्रियाकलापाः मनसः प्रकार्यान्तर्गताः वर्तन्ते । यथा - सांख्ययोगदर्शने ।

(3) आत्मनो निर्विशेषतत्त्वमङ्गीकुर्वति अद्वैतवेदान्तदर्शने व्यावहारिकज्ञानोत्पादनस्य पूर्णं प्रकार्यं मनस एव वर्तते । आत्मनि पतिता विद्याया आवरणमखण्डाकारमनोवृत्त्या नाशकरणमपि मनस एव प्रकार्यं भविष्यति ।

(4) शाश्वतस्यात्मनोऽस्तित्वमस्वीकर्तृषु दर्शनेषु विज्ञानवादे समग्र-व्यावहारिकक्रियाकलापाः मनसः प्रकार्यान्तर्गताः एव सन्ति । शून्यवादे तु शून्यातिरिक्तस्य कस्यापि वस्तुनः सत्ता स्वीकृता नास्ति, तथापि "सर्वं शून्यं शून्य"मिति भावनार्थं मनसः साहाय्यग्रहणं नितान्तमावश्यकम् ।

पाश्चात्त्यदर्शनेऽपि मनसः प्रकार्याणां यद् वर्णनमस्ति, तदधिक-तयोपरिवर्णनान्तर्गतं समाविष्टं भवति, अतो विस्तरेण तस्य तदीय विविध- व्याणाञ्च वर्णनमत्रानावश्यकमेव प्रतिभाति ।

।। इति पञ्चमोऽध्यायः ।।

प्रमा एवं प्रमाणम्

अस्मिन्नध्याये विभिन्नास्तिकदर्शनेषु प्रमाणस्य तदीय प्रक्रियायाश्च संक्षेपेण विवेचनं भविष्यति। प्रमाणानां विभिन्नप्रक्रियासु एतासु मनसः स्थानमेवं प्रमाणेषु मनसः प्रकार्येष्वपि दृष्टिपातो भविष्यति। पञ्चमेऽध्याये मनसः प्रकार्याणां विवेचनमभूत् तेषाञ्च प्रकार्याणां तुलनात्मिकासमीक्षा अपि कृता वर्तते। एतस्मिन्नध्याये प्रत्येकास्तिकदर्शनेषु स्वीकृत प्रमाणानां विवेचनम्, प्रमाणप्रक्रिया तथा तद्विषयकमनसः कार्यकलापानाञ्च विवेचनमेव मुख्यमुद्देश्यमस्ति।

प्रमाणशब्दार्थः प्रमाया [अर्थात् यथार्थज्ञानस्य] साधनमस्ति। प्रमाणविवेचनेन तात्पर्यमिदमस्ति यद् तेषां साधनानां विवेचनम्, येन मानवो यथार्थज्ञानपर्यन्तमिन्द्रियमनसोः साहाय्येन गच्छति। प्रमायाः लक्षणं कुर्वन् न्यायदर्शने कथितमस्ति यद् "तद्वति तत् प्रकारकं ज्ञानं प्रमा"। अर्थात् प्रमा यथार्थज्ञानं वा तद् भवति यद् धर्मविशिष्टे वस्तुनि तद्विशेषणेन युक्तं ज्ञानमस्ति। यथा गौः यथार्थज्ञानम्, गोत्वधर्मविशिष्टपदार्थे गोत्वप्रकारकं ज्ञानमेव प्रमाज्ञानं भविष्यति। यदि महिषत्वधर्मविशिष्टे पदार्थे गोत्वप्रकारकं ज्ञानमुत्पद्येत्, तदा तद् प्रमा अर्थात् यथार्थज्ञानं न भवति, अपितु अप्रमेत्येव वदेत्।

तार्किकैः "प्रमाकरणं प्रमाणम्" तथा "यथार्थानुभवः प्रमा" एवम्-अनुभवश्च स्मृतिव्यतिरिक्तं ज्ञानम्" इत्युक्त्वा यल्लक्षणं कृतम्, तल्लक्षणं पूर्वमीमांसायाः भाट्टमते स्वीकृतं न भवति। तार्किकाः प्रमायाः करणं प्रमाणमिति कथयन्ति।

यथार्थानुभवश्च प्रमा उच्यते तथा स्मृतिभिन्नं ज्ञानमनुभव उच्यते । भाट्टमतस्य दार्शनिकप्रमायाः उक्तलक्षणे "यथार्थानुभवः प्रमा" इति लक्षणे अतिव्याप्तिदोष-ग्रस्ततां च बोधयन्ति, यतोहि अनुवादकः ज्ञानगृहीतग्राही भवति । अतः प्रमायाः उक्तं लक्षणमनुवादकेऽपि गच्छति, यतोहि तार्किकाणामुक्तप्रमालक्षणे अनुवादव्यावर्तकं किमपि पदं नास्ति । भाट्टमते "प्रमाकरणं प्रमाणम्" इति व्युत्पत्तौ "प्रमा" शब्दो लक्षणावृत्तिद्वारा प्रमायाः कार्यभूतं प्राकट्य-[ज्ञातता]-अपि बोधयति । अतः प्राकट्यरूपप्रमायाः कारणीभूतं प्रमाज्ञानमपि प्रमाणपदवाच्यता लभते । अतो भाट्टगणाः फलप्रमाणवादिन इत्युच्यन्ते ।

प्रमाकरणं प्रमाणम् – इति प्रमाणत्वं सिद्धम् । इह च प्रमाशब्देन लक्षणया तत्कार्यभूतस्य प्राकट्यस्यापि प्रतिपादनात् प्राकट्यस्य प्रमाकरणत्वेन ज्ञानस्यापि प्रमाणत्वमाहुः । एतावता च वयं फलप्रमाणवादिन इति गीयामहे ।[1]

वेदान्तदर्शने "चैतन्यं प्रमा" इत्युक्त्वा न्यायवैशेषिकसम्मतं "तद्वति तत्प्रकारकं ज्ञानं प्रमा" इति लक्षणं निराकृतं भवति । न्यायवैशेषिकवेदान्ते च प्रमाणस्य लक्षणम् "प्रमाकरणं प्रमाणम्" इति स्वीकृतमस्ति, अर्थात् प्रमायाः यथार्थ-ज्ञानस्य वा यदसाधारणं कारणमस्ति, तदेव प्रमाणपदवाच्यमस्ति । किन्तु प्रमा-विषये वेदान्तस्य न्यायवैशेषिकापेक्षया मतभेदो वर्तते । स्मृति अनुभवभेदेन न्याय-दर्शने ज्ञानस्य विभागद्वयमस्ति । स्मृतिम्परित्यज्यप्रमायाः लक्षणं वेदान्ते इत्थं कृतमस्ति –

---

1. मानमेयोदय – पृ० 8-9.

तत्र स्मृतिव्यावृत्तं प्रमात्वम् - अनधिगताबाधितार्थ-
विषयकज्ञानत्वं प्रमात्वम्[1]।

अर्थात् स्मृतिभिन्नत्वञ्च प्रमाज्ञानं तद्भवति, यस्य विषयः पूर्वेणाधिगतो न भवेद-
बाधितार्थविषयज्ञानत्वञ्च तत्र भवेत्।

न्यायदर्शने "यथार्थानुभवः प्रमा" इति प्रमायाः लक्षणं कृतमस्ति यतोहि
स्मृतिज्ञानमनुभवज्ञानाद्भिन्नं वस्तु वर्तते, अतः तज्ज्ञानं प्रमाज्ञानं नास्ति।
"यतीन्द्रमतदीपिका" नामके ग्रन्थे "यथावस्थितव्यवहारानुगुण ज्ञानं प्रमा" इति
प्रमायाः लक्षणं कृतमस्ति, यतोहि स्मृतिज्ञानमपि यथावस्थितव्यवहारानुगुणज्ञाना-
न्तर्गतमेव भवति, अतस्तन्निराकरणार्थं न्यायमते केवलं यथार्थानुभव एव प्रमाशब्द-
वाच्यो भवति स्मृतिज्ञानस्य च प्रमात्वं निराकृतं भवति। श्रीमद्वाचस्पतिमिश्र-
विरचिते "न्यायवार्तिकतात्पर्यटीकापरिशुद्धि"नामके ग्रन्थे स्मृतेः प्रमात्वस्य
निराकरणमित्थं कृतं वर्ततेः -

"एवं च कथं स्मृतिः प्रमा ? किञ्च स्मृतेयार्थार्थ्यमपि
कुतम् ? नहि यादृगर्थो यदा स्मर्यते, तादृग् एवासौ,
तदा पूर्वावस्थायावर्तमाने काले निवृत्तत्वात्।
अनिवृत्तौ हि स्मृतिव न स्यात्।"[2]

इत्थञ्च प्रमाविषये मतभेदाभावेऽपि स्मृतिज्ञानं प्रमाज्ञानत्वेन नैव
स्वीक्रियते। वेदान्ते नधिगता बाधितार्थविषयकं ज्ञानमेव प्रमाशब्दवाच्यं भवति।
यद्यपि स्मृत्यनुभवभेदेन ज्ञानं द्विप्रकारकं भवति, तथापि भ्रमप्रमाभेदेनापि ज्ञानस्य

---

1. वेदान्तपरिभाषा - पृ० 15.

2. तत्रैव - 13.

द्वौ भेदौ भवतः । यदि पूर्वानुभवो यथार्थज्ञानं भविष्यति, तदा तस्य स्मरणमपि भ्रमात्मकमेव भविष्यति, किन्तु यदि पूर्वानुभवो यथार्थस्तदा तस्य स्मृतिरपि यथार्थैव भविष्यति, तथापि प्रमाणपदार्थान्तर्गता या प्रमा वर्तते, तत् स्मृति-साधारणरूपेणाङ्गीकर्तुं नैव शक्यते, किन्तु अनुभवरूपाया एव प्रमाणपदार्थान्तर्गत-प्रमाया अर्थो ज्ञातव्यः[1] ।

अद्वैतवेदान्ते प्रमायाः यल्लक्षणं कृतमस्ति तदनधिगताबाधितार्थ-विषयकं ज्ञानमेव प्रमाशब्दवाच्यमस्ति । तस्य कारणमिदमस्ति यत् अद्वैतवेदान्तस्य मते ब्रह्मव्यतिरिक्तसमस्तप्रपञ्चज्ञानं भ्रम एवाङ्गीकृतं वर्तते, तच्चाविद्यासंस्कारेण जन्यमुच्यते । "तद्वति तत्प्रकारकं ज्ञानं प्रमा" इति नैयायिकसम्मतस्य लक्षणस्य परित्यागो स एव कृतो वर्तते, यतो हि अद्वैतवेदान्तमते भ्रमस्थले निर्वचनीयख्याति-रङ्गीकृता वर्तते । अतः शुक्तौ विद्यमान प्रातिभासिकस्य रजतस्य ज्ञानमङ्गी-कृतमस्ति, इत्यत्र नैयायिकस्य लक्षणं भ्रमेऽतिव्याप्तं भवेत् । अस्तु । प्रमाविषये एवम्प्रकारकमतभेदान् प्रदर्श्य एतज्ज्ञातव्यमुचितं प्रतिभाति यत् प्रमाणलक्षणे क्वापि मतभेदो नास्ति । प्रमायाः करणमेव प्रमाणमुच्यते । अतः "प्रमाकरणं प्रमाणम्" इति प्रमाणस्येदं लक्षणं निर्दुष्टमेव भवति ।

आस्तिकदर्शनेषु प्रमाणानां संख्यायां प्रक्रियायाञ्च पर्याप्तमतभेदो वर्तते । एतस्य निरूपणमग्रे भविष्यति । प्रमाणानां संख्याविषये निम्नलिखिताः श्लोकाः ध्यातव्याः भवन्ति -

---

1. वेदान्तपरिभाषा - पृ० 15.

"प्रत्यक्षमात्रं चार्वाका बौद्धा वैशेषिका द्वयम् ।
सांख्या योगास्त्रयं चैव तार्किकाश्च चतुष्टयम् ।।

पञ्च प्राभाकराः भाट्टास्तथा वेदान्तिनश्च षट् ।
पौराणिकास्तथा चाष्टौ प्रमाणानि ब्रुवन्ति हि[1] ।।"

अस्य श्लोकस्य रूपान्तरमपि श्रीकण्ठमिश्रकृते ब्रह्मसिद्धिनामके ग्रन्थे समुपलभ्यते -

"चार्वाकास्तावदेकं द्वितयमपि पुनर्बौद्धवैशेषिकौ द्वौ,
भासर्वज्ञश्च सांख्यास्त्रितयमुदयनाद्याश्चतुष्कं वदन्ति ।
प्राहुः प्राभाकराः पञ्चकमपि तु पुनर्भाट्टवेदान्तविज्ञाः,
षट्कं पौराणिकास्त्वष्टकमभिदधिरे संभवैतिह्ययोगात् ।।"

।।। प्रत्यक्षप्रमाणम्

वैशेषिकदर्शने प्रत्यक्षमनुमानञ्चेति केवलं प्रमाणद्वयमेवाङ्गीक्रियते, किन्तु न्यायदर्शने प्रत्यक्षानुमानोपमानशब्दाख्यानि चत्वारि प्रमाणानि स्वीकृतानि सन्ति ।

।. न्यायवैशेषिके प्रत्यक्षप्रमाणस्य प्रक्रियाः

प्रत्यक्षप्रमाणस्य लक्षणम् - "साक्षात्कारि प्रमाकरणं प्रत्यक्षम्" इति भवति । अर्थात् साक्षात्कारिप्रमायाः करणमेव प्रत्यक्षप्रमाणमुच्यते, साक्षात्कारिणी प्रमा च सा भवति या इन्द्रियजन्या प्रमा भवेत् । सविकल्पकनिर्विकल्पकभेदेन साक्षात्कारिप्रमाया अपि भेदद्वयं भवति, तस्याश्च प्रमायाः करणं त्रिप्रकारकं भवति -

---

1. विश्वेश्वर सिद्धान्तशिरोमणिकृत दर्शनमीमांसा - 4, तर्कभाषा - पृ0 114.

साक्षात्कारि प्रमाकरणं प्रत्यक्षम् । साक्षात्कारिणी च प्रमा सैवोच्यते या इन्द्रियजा । सा च द्विधा, सविकल्पक-निर्विकल्पकभेदात् । तस्याः करणं त्रिविधम् । कदाचिदिन्द्रियम्, कदाचिदिन्द्रियार्थसन्निकर्षः, कदाचिद् ज्ञानम्[1] ।

इत्थञ्च कदाचिदिन्द्रियद्वारा कदाचिदिन्द्रियार्थसन्निकर्ष-द्वारा, कदाचिन्निर्विकल्पकज्ञानद्वारा च सविकल्पकं ज्ञानमुत्पद्यते ।

[अ] निर्विकल्पकप्रत्यक्षप्रमायाः प्रक्रियाः - यदा निर्विकल्पकप्रत्यक्षप्रमात्मकं फलमुत्पद्यते, तदा इन्द्रियं करणं भवति । आत्मा मनसा संयुज्यते । मन इन्द्रियेण, इन्द्रियमर्थेन सह संयुज्यते। अयं नियमोऽस्ति, यद् इन्द्रियाणि वस्तूनि प्राप्यवस्तुभिः सम्बद्धानि भवन्ति । अर्थं प्रकाशयन्ति अर्थात् पदार्थज्ञानं कारयति । इत्थञ्चार्थेन सन्निकृष्टेन्द्रिय-द्वारा निर्विकल्पकं ज्ञानमुत्पद्यते । निर्विकल्पकज्ञानं तज्ज्ञानमस्ति, यस्मिन् ज्ञाने नाम जात्यादियोजनानास्ति, केवलं वस्तुमात्रस्यैव ज्ञानं जायते । नाम-जात्यादियोजनारहितस्यैतस्य निर्विकल्पकज्ञानस्य करणमिन्द्रियं भवति । इन्द्रियार्थयोः सन्निकर्षो वान्तरव्यापारो भवति, निर्विकल्पकज्ञानञ्च तस्य फलमस्ति ।

[ब] सविकल्पकप्रत्यक्षप्रमायाः प्रक्रियाः - निर्विकल्पकज्ञानानन्तरं सविकल्पक-अर्थात् नाम जात्यादियोजनया युक्तं

---

1. तर्कभाषा, केशवमिश्रः - पृ० ४६.

ज्ञानमुत्पद्यते । यदा [2] इन्द्रियार्थसन्निकर्षः करणमस्ति, तदा निर्विकल्पक-ज्ञानमवान्तरव्यापारो भवति, सविकल्पकं ज्ञानञ्च तस्य फलं भवति । सविकल्पक-ज्ञाने नामजात्यादियोजना भवति, यथा- "अयं ब्राह्मणोऽस्ति" इत्यत्र ब्राह्मणत्वं जातिमुखत्वतः प्रतीतिर्भवति, "अयं श्यामोऽस्ति" इत्यत्र श्यामत्वगुणविशिष्ट-व्यक्तेः प्रतीतिः । इत्थञ्च विशेषणविशेष्ययुक्तं सविकल्पकं ज्ञानमुत्पद्यते ।

[3] निर्विकल्पकं ज्ञानं कदा करणं भवति ? इति प्रश्नस्योत्तर-मिदमस्ति यत् यदोक्त सविकल्पकज्ञानानन्तरं हानोपादानोपेक्षाबुद्धिर्वा उत्पद्यते एतज्ज्ञानोपादानोपेक्षा बुद्धित्वं फलं प्रति निर्विकल्पकज्ञानं करणं भवति सविकल्पकं ज्ञानञ्चावान्तरव्यापारहानोपादानोपेक्षाबुद्धिर्वा फलं भवति । अवान्तरव्यापारस्य च लक्षणमित्थं ज्ञातव्यम् -

तज्जन्यस्तज्जन्यजनको व्यापारः । यथा -

कुठारजन्यः कुठारदारुसंयोगः कुठारजन्यच्छिदा जनकः ।

यथा कुठारजन्यकुठारकाष्ठयोः संयोगः कुठारादुत्पद्यमानायाः छेदनक्रियायाः जनको भवति । तथैव च यदा हानोपादानोपेक्षाबुद्धित्वं ज्ञानमुत्पद्यते तदा निर्विकल्पकं ज्ञानन्तु करणं भवति सविकल्पकज्ञानन्त्ववान्तरव्यापारस्य कार्यं करोति येन च हानादिबुद्धित्वं फलमुत्पद्यते ।

2. <u>सांख्ययोगदर्शने प्रत्यक्षप्रमाणस्य प्रक्रिया</u>: -

सांख्यदर्शने प्रत्यक्षप्रमाणस्य लक्षणं प्रक्रिया चेत्थं वर्तते -

---

1. तर्कभाषा, केशवमिश्रः - पृ० 49-50.

"प्रति विषयाध्यवसायो दृष्टम्"

अर्थात् विषयसन्निकृष्ट इन्द्रियाश्रितोऽध्यवसायोऽर्थाद् बुद्धिधर्मः प्रत्यक्षप्रमाणपद-वाच्यो भवति । "प्रतिविषयम्" इत्यस्यार्थ इन्द्रियमस्ति यतोहि तत् प्रत्येक-विषयं प्रतिवर्तमानं तिष्ठति । इत्थञ्च "अर्थ सन्निकृष्ट" इत्यर्थः सिध्यति । अध्यवसायबुद्धेर्व्यापारः परिणामरूपो वा व्यापारो भवति । इत्थञ्चेन्द्रियाणां विषयैः सह सन्निकर्षे जातेऽपि बुद्धिगततमो गुणस्याभिभवस्तिरस्कारो वा जायते, तदैव च सत्त्वगुणस्य यत्स्फुरणं भवति, तस्यैव नाम अध्यवसायवृत्तिः ज्ञानं वोच्यते। एतदेव ज्ञानं प्रत्यक्षनामकं प्रमाणं भवति । विषयाकारे परिणतेन प्रमाणवृत्तिरूप-ज्ञानेन सह चेतनपुरुषस्य यो नुग्रहः सम्बन्धश्चापि जायते, तदेव प्रमाणस्य फलमर्थात् प्रमा भवति । इयञ्च प्रमा "पौरुषेय चित्तवृत्तिबोधः" इत्यप्युच्यते । यद्यपि बुद्धितत्त्वं जडप्रकृतेः परिणामो [विकारो] भवति, अतो चेतनमस्ति । अतस्तस्य बुद्धितत्त्वस्याध्यवसायोऽपि अचेतनमेव भवति, तथापि चित्स्वरूपः पुरुषः, बुद्धौ प्रतिबिम्बितः सन् बुद्धिस्थितज्ञानसुखादिधर्मद्वारा स्वयमपि तद्युक्तमिव प्रतीयते । इत्थञ्च चेतनपुरुषः बुद्धिद्वारा अनुगृहीतो भवति चेतनपुरुषेण च सह तादात्म्य-भावापत्तिकारणात् अचेतनबुद्धिस्तदीयाचेतनं ज्ञानमपि चेतनमिव जायते । प्रत्यक्षे विषयाः पृथ्व्यादिग्राह्यपदार्थाः सुखादिमनोभावविशेषरूपेण विद्यमानास्तिष्ठन्ति, किन्तु तन्मात्राः इन्द्रियाणां विषयाः भवितुं नार्हन्ति । योगिनामेव कृते तन्मात्रा अपि ग्राह्याः विषयाः भवन्ति ।

योगदर्शनेऽपि प्रत्यक्षस्य लक्षणं प्रक्रिया च सांख्यमिव प्रतिभाति ।

यथा -

---

1. सांख्यतत्त्वकौमुदी - पृ0 22-24.

इन्द्रियम्

इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामा-
न्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम् ।

अर्थादिन्द्रियप्रणालिकया चित्तवृत्तिर्बहिर्गच्छति बाह्यवस्तुद्वारा च सा उपरक्ता भवति । इत्थञ्चोपरक्तवस्तुविषयिणी चित्तवृत्तिरेव प्रत्यक्षं प्रमाणमुच्यते । तथा च चित्तवृत्तेः प्रमाणत्वमेव मुख्यत्वेन प्रतिपादितमस्ति । चक्षुरादीन्द्रियन्तु केवलं तस्य द्वारमात्रमस्ति । अतश्चक्षुरादिविषये यत्प्रमाण-शब्दस्य व्यवहारो भवति, सः गौणः प्रयोगो ज्ञातव्यः । शंखस्य पीताद्याकारे परिणम्यमानस्य चित्तस्येन्द्रियेण सहैवार्थाकारस्य परिणामो भवति । केवलं चित्तस्यैव परिणामो न भवति, यतो हि नेत्रे पीतिमादिदोषवत्त्वे एव चित्तस्य "पीतः शंखः" इति ज्ञानस्य परिणामो भवति । यदि नेत्रे कामलादिरोगो न भवेत्तदा "पीतः शंखः" इति ज्ञानस्य चित्तस्य परिणामो न भवेत् । इत्थञ्चान्वयव्यतिरेकप्रक्रियाभ्यामिदं सिध्यति, यद् चित्तस्य तत्तदाकारे परिणामः इन्द्रियेण सहैव जायते । केवलं चित्तस्य परिणामो न भवति । अतश्चक्षुरादि इन्द्रियाणामपि प्रत्यक्षादेः कारणसाधारणकारणं वक्तुं शक्यम् । मुख्यत्वेन तु चित्तवृत्तिरेव प्रत्यक्षप्रमाणाः अस्मत्स्वीकारे औचित्यं प्राप्नोति ।

न्यायवैशेषिकदर्शनयोर्मनो अणुपरिमाणवत्त्वकारणात् तस्य नित्यत्वाङ्गीकाराच्च चित्तस्य परिणामो नाङ्गीकर्तुं शक्यः । किन्तु सांख्ययोगे चित्तवृत्तेरिन्द्रियद्वारेण बहिर्गमनं तथा बाह्यवस्तुसन्निकर्षेण तस्य तत्तदाकारे परिणामस्वीकार आवश्यक इवाभाति । वृत्तिचित्तयोः कार्यकारणभावसत्त्वात् कार्यकारणयोश्चाभेदसम्बन्धसत्त्वात् वृत्तिश्चित्तस्य परिणामो वक्तुं शक्यते । अन्यदर्शनेष्वपि प्रत्यक्षादिप्रमाणेषु मन एव करणत्वेनाङ्गीकृतमस्ति ।

विभिन्नदर्शनेषु प्रत्यक्षादिप्रमाणानां स्वरूपं प्रक्रियाणां तुलनात्मकमध्ययनञ्चास्य शोधप्रबन्धस्य विषयो नास्ति । अस्मिञ्छोधप्रबन्धे प्रधानरूपेणैतदेव प्रदर्शितमस्ति यत् प्रत्यक्षादिप्रमाणेषु मनसः किं महत्त्वमस्ति, कथञ्च मनो साधारणकारण-स्वरूपेण प्रमाकरणाद्यथार्थज्ञानमुत्पादयति । सांख्ययोगयोः प्रत्यक्षप्रक्रियया वेदान्त-दर्शनस्य प्रत्यक्षप्रक्रियायाः पर्याप्तं सादृश्यमस्ति । एतस्य स्पष्टतायै वेदान्तप्रक्रि-याया अपि संक्षेपेणोल्लेखो विधीयते ।

3. <u>वेदान्तदर्शने प्रत्यक्षप्रमायाः प्रक्रिया</u>: -

एतत्पूर्वमेव प्रतिपादितमस्ति, यत् वेदान्तदर्शने "चैतन्यं प्रमा" इति स्वीकृतं भवति । वेदान्तपरिभाषायामियं शंका समुत्थापिता भवति, यद् यदि चैतन्यमेव प्रमा अस्ति, तदा एतच्चैतन्यमनादिभूतमस्ति, तदा चक्षुरादीन्द्रि-याणां प्रमायाः करणमङ्गीकृत्य कथं प्रमाणं वक्तुं शक्नुयात् ? एतस्य समाधान-मित्थं कृतमस्ति -

ननु चैतन्यमनादि, तत्कथं चक्षुरादेः तत्करणत्वेन प्रमाणत्वमिति उच्यते । चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादि-ना जायते इति वृत्तिविशिष्टं चैतन्यमादिमद् उच्यते। ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः ।1

अतः ज्ञानन्तु वास्तवचितिरात्मैव भवति किन्तु ज्ञानावच्छेदकत्व-कारणात् चित्तवृत्तावपि ज्ञानशब्दस्य गौणः प्रयोगः कृतो भवति । न्यायवैशेषिक-

---

1. वेदान्तपरिभाषा - पृ० 29-30.

ध्वनियोर्मध्येऽपि मनो निरवयवपदार्थो भवति । अतोऽन्तःकरणस्य परिणाम-रूपिकावृत्तिर्नाङ्गीक्रियते, किन्तु सांख्ययोगवेदान्तेषु चान्तःकरणं निरवयव-पदार्थो नास्ति । अन्तःकरणं सावयवमस्ति, अतः सावयवपदार्थ एवास्ति । श्रुतावपि "तन्मनो कुरुत्" इत्युक्त्वा अन्तःकरणस्योत्पत्तिः सावयवत्वञ्चापि अङ्गीक्रियते कामसंकल्पविचिकित्सादि सर्वं मन एव कथितमस्ति । श्रुतावपि "धी" [अर्थात् मन] शब्देन वृत्तिरूपं ज्ञानं कथितमस्ति । अतः कामादयो मनस एव धर्माः सन्ति । अतः वृत्तिरपि मनस एव धर्मो भवति । एतत्सर्वं सांख्ययोग-वेदान्तानां दृष्ट्या च मनसः स्वरूपविषये पूर्वैव प्रतिपादितमस्ति ।

वेदान्तपरिभाषायां मनस इन्द्रियत्वाङ्गीकारो नास्ति । तदा अयं प्रश्नः समुदेति, यत् सुखादिप्रत्यक्षस्य साक्षात्कारः कथं भवितुमर्हति, यतोहि साक्षात्कारस्तु इन्द्रियजन्य एव भवति । एतस्याः शंकायाः समाधानं वेदान्त-परिभाषाकारः इत्थम्प्रतिपादयति -

नहीन्द्रियजन्यत्वेन ज्ञानस्य साक्षात्त्वम् । अनुमित्यादेरपि मनो-जन्यतया साक्षात्त्वापत्तेः । ईश्वरज्ञानस्यानिन्द्रियजन्यस्य साक्षात्त्वानापत्तेश्च।[1]

अर्थात् ज्ञानस्य प्रत्यक्षत्वार्थमिन्द्रियजन्यत्वमावश्यकं नास्ति । येषां मते मनः इन्द्रियमस्ति तेषां मते अनुमित्यादिज्ञानान्यपि मनोजन्यान्येव भवन्ति। अतो अनुमित्यादिज्ञानानामपि प्रत्यक्षत्वाङ्गीकारो भविष्यति । ईश्वरस्य ज्ञानं साक्षात्कारो वा प्रत्यक्षं ज्ञानमस्ति, किन्तु तदिन्द्रियजन्यं नास्ति । अतः

---

1. वेदान्तपरिभाषा - पृ० 39-41

ज्ञानस्य साक्षात्कारार्थमिन्द्रियजन्यत्वमावश्यकं नास्ति । इत्थञ्च मनस इन्द्रियत्वाभावेऽपि ज्ञानस्य प्रत्यक्षत्वे काचिद् बाधा नास्ति । अतः सुखादि-ज्ञानस्य साक्षात्कारार्थं मनस इन्द्रियत्वाङ्गीकारो नावश्यकः । साक्षात्कार-प्रयोजकमिन्द्रियजन्यत्वं नैव वक्तुं शक्यते । इन्द्रियजन्यत्वन्तु अनुमित्यादिज्ञाने-ष्वस्ति । एवमनुमितिः अग्निज्ञानेऽपि प्रत्यक्षत्वापत्तिर्भविष्यति, ये ईश्वरस्य ज्ञानं प्रत्यक्षज्ञानत्वाङ्गीकुर्वन्ति, तदिन्द्रियाजन्यत्वात् प्रत्यक्षज्ञानं नैव सेत्स्यति। यद्यपि अद्वैतवेदान्ती ईश्वरज्ञानं मायाजन्यमङ्गीकरोति, तथापि तदिन्द्रिय-जन्यं नाङ्गीकरोति ।

घटपटादिबाह्यवस्तुनः प्रत्यक्षार्थं वेदान्तस्य प्रक्रिया इत्थं वर्तते । वेदान्ते त्रिप्रकारकं चैतन्यमङ्गीकृतं भवति: -

1- विषयचैतन्यम् ।
2- प्रमाणचैतन्यम् ।
3- प्रमातृचैतन्यम् ।

अत्र घटाद्यवच्छिन्नचैतन्यं विषयचैतन्यमित्युच्यते । अर्थात् तच्चै-तन्यं यद् घटस्योपाध्यवच्छिन्नं भवति स एव घटो भवति ।

अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं प्रमाणचैतन्यमुच्यते, अन्तःकरणाव-च्छिन्नं चैतन्यञ्च प्रमातृचैतन्यमुच्यते । एतत्पूर्वमपि चतुर्थाध्याये स्पष्टीकृतमस्ति । यथा तडागस्थं जलं नालिकया निःसृत्य क्षेत्रे प्रविशति, क्षेत्रस्य चतुष्कोणाद्याकारे

---

1. वेदान्तपरिभाषा - पृ० ५४.

च परिणमते, तथैव तैजसमन्तःकरणमपि चक्षुरादिना निःसृत्य बहिर्निर्गत्य घटादि-विषयं व्याप्नोति, घटादिविषयाकारेण च परिणमते । अन्तःकरणस्य परिणाम एवान्तःकरणस्य वृत्तिरुच्यते । अनुमित्यादिस्थलेषु अन्तःकरणवृत्तिः पर्वतस्था-ग्न्यादिदेशे न भवति । यतोहि अग्न्यादेश्चक्षुरादिना सन्निकर्षो न भवति । इत्थञ्च "अयं घटः" इत्यादि प्रत्यक्षस्थले घटादेः घटाकारवृत्तेश्च बहिरेक-स्मिन्नेव देशे अवस्थितिर्भवति । घटावच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यञ्चैतद् द्वयमपि चैतन्यात्मना एकमेव भवति ।

घटादिविषयस्यान्तःकरणवृत्तेश्च विभाजके द्वे चैतन्ये एकदेशाव-स्थिति कारणात् तयोर्भेदो नास्ति । यथा मठाभ्यन्तरीयमाकाशम्, मठाभ्य-न्तरीयञ्च घटावच्छिन्नमाकाशम्, मठावच्छिन्नाकाशान्न भिद्यते, तथैव घटाव-च्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यान्न भिद्यते । इत्थञ्च "अयं घटः" इति प्रत्यक्षज्ञाने यतोहि घटाकारवृत्तेः घटे न संयोगो भवति, घटावच्छिन्न-वृत्त्यवच्छिन्नचैतन्ययोरभेदो जायते । अतो घटज्ञानस्य घटांशे प्रत्यक्षो भवति । सुखदुःखाद्यवच्छिन्न चैतन्यं सदैव नियमेनैकस्मिन् देशे तिष्ठति । अतः सुखादि-प्रत्यक्षे इन्द्रियद्वारेण वृत्तेर्बहिर्गमनस्यावश्यकता नास्ति. "अहं सुखी" इति ज्ञानञ्च जायते । इत्थञ्च घटसंयुक्तमनोभागावच्छिन्न चैतन्यस्य घटस्य अर्थात् घटस्यानन्य-ब्रह्मचैतन्यस्याभेदो जायते, घटत्वावच्छिन्नघटांशे च घटस्य प्रत्यक्षज्ञानं भवति । स्वरूपतो ब्रह्मचैतन्यं न कुत्रापि परोक्षं भवति । न च कदापि स्वापरोक्षत्वं प्रमाणव्यापारम् (वृत्तिरूपं व्यापारम्) अथवा मनोऽपेक्षते, यतोहि ब्रह्मचैतन्यं स्वप्रकाशोऽस्ति । मनोभागावच्छिन्नचैतन्यविषयावच्छिन्नचैतन्येति द्वाभ्यां

वर्णितस्य बौद्धग्रन्थस्य महत्वं नास्ति । अतः एतेषु सर्वेषु प्रमाणेषु मनसो महत्त्वम्, मनसो साधारणकारणता अर्थात् तस्य करणत्वम्, तदीयप्रयोगदानस्य चाप्युल्लेखो भविष्यति ।

प्रत्यक्षप्रमाणे मनसः स्थाननिश्चयानन्तरमनुमानप्रमाणेऽपि मनसो महत्त्वमधिकृत्य ध्यानदानमावश्यकं प्रतीयते । अनुमितिज्ञाने व्याप्तिज्ञानं करणं भवति । परामर्शश्च व्यापारो भवति" धूमो वह्निव्याप्यः" इति वह्निधूमयो-र्व्याप्तिं स्मरति । तत्पश्चात् "अयं पर्वतो वह्निव्याप्यो धूमवांश्च" इति ज्ञानं तस्य पुरुषस्य भवति । एतदेव च नाम परामर्शो भवति परामर्शानन्तरञ्च "पर्वतो-वह्निमान्" इति प्रकारकं ज्ञानमनुमिति पदवाच्यं भवति । व्याप्तिज्ञान-स्मरणार्थं व्याप्तिज्ञानाय चात्ममनसोः संयोग आवश्यकः । व्याप्यधूमस्य च पर्वते तत्त्वस्थापनं ज्ञानं परामर्शो भवति । चक्षुरिन्द्रियेण पर्वे धूमस्य प्रत्यक्षात्मकं ज्ञानं भवति, तत्पश्चाच्च व्याप्तेः ज्ञानं अनयोस्तादात्म्येन च परामर्श उत्पद्यते ।

"यत्र यत्र धूमस्तत्र तत्र वह्नि"रिति व्याप्तिज्ञानमपि मनसः साहा-य्येनैव प्रमाता प्राप्नोति । हेत्वाभासस्य सम्प्रक्रिया वास्तवरूपेण मनस एव व्यापारो भवति ।

[3] <u>उपमानप्रमाणम्</u>

उपमिति ज्ञाने मनसो व्यापारः स्पष्टो भवति । अरण्ये गोसदृशं गवयपदवाच्यं भवति, इति श्रुतवाक्या व्यक्तिः गवयं पश्यति, तदा तमवलोक्य तस्याः व्यक्तेः गोसादृश्यस्य ज्ञानं जायते । इति सादृश्यज्ञानमेवोपमितेः करणं

भवति । एतदनन्तरं "गौ सदृशं वस्तु गवयपदवाच्यं भवति, इत्यतिदेशवाक्यार्थ-स्मरणं तस्य व्यक्तीक्रियते । अतिदेशवाक्यार्थस्मरणमेव व्यापारो ज्ञातव्यः । इत्थञ्च "गवयो नीलगौर्वा गवयपदवाच्यो भवति" इति पदज्ञानं जायते तदेवोप-मिति पदवाच्यं भवति । अस्यां प्रक्रियायामपि अतिदेशवाक्यस्य स्मरणं गो-सादृश्यस्य ज्ञानं मनसः साहाय्यं विनानैव जायते ।

[4] <u>शब्दप्रमाणम्</u>

शब्दज्ञाने पदज्ञानं करणं भवति, पदार्थस्य ज्ञानेतु करणार्थस्य व्यापारो भवति । अर्थात् पदजन्यपदार्थस्मरणमेव स व्यापारो भवति यत्पदज्ञान-व्यापारो भवति । एतस्यामपि प्रक्रियायामपि पदस्य ज्ञानं पदार्थस्य स्मरणञ्च स्वयं करणे भवति । अतो मनसोऽभावेऽनुमित्युपमिति शाब्दज्ञानानि मानसिक्य एव क्रियाः वर्तन्ते । नैवोत्पद्येरन् ।

[5/6] <u>अर्थापत्तिः, अनुपलब्धिप्रमाणञ्च</u>

इत्थञ्चार्थापत्तिप्रमाणमनुपलब्धिप्रमाणञ्चापि मनसः साहाय्येनैवो-
अनुभवज्ञानस्मरणज्ञानञ्चैति मनसःसन्निकर्षेणैवोत्पद्यते ।
त्पद्यते ।

वस्तुतः समग्रदार्शनिकविवेचनं तत्त्वज्ञानञ्च मनसः क्रियायां मनसः सहायतायामेव निर्भरं भवति । मनसोऽभावे किमपि व्यावहारिकं ज्ञानं नोत्पद्यते, अत एव यथा पूर्वं प्रतिपादितं श्रुतावपि चैतत्तथ्यं स्पष्टं प्रतिभाति -

"यस्मान्न ऋते किञ्च कर्म क्रियते ।"

भवति । एतदनन्तरं "गो सदृशं वस्तु गवयपदवाच्यं भवति, इत्यतिदेशवाक्यार्थ-स्मरणं तस्य प्रमातुर्जायते । अतिदेशवाक्यार्थस्मरणमेव व्यापारो ज्ञातव्यः । इत्थञ्च "गवयो नीलगौर्गवयपदवाच्यो भवति" इति यज्ज्ञानं जायते तदेवोप-मितिः पदवाच्यं भवति । अस्यां प्रक्रियायामपि अतिदेशवाक्यस्य स्मरणं गो-सादृश्यस्य ज्ञानं मनस्साहाय्यं विनानैव जायते ।

[4] <u>शब्दप्रमाणम्</u>

शब्दज्ञाने पदज्ञानं करणं भवति. पदार्थस्य ज्ञानमेव करणार्थस्य व्यापारो भवति । अर्थात् पदजन्यपदार्थस्मरणमेव स व्यापारो भवति यत्पदज्ञान-स्यवो करणे भवति । एतस्यामपि प्रक्रियायामपि पदस्य ज्ञानं पदार्थस्य स्मरणञ्च मानसिक्य एव क्रियाः वर्तन्ते । अतो मनसोऽभावेऽनुमित्युपमिति शाब्दज्ञानानि नैवोत्पद्येरन् ।

[5/6] <u>अर्थापत्तिः, अनुपलब्धिप्रमाणञ्च</u>

इत्थञ्चार्थापत्तिप्रमाणमनुपलब्धिप्रमाणञ्चापि मनसः साहाय्येनैवो-त्पद्यते । अनुभवज्ञानस्मरणज्ञानञ्चेति मनःसन्निकर्षेणैवोत्पद्यते ।

वस्तुतः समग्रदार्शनिकविवेचनं तत्त्वज्ञानञ्च मनसः क्रियायां मनसः सहायतायामेव निर्भरं भवति । मनसोऽभावे किमपि व्यावहारिकं ज्ञानं नोत्पद्यते. अत एव यथा पूर्वं प्रतिपादितं श्रुतावपि चैतत्तथ्यं पुष्टं प्रतिभाति –

"यस्मान्न ऋते किञ्च कर्म क्रियते ।"

अर्थात् मनो विना किमपि कर्म कर्तुं न शक्यते । सुषुप्त्यवस्थायां वेदान्ते स्वकारणे मनसो लयोऽङ्गीक्रियते । अतोऽहं पुरिततामाहितमनसो विद्यायां लयकारणात् सुषुप्तेः ज्ञानं योगिनः समाधिज्ञानञ्च "साक्षिभास्यत्व" मङ्गीकृतं वर्तते ।

<u>प्रमा:</u>

प्रमाणैरुत्पद्यमानं यथार्थज्ञानं सामान्यतया "प्रमा" उच्यते । कथं प्रत्यक्षादिप्रमाणेषु मनसो व्यापारः कार्यं करोति प्रत्यक्षादि प्रमाजन्यज्ञाने च मनसः किं महत्त्वं किञ्च योगदानमस्ति ? इति संक्षेपेणोपरि प्रतिपादितमस्ति ।

<u>स्मृतिज्ञानम्</u> -

स्मृतिज्ञानस्य लक्षणं "संस्कारजन्यं ज्ञानम्" इत्यस्ति । मानवो यदा वस्तूनामिन्द्रियादि साहाय्येन प्रत्यक्षमनुभवति, तदा तस्य मानसपटले तज्ज्ञानेनैकप्रकारकः संस्कारः [इम्प्रेशन] उत्पद्यते । केनापि कारणविशेषेण यदा अयं संस्कार उद्बुद्धो भवति, तदा पूर्वप्रदर्शितपदार्थानां स्मरणज्ञानमुत्पद्यते ।

मनोविज्ञानिकदृष्ट्या स्मृतेः महत्त्वमधिकं वर्तते । अनुभवात्मक-ज्ञानानन्तरं मानवस्य स्मृतिशक्तिरेव वर्तते, या तस्य संस्कारद्वारा अतीताना-गतपरोक्षवस्तूनां मानसं चित्रमुपस्थापयति । बालकः स्वमातरं पितरञ्च दूरदेशे स्मरति । यात्रिणां यात्रावृत्तान्तं पठित्वा स्वानुभूतवस्तूनां स्मृतिः पाठकानां पुरस्ताज्जायते । छान्दोग्योपनिषदि एतस्य स्मरणज्ञानस्य महत्त्वमतीवस्पष्ट-रूपेण वर्णितमस्ति -

स्मरो वावाकाशाद्भूयः । तस्माद् यद्यपि बहवः आसीरन् स्मरन्तो नैव ते कंचन शृणुयुः । न मन्वीरन् । न विजानीरन् । यदा वावते स्मरेयुः अथ शृणुयुः अथमन्वीरन् अथ विजानीरन्, स्मरेण वै पुत्रान्विजानाति, स्मरेण पशून्, स्मरमुपास्स्वेति।

इत्यस्मिन्नेवमुक्तं स्मरणं ब्रह्मत्वेन उपासनाया आदेशः प्रदत्तो

ऽस्ति ।

पाश्चात्त्यमनोविज्ञाने यावत्पर्यन्तं मनसः स्वरूपं मनसः स्वरूपलक्षणस्य स्थिरं न भवति, तावत्पर्यन्तमनुभवात्मकज्ञानस्य स्मरणात्मकज्ञानस्य च स्पष्टतया व्याख्यानेव भवितुमर्हति, किन्तु एतस्यायमर्थो नास्ति यद् पाश्चात्त्यतत्त्वचिन्तकेषु प्रत्यक्षज्ञानस्य अथवा स्मृतिज्ञानस्य च विचारो नाभूत् । पाश्चात्त्यमनोविज्ञानस्य विषये कतिपयविचाराः अधस्तात् प्रस्तूयन्ते -

मैक्डूगलमहोदयः कथयति यत् "प्रत्यक्षीकरणम्, वर्तमानवस्तूनां चिन्तनमस्ति । यावत्पर्यन्तमिदं वस्तु वर्तमानमस्ति यावच्च तत आगच्छन्नुत्तेजकः गतिरिन्द्रियाणि प्रभावयति ।

Perceiving is the thinking of present objects. An object is present so long as an energy (stimulus) comming from it affects our sense organs.

स्टैगलरमते "इन्द्रियद्वारा बाह्यवस्तूनां घटनानां वा ज्ञानप्राप्त्यर्थं प्रक्रिया प्रत्यक्षीकरणमस्ति ।"

सैलामते - Perception is the immediate apprehension of an object on all the sense organs by way of sensation.

बोरिंग तथा अन्यान्यविदुषां मते - Perception is the first event in the chain which leads from the stimulus to action.

इत्थञ्च प्रत्यक्षीकरणमेका मानसिकीप्रक्रिया वर्तते, यस्यां व्यक्तिः संवेदनानुभवानन्तरं पूर्वानुभवाधारेण तत्र शीघ्रमेवार्थं संयोजयति । अन्येषु शब्देषु "प्रत्यक्षीकरणं सा मानसिकीप्रक्रिया वर्तते यया व्यक्तिः ज्ञानेन्द्रियाणामुत्तेजक-वातावरणे समुपस्थितवस्तुनामुत्तेजकानाञ्च शीघ्रमेव ज्ञानं प्राप्नोति" । यदा व्यक्तेः पुरस्तात् कश्चनोत्तेजकः [इमिडियेट] समुपस्थितो भवति, तदा तेन प्रभावितः सन् ज्ञानेन्द्रियेषु स्नायुप्रवाहः समुत्पद्यते । तत्पश्चादयं स्नायुप्रवाहः व्यक्तेः मस्तिष्कस्य केन्द्रे गच्छति । फलस्वरूपं व्यक्तेः संवेदना भवति । शीघ्रमेव तेषां संवेदना प्रत्यक्षीकरणे परिवर्तिता भवति, व्यक्तिश्च संवेदनानुभवति उत्तेजक-ज्ञानं च करोति । इत्थमर्थसंयुक्तसंवेदनैव प्रत्यक्षीकरणमित्युच्यते ।

पाश्चात्त्यमनोविज्ञानस्य प्रत्यक्षीकरणस्य मानसिकक्रियायाः विश्लेषणे कृते सति निम्नाः स्तराः प्राप्यन्ते -

1- वस्तुनोऽथवोत्तेजकस्योपस्थितिः ।

2- ज्ञानेन्द्रियाणामुत्तेजकैः प्रभावितकरणम् ।

3- ज्ञानेन्द्रियैः स्नायुप्रवाहाणामुत्पादनम् ।

4- स्नायुप्रवाहाणां मस्तिष्ककेन्द्रे गमनम् ।

5- संवेदनायामर्थसंयोजनम् ।

6- प्रत्यक्षीकरणम् ।

उपर्युक्तानेषु दृष्टिपातेनेदं स्पष्टं जायते यत् एतानि मतानि मनो-विज्ञानस्य शरीरविज्ञानस्य चाधारेण निर्धीयते । किन्तु महत्वं प्रश्न उपस्थापितो

श्रोत्रादयः यथा रूपवतां वस्तूनामुत्तेजके सति ज्ञानेन्द्रियेषु स्नायुप्रवाहः समुत्पद्यते तथैव गन्धवद्वस्तूनामुत्तेजके सत्येव नासिकेन्द्रिये स्नायुप्रवाहः समुत्पद्यते । स्नायोर्द्वयोरप्यनयोः अर्थाद्रूपस्य प्रत्यक्षज्ञाने गन्धस्य च प्रत्यक्षज्ञाने च प्रत्यक्षीकरणस्य हेतुभूतं वस्तु एकमेवास्ति अर्थाद्द्वयोः स्नायुप्रवाह एव प्रत्यक्षीकरणस्य कारणमस्ति, तदा मस्तिष्के एकेन स्नायुप्रवाहेण गन्धस्यान्येन स्नायुप्रवाहेण च रूपस्य ज्ञानं कथमुत्पद्यते ? उत्तेजकानुसारं स्नायुप्रवाहस्तु चक्षुरादिमार्गादपि प्राप्तुं शक्यते । अतो ज्ञानेन्द्रियेषु विभक्तेरस्य कारणं किमस्ति ? इत्यादिप्रश्नानामुत्तरमथवा विस्तृतो विचारः सर्वमत्र पाश्चात्त्यमनोविज्ञाने नोपलभ्यते । प्रत्यक्षीकरणे संवेदोत्तेजनोत्पद्यते उत्तेजनया च क्रिया अपि भवतीति नैव सम्भाव्यते । चिन्तानिमग्नव्यक्तेः चक्षूंषि निमीलितानि भवन्ति । वस्तुतः प्राप्तोत्तेजना अपि तत्र गच्छति, पुनरपि च व्यक्तेः बाह्यवस्तूनां प्रत्यक्षीकरणं नैव जायते । इन्द्रियमनसोश्च सम्बन्धः कथं भवति ? मनः इन्द्रियैः भिन्नः पदार्थोऽस्ति अभिन्नो वा ? स्नायुसंस्थानम्, यस्य केन्द्रांशः मस्तिष्कोऽपि वर्तते, किमेतेन मनो भवति ? अथवा मनसोगतिविधिसम्पादनार्थं स्नायुसंस्थानं मस्तिष्कञ्च केवलमुपकरणमात्रमेवास्ति ? एवं एतेषां सर्वेषां प्रश्नानां समाधानं पाश्चात्त्यमनोविज्ञाने नैव किमपि उपलभ्यते ।

भारतीयमनोविज्ञाने प्रत्येकमिन्द्रियस्योत्पत्तिः पृथ्व्याकाशादिभिन्न-भिन्नभूतैः प्रतिपादिता वर्तते । अतो यदिन्द्रियं येन भूतेनोत्पन्नमस्ति, तत्तस्यैव भूतस्य विशेषगुणं गृह्णाति । मनश्च ज्ञानेन्द्रियैः सर्वथा भिन्नः पदार्थोऽस्ति, अनेकेन्द्रियाणाञ्च भिन्नभिन्नविषयैः सह सन्निकर्षे जातेऽपि एकदैव तदस्य ज्ञानं नोत्पद्यते, इति तथ्यं स्पष्टयति यद् आत्मेन्द्रियार्थसन्निकर्षे अन्यथा युगपद्ज्ञानं नोत्पद्यते.

स्वप्ने मानवोऽनेकवस्तूनां तदीयैरङ्गरूपैः प्रकाशे च प्रत्यक्षं करोति । स्वप्नावस्थायां न तु बाह्योत्तेजकवस्तूनां सत्ता भवति, न च ज्ञानेन्द्रियेषु संवेदना द्वारा स्नायुप्रवाह एव वा जायते, तथापि वस्तूनां स्पष्टतया तथैव प्रत्यक्षं ज्ञानं जायते यथा च जाग्रदवस्थायां भवति । अतः संवेदना, उत्तेजकवस्तुना स्नायुप्रवाहद्वारा च प्रत्यक्षीकरणस्य या व्याख्या मनोविज्ञाने कृता आसीत्, सा स्वप्नादितथ्यानामालोके अनुपपन्नत्वात् धराशायी इव जायते ।

पाश्चात्त्यमनोविज्ञाने मनोव्यापारस्य बहुधा वर्णनमुपलभ्यते, किन्तु मनः किं वस्तु अस्ति ? एतस्य स्वरूपञ्च कीदृक् ? इन्द्रियैः सह मनसः कथं सम्बन्धो जायते, पुनश्च कथं मनः ज्ञानं प्राप्नोति, इत्यादि समग्रप्रक्रिया अव्याख्यातैव तिष्ठति । सेन्सरीनर्व [ज्ञानवाहिन्यो नाड्यः] मोटरनर्व [क्रिया-वाहिन्यो नाड्यः] मस्तिष्को मस्तिष्कस्य विभिन्नकेन्द्रं च, यन्मानवस्य विभिन्नज्ञानानां केन्द्रं ज्ञापितं वर्तते, येषाञ्च केन्द्राणामभावे मानवस्य शरीरस्यानेकाः क्रियाः नैव सम्पन्नाः स्युः, इत्यादि परीक्षणसिद्धं तथ्यमस्ति, यत्र भारतीयमनोवैज्ञानिकस्य ध्यानदानमावश्यकमस्ति । तदैव च पाश्चात्त्यमनोविज्ञानं भारतीयमनोविषयकतत्त्वज्ञानेन चिन्तनधैर्ये या प्रेरणा लब्धुं शक्यते, ततो लाभो ग्रहीतव्यः । पाश्चात्त्याध्ययनशीलवैज्ञानिकैः शरीरस्य तु मस्तिष्कनाडीनां मस्तिष्ककोषाणां ग्रन्थीनाञ्च यन्त्रसाहाय्येन सूक्ष्माध्ययनं कृतमस्ति, यद्भारतीयमनोवैज्ञानिकानां कृते मनस्तत्त्वस्याध्ययनकाले परिहार्यमस्ति । ज्ञानोपलब्धौ ज्ञानस्य विस्तारे च पूर्वपश्चिम इव नैव केनापि भेदेन भवितव्यम्, अस्मिन् क्षेत्रे च येनापि वातायनेन अनुसन्धानप्रक्रियाणां साहाय्येनालोकः प्राप्तो भवेत्, स ग्रहीत

(1) यथार्थानुभवः, (2) अयथार्थानुभवश्च । यथार्थानुभवस्यैव द्वितीयं नाम प्रमा अस्ति । एतस्य प्रमाज्ञानस्य वर्णनं पूर्वमेवाभूत् । समस्त प्रमाणानां साहाय्येन यद्यथार्थं ज्ञानमुत्पद्यते तस्य निरूपणं पूर्वमेवाभूत् । इदानीमयथार्थानुभवस्या प्रमाज्ञानस्य वा येषु मनतः महत्त्वं मनसः कार्यकलापानाञ्च वर्णनमग्रे भविष्यति । अयथार्थानुभवस्य लक्षणमित्थमस्ति – तदभाववति तत्प्रकारकोऽनुभवो यथार्थः । यथा शुक्तौ इदंरजतमिति ज्ञानम् ।[1]

ज्ञानं यथार्थानुभवो भवेद यथार्थानुभवो वा किन्तु ज्ञानोत्पत्त्यर्थ मनसो साधारणकारणता उभयथापि स्वीकृता वर्तते । अप्रमाज्ञानान्तर्गतं प्रमा – ज्ञानादिभिन्नमन्यत्समस्तमपि ज्ञानमन्तर्भूतमस्ति । यथा– (1) भ्रमज्ञानम्, (2) विपर्ययज्ञानम्, (3) संशयज्ञानम्, (4) स्मृतिज्ञानम्, (5) तर्कज्ञानादियथार्थानुभवाद भिन्नमेव न्यायमते स्वीक्रियते । ज्ञानस्य प्रामाण्याप्रामाण्यविषये अनेके दार्शनिकाः मतभेदाः वर्तन्ते । किन्तु एतेषां मतभेदानां निरूपणमेतस्य शोधप्रबन्धस्य विषयो नास्ति । अतः केवलमेतावदेवावलोकनीयं वर्तते, यत्प्रमातः इतरज्ञानेषु मनसः किं प्रकार्यं वर्तते ।

भ्रमज्ञाने विपर्ययज्ञाने वा विषयेण सहेन्द्रियस्य संयोगो भवति, इन्द्रियेण च स मनसः संयोगानन्तरमात्मनि ज्ञानमुत्पद्यते, किन्तु अन्धकारादिन्द्रियादिदोषकारणाद्वा प्रमाज्ञानं नोत्पद्यते, अपितु भ्रमसंशयादि अप्रमाज्ञानमेवोत्पद्यते । इन्द्रियाणामसामर्थ्यमपि एतत्प्रकारको दोष एव वर्तते ।

---

1. तर्कसंग्रहः – पृ0 23.

सांख्यकारिकायामत्यधिकदूरत्वात्यधिकसामीप्यमिन्द्रियाणामसमर्थता चित्तस्यास्थिरता विषयस्य सौक्ष्म्यं मध्ये व्यवधानमभिभवः सादृश्यमित्यादि हेतुभिर्वस्तूनामनुपलब्धिरर्थात् ज्ञानं नैव जायते इति प्रतिपादितमस्ति । एतैः कतिपय हेतुभिर्न केवलं वस्तूनामनुपलब्धिरेव जायते, अपितु वस्तूनां विरुद्धज्ञानमथवा अप्रमाज्ञानमपि भवति । एतैर्यैः हेतुभिरप्रमाज्ञानमुत्पद्यते ते हेतवो दोषान्तर्गताः मन्यन्ते । यदि चक्षुषि पीतिमारोगो जायते तदा शंखस्य यथार्थज्ञानाभावात् "पीतः शंखः" इति अप्रमात्मकं ज्ञानमुत्पद्यते । चित्तस्यास्थिरताकारणात् कस्यापि वस्तुनो द्विकोटिकमथवा संशयज्ञानमुत्पद्यते ।

पाश्चात्त्यमनोविज्ञाने आविष्कृतयन्त्रसाहाय्येनेन्द्रियाणां कार्यक्षमता बहुदूरमपसारयितुं शक्यते, किन्तु इन्द्रियस्य दूषितकारणात् रोगग्रस्तत्वाद् वा चित्तस्यास्थैर्याद्वा एतानि यन्त्राण्यपि यथार्थज्ञानोत्पादने नैव क्षमन्ते ।

अन्तःकरणे संस्कारविशेषस्य प्राबल्यात् स्वस्थेन्द्रियस्य सन्निकर्षेणोपस्थापितं ज्ञानमपि अप्रमायाः स्वरूपं धारयति । उदाहरणार्थमन्तःकरणे सर्पदण्डादीनां वा संस्कारेऽन्धकारदोषकारणात् रज्जौ सर्पस्य दण्डस्य वा भ्रममुत्पादयति । अप्रमाज्ञानस्य भ्रमज्ञानस्य वा विषये न्यायवैशेषिकमीमांसावेदान्तादिदर्शनानां व्याख्याः भिन्नाः-भिन्नाः वर्तन्ते । अन्यथाख्यात्यख्यात्यनिर्वचनीयख्यात्यादिनामभिः एतेषु दर्शनेषु भ्रमज्ञानोत्पत्तिविषये अनेकप्रकारकाः स्थापनाः कृताः वर्तन्ते । पूर्वमीमांसावेदान्तदर्शनस्य ज्ञानस्य स्वतः प्रामाण्यमङ्गीकरोति, दोषकारणादेव प्रमाज्ञानोत्पादने इन्द्रियमनसोः करणता स्वीकृता वर्तते । समस्तमप्यप्रमाज्ञानं प्रमाज्ञानेन बाध्यते किन्तु प्रमाज्ञानमत एव प्रमाज्ञानमुच्यते – यतो हि

एतस्य कालान्तरे कदापि बाधो न भवति । यथा प्रमाज्ञानार्थमबाधितत्वमा-
वश्यकमस्ति, तथैव भ्रमज्ञानार्थमपि बाधितत्वमावश्यकमेव भवति । उभय-
प्रकारज्ञानोत्पत्तौ इन्द्रियमनसी असाधारणकारणस्य कार्यं कुरुतः । अत एव ते
ज्ञानोत्पत्तेः बाह्यकरणमन्तःकरणञ्चोच्येते ।

एवं यदि केनापि कारणेन मनः स्वीयं कार्यं न कुर्यात्, इन्द्रि-
याणि च विषयेण सह सम्पर्कं नैव स्थापयेयुः, तदा सामान्यतया व्यावहारिकं
ज्ञानं नैवोत्पद्येत् । उदाहरणार्थं सुषुप्त्यवस्थायामथवा क्लोरोफार्मादि
औषधिप्रयोगेण च मनसः क्रियाशक्तिः परिसमाप्यते, घटपटादीनां व्यावहारिकं
ज्ञानञ्च तस्यामवस्थायां नोत्पद्यते । अत एव वेदान्ते सुषुप्त्यवस्थायां क्लोरो-
फार्मादिप्रयोगकाले चाज्ञानं साक्षिभास्यमुच्यते । अत एव जागरूके सति चेतना-
वस्थायां समागतायां वा व्यक्तेरिदं संस्मरणं भवति – यदेतावत्कालपर्यन्तं मदीयं
किमपि ज्ञानं नासीत्, किन्तु किञ्चिदपि ज्ञानानास्ति – इति ज्ञानाभावेति
ज्ञानस्य स्मरणं तदैव सम्भाव्यते, यदा सुषुप्त्याद्यवस्थायामुक्ताज्ञानस्य प्रत्यक्षा-
नुभवो भवेत् । अतो वेदान्तस्यैतत्सिद्धान्तस्थापनायाः कालेऽपि साक्षी आत्मा
वा स्वयम्प्रकाशोऽस्ति, घटपटादेः ज्ञानाभावस्य प्रत्यक्षमनुभवत्येवेति सर्वथा
युक्तिसंगतमस्ति ।

योगस्य निर्विकल्पकसमाधावपि योगस्य बाह्यविषयाणां ज्ञानं
नैव भवति । अस्यामवस्थायामपि स्वकारणे मनसो लयः स्वीकृतो भवति । घट-
पटादेः ज्ञानाभावस्य साक्षिभास्य एवोच्यते, किन्तु जागरणकाले सम्पूर्णं

व्यावहारिकं ज्ञानमुत्पादयितुं मनसः करणता स्वीकरणीया भविष्यति । एतत्पूर्वमपि प्रतिपादितमस्ति यद् ज्ञानं यथार्थानुभवो भवेदयथार्थानुभवो वा भवेदिन्द्रियमनो विना कथम्प्रकारकमपि व्यावहारिकं नैवोत्पद्येत् । अतो मनसो साधारणकारणता मनसो महत्त्वञ्च स्पष्टं सिध्यति ।

॥ इति षष्ठोऽध्यायः ॥



1. साधनापक्षो मनश्च:-

एतस्य शोधप्रबन्धस्य प्रारम्भे स्वैतत्प्रतिपादितमस्तियत् समस्त-भारतीयतत्त्वदर्शनानामुद्देश्यमात्यन्तिकदुःखनिवृत्तिः शाश्वतसुखप्राप्तिरेव वर्तते । केवलं "ज्ञानं ज्ञानाय" इति पाश्चात्त्यमान्यताया अत्र भारते देशे वस्तुतः कोऽप्यर्थो नास्ति । तत्प्रयोजनं विना कोऽपि प्रेक्षावान् कस्यापि तथ्यस्य प्रतिपिपादयिषामपि न करोति । निरुद्देश्यमानवप्रयत्नः निरर्थकः, अस्वाभाविकः, केवलमेकप्रकारकोन्मादमात्रं भवति । पाश्चात्त्यैऽपि उपयोगितावादसिद्धान्तोदयकारणात् "ज्ञानं ज्ञानार्थं इति मन्तव्यस्य निराकरणमात्रमेवास्ति ।

अनुभवाधारेणेदमेकं प्रत्यक्षसिद्धमनुभूतञ्च वस्तु वर्तते यदस्मिन् संसारे प्राणिनां सर्वा इच्छाः नैव पूर्यन्ते । इच्छायाः अनेन विघातेन स्वीय सीमायाः अपूर्णतायाश्चानुभवेन संसारस्य प्राणिनः आत्मानं दुःखिनमनुभवन्ति । भारतीय-तत्त्वचिन्तकाः पुरुषार्थचतुष्टयस्य मान्यतां स्थापयित्वा धर्मार्थकाममोक्षाख्यान् चतुर्विधान् पुरुषार्थान् जीवनस्य लक्ष्यं कथयन्ति । समस्तमपि भारतीयमास्तिक-दर्शनं सुखस्योपादेयतां दुःखहेयताञ्च स्वीकरोति, चार्वाकनास्तिकदर्शनमपि एत-स्मात्लक्ष्यान्न बहिर्भवति ।

पाश्चात्त्यैऽपि जगति अनुभवाधारितविचारकरणे उपरि कथित-मतेन विरोधो न भवति । आत्मसन्तोषः सर्वेषां लक्ष्यमस्ति । वैज्ञानिकानां

तत्त्वमनुसन्धानम्, दार्शनिकानां समस्तचिन्तनं तर्कनीतिविभागस्य स्वकार्यकौशलं चावगाहमाना अपि स्व-स्वजिज्ञासया प्रेरिताः सन्तः ज्ञानस्य समभावं निरा-कर्तुं सततं संलग्नाः सन्ति, यज्ज्ञानं विना तेषामात्मपरितुष्टिर्न भवति । जिज्ञासायाः तत्प्रेरणया मानवः स्वविभिन्नप्रकारकपरितुष्ट्यर्थं शारीरिक-मानसिकसमस्तक्रियाकलापांश्च करोति. विविधप्रकारकयन्त्राणामाविष्कारं कृ-त्वातैः साहाय्यं गृह्णाति । यदि गाम्भीर्येण चिन्त्यते मानवस्य कार्येषु च विस्तरेण दृष्टिर्दीयते, तदा मानवेच्छामूले निम्नलिखितानि तथ्यानि दृष्टि-गोचराणि भवन्तिः -

﹙1﹚ <u>शाश्वतजीवनममरत्वाकांक्षा वा</u>

सर्वे प्राणिनो विश्वस्मिन् अधिकादधिकसमयपर्यन्तं स्थितिं वाञ्छन्ति । सदैव तेषामयमभिलाषो भवति यत् तेषामियं सत्ता आनन्दमयी भवेत्, दुःखमुक्ता च भवेत् । प्रायोऽवलोक्यते, यत् कुष्ठरोगस्तथान्यरोगपीडिता-वायस्य चिकित्सान सम्भाव्यते, तथाभूताः जना अपि ये यदा कदाचित् एतद् कथयन्तो भवन्ति यत् "एतस्माज्जीवनात् मरणमेववरम् । तेऽपि न जीवने उदासीनाः अपितु जीवनस्य दुःखपूर्णतां च धृत्वैव तेषामन्तस्तोषो वर्तते । श्रुतिरपि "मृत्यो-र्माऽमृतं गमय" इत्युक्त्वा एतदेव तथ्यं संकेतयति ।

﹙2﹚ <u>असीमपूर्णज्ञानस्य वाकांक्षा:</u>

सर्वेऽप्येतदेव वाञ्छन्ति, यत् सर्वविषयाणां ज्ञानं मम भवेत् । ज्ञानक्षेत्रस्येयमपूर्णता तेषां सह्यं नास्ति । ते ज्ञानं तथाकथितत्वेन विकास्य यथा-

तःभताः सर्वेषां विवर्द्धयिष्णो भवन्ति । श्रुतावपि "तमसो मा ज्योतिर्गमय" इत्युक्त्वा एतदेव तथ्यं प्रकटितमस्ति ।

(3) अनन्तानन्दस्या (सुखस्या)काङ्क्षा

मानवस्य यदि चिरन्तनजीवनमपि प्राप्तं भवेत्, तस्य च ज्ञानस्य विस्तृतं भाण्डागारमपि प्राप्तं भवेत्, तदाऽपि तस्य तृप्तिर्न जायते । एतद्-द्वयातिरिक्तं तस्यानन्दसुखयोरपि आकाङ्क्षा जायते निरानन्दजीवनसत्ता-निरानन्दज्ञानञ्च न केवलं तस्या स्वीकृतमेव भवति, अपितु स तत् भारस्वं हेयमपि च जानाति । अत आनन्दस्य इयं सहजाकांक्षा तत्प्राप्तये च सर्वेषामुपायानां चेष्टामानवे स्वाभाविकी भवति, किन्तु उपरि प्रतिपादितया आकाङ्क्षात्रय-पूर्त्याऽपि मानवस्य परितुप्तिर्न सम्भाव्यते । जगद्गुरुभारतीकृष्णतीर्थमहाराजो-ऽपि सत्यमेवोक्तवान् -

Suppose now, we have got atll these things - Immortal life, all pervading knowledge and unbounded happiness all round. Are we satisfied there with[1] ?

अतो मानवः एतदाकाङ्क्षातिरिक्तं किञ्चिदन्यपि वाञ्छति । यथा

(4) स्वातन्त्र्यस्याकाङ्क्षा

शाश्वतानन्दादुपाकाङ्क्षाणां तृप्तौ सत्यामपि यावत्पर्यन्तं मानवः

---

1. ब्रह्मसूत्रशांकरभाष्य, एडिट - अनन्तकृष्ण शास्त्री, फोरवर्ड - एच० एस० भारतीकृष्णतीर्थ - पृ० +6 17.

सर्वप्रकारबन्धनैः सर्वथा विमुक्तो न भवति - तावत्पर्यन्तं तस्य परितृप्तिरपि नैव जायते । भारतीयदर्शनेषु एतद् स्वातन्त्र्यम् अर्थात् सर्वप्रकारबन्धनैः मुक्ति-र्मोक्ष इत्युच्यते । एतच्चतुर्विधाकाङ्क्षाणां परितृप्त्या सहैव मानवस्य एका-काङ्क्षा एवमेव तिष्ठति । यथा च जगद्गुरुणाप्युक्तम् - यदि अस्माभिः स्व-भावनानाम् स्वमहत्त्वाकाङ्क्षाणां सम्यक्तया लक्ष्ये न च विश्लेषणं क्रियते तदा सच्चिदानन्दमयमीशस्य प्राप्त्या अपि मानवस्य हृदयं नैव परितृप्यति । सः कस्याप्यन्यस्य वस्तुनोऽन्वेषणे रतो भवति, तच्च वस्तु इदमस्ति -

[5] ईशनस्याकाङ्क्षा:

सर्वेऽपि प्राणिनः कस्याप्यन्यस्याधीनतामनुभवितुं नैव वाञ्छन्ति । नैतावदेव, अपितु सः समग्रविश्वोपरि स्वीयमैश्वर्यपूर्णं शासनं स्थापयितुं वाञ्छति । वेदान्तशास्त्रेषु प्रत्येकं प्राणी सत् चित् आनन्दं, मोक्षमीशनञ्चेति एताः पञ्चा-काङ्क्षाः पूरयितुं वाञ्छति । इत्त्थं कथमिति प्रश्नो यदि कोऽप्युपस्थापयेत् ? मानवः कथं शाश्वतजीवनममरत्वं वा वाञ्छति ? कथं मृत्युं न वांछति ? कथं समग्रं ज्ञानमेव वाञ्छति, सीमितं ज्ञानमज्ञानं वा कथन्नाकांक्षते ? कथं मानवः आनन्दमेवोपाददाति, कथञ्च स दुःखमुपादेयमिति नाङ्गीकरोति ? कथं सः समग्रबन्धनैः मुक्तिं वाञ्छति, अर्थात् मोक्षमभिलषति ? बन्धनेषु बन्धनं स कथं न स्वीकर्तुमिच्छति ? एतेषां सर्वेषां प्रश्नानां समाधानमेतदेवास्ति - यद् यतोहि जीवो यत्येश्वरस्यांशभूतो वर्तते, तदीयमेव स्वरूपं ग्रहीतुमभिलषति । ईश्वरस्य स्वरूपं सत्, चित्, आनन्दरूपम्, नित्यमुक्तस्वरूपमीशनमेव चास्ति । अतो जीव-स्यापि तदाकांक्षा एतस्मिन्नीश्वरे प्रतिष्ठितमिव भवति - यद् वस्तुतः तस्य

स्वकीयमेव रूपमस्ति । अर्थात् जीवः सत्स्वरूप चित्स्वरूपानन्दस्वरूपयुक्तस्वरूपे-
श्वरस्वरूपेण च भवितव्यम् । सः स्वीयेतस्मिन् स्वरूपे प्रतिष्ठितं भवितुं वाञ्छति ।

1. <u>साधनायाः प्रयोजनम्</u>

उपरि त्वम्पदवाच्यस्य जीवस्य तत्पदवाच्यस्येश्वरस्य च स्वरूपं
लक्षणञ्च संकेतितमस्ति इदमपि प्रतिपादितमस्ति, यत् जीवः स्वीयेतस्मिन्नेव
स्वरूपे अवस्थितिं वाञ्छति । अतः सम्पूर्णसाधनानां तात्पर्यमिदं स्वरूपस्थिति
प्राप्तिरथवा एतत्स्वरूपस्थितिप्राप्त्यैतस्मिन् पथि प्रचलनस्य प्रवृत्तिरस्ति, येन
सः ईश्वरस्य सान्निध्यलाभं कृत्वा स्व~~X~~पूर्णां संपूर्णतानां परिसीमानां पारि-
क्रमणं कृत्वा बन्धनान्मुक्तः सन् आनन्दस्वरूपे अवस्थितो भवेत् ।

मानवः शरीरमनआत्मनां समष्टिभूतो वर्तते । अतः शरीरं
मनश्च तथाभूतमुपकरणमस्ति यत् साधनार्थं प्रयुज्यते । शरीरस्य साधनाशरीरस्य
स्वास्थ्यमस्ति । आयुर्वेदे दोषाणां साम्यं स्वस्थशरीरस्य लक्षणं ज्ञापितमस्ति ।
महाकविः कालिदासोऽपि "शरीरमाद्यं खलु धर्मसाधनम्" इत्युक्त्वा स्वस्थ-
शरीरस्य महत्त्वं स्वीकृतवान् । छान्दोग्योपनिषदः प्रारम्भे "ॐ आप्यायन्तु
ममांगानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि" इत्युक्त्वा
साधनार्थं सर्वप्रथमं स्वस्थशरीरस्य महत्त्वं बलिष्ठं भवति, शरीरस्य च सर्वाणि
अंगानि वाक्प्राणौ सर्वाणीन्द्रियाणि च बलवन्ति भवन्तु इति प्रार्थना कृता वर्तते ।

---

1. ब्रह्मसूत्र-शांकरभाष्यम्, एडि- अनन्तकृष्णशास्त्री, फोरवर्ड- एच0 एस0
भारतीकृष्णतीर्थ - पृ0 27.

शरीरस्य पश्चात्साधनायाः अन्योपकरणं मनोऽथवा अन्तःकरणमेवास्ति । आत्मनश्च नित्यशुद्धबुद्धस्वभावकारणात् साधनाक्षेत्राद् बहिर्भूताः स्थापिताः सन्ति । सर्वप्रकारकसाधनानां तत्त्वदर्शनस्य दृष्ट्या द्वयोर्भागयोः विभाजनं कर्तुं शक्यते -

(अ) अद्वैतमूलकसाधना ।

(ब) द्वैतमूलकसाधना ।

(अ) अद्वैतमूलकसाधना

अद्वैतमूलकसाधनायामेकमेवतत्त्वं (निर्विशेषब्रह्म) मूलेऽस्ति । अतः परमार्थदृष्ट्या उपास्योपासकभावस्य कथम्प्रकारिकायाः प्रवृत्तिमूलकसाधनायाः आवश्यकता नास्ति, यतोह्युपास्योपासकभावस्य प्रवृत्तिमूलकसाधनायाः सर्वेषां बन्धनानां सर्वथा निराकरणमभिन्नभावस्योपलब्धिर्न भवति । यतो हि मोक्षः एको नित्यपदार्थोऽस्ति, स च नित्यपदार्थ एव सत् चिदानन्दरूपकारणात् ब्रह्मैवास्ति परमार्थतः च (जीवो ब्रह्मैव नापरः) अर्थात् जीवे ब्रह्मणि च वस्तुतः कश्चन भेदो नास्ति । जीवोऽविद्या (कारणात्) आत्मानं ससीमात्मकव्यक्तरूपेण चानुभवति, किन्तु श्रुतेः "तत्त्वमसि" इत्यादिमहावाक्यानामर्थे विचारिते सति पुनः कथम्भूतस्यापि विधिमूलकस्य शास्त्रमूलकस्य कर्त्तव्यस्य वार्ता नैव जायते । अत एव भगवान्शंकराचार्योऽपि अकथयत् -

"वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिः ।[1]
नानुमानादि प्रमाणान्तरनिर्वृत्ता ।"

---

1. ब्रह्मसूत्रशांकरभाष्यम् - 1/1/2.

अर्थाद् ब्रह्मावगतिः [अर्थाद्ब्रह्मणो ज्ञानम्] "तत्त्वमसि" इत्यादिमहावाक्यार्थ-विचारद्वारा निश्चये सति पूर्यते । अनुमानादिना केनाप्यन्येन प्रमाणान्तरेण ब्रह्मणोऽवगतिर्न भवति ।

वेदान्तवाक्याविरोधिनां सर्वेषां प्रमाणानां श्रुतीनाञ्च सहायक-तर्कवाक्यार्थग्रहणस्य दृढतार्थं सहकारितयोपादानं स्यात् । नैतदद्वैतवेदान्तं विरु-णद्धि । धर्मजिज्ञासायां यद्यपि श्रुत्यादिरेवैकमात्रं प्रमाणमस्ति, किन्तु ब्रह्म-जिज्ञासायां न केवलं श्रुत्यादिकमेव प्रमाणमस्ति, अपितु जीवन्मुक्तव्यक्तीनामनु-भवादयोऽपि यथासम्भवं प्रमाणं सन्ति । ब्रह्मज्ञानस्य परिसिद्धिः साक्षात्कारेऽनुभवे एव वा जायते, यतो हि ब्रह्मज्ञानमद्वैतभूतं वस्तु ब्रह्मविषयकं भवति ।

न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम् । किं-तु श्रुत्यादयोऽनुभवादयश्च यथा संभवमिह प्रमाणम्, अनुभवावसानत्वाद् भूतवस्तु-विषयत्वाच्च ब्रह्मज्ञानस्य[1] ।

अतः आत्मानुसंधानमेव वेदान्तस्य एकमात्रचरमसाधना भवति । ब्रह्म-ज्ञानद्वारैव अज्ञाने निवृत्ते सति पुरुषः "अहं ब्रह्मास्मि" इति साक्षादनुभवति, ब्रह्मणा सहाभेदकारणाच्च स्वसच्चिदानन्दस्वरूपे प्रतिष्ठितो भवति । अतोऽद्वैत-वेदान्ते भक्तिपदार्थोऽपि स्व-स्वरूपानुसन्धानमेवास्ति । आचार्यशंकरः स्वविवेक-चूडामणिनामके ग्रन्थे प्रतिपादितवान् -

"मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी ।
स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते ॥

---

1. ब्रह्मसूत्रशांकरभाष्यम् - 1/1/2.

स्वात्मतत्त्वानुसंधानं भक्तिरित्यपरे जगुः ॥"[1]

"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"

इति श्रुतिवाक्यमपि आत्मन एतदनुसन्धानस्य प्रक्रियां सुस्पष्टं प्रतिपादयति ।

<u>अद्वैतसाधनायां मनसः प्राधान्यम्</u>

अद्वैतवेदान्तस्यैतस्याः साधनायाः कृतेऽपि मानवः शरीरमनसो-र्द्वयोरपि साहाय्यं गृह्णाति । छान्दोग्योपनिषदि नामाद्युपासनायाः मह-त्त्वमधिकं भवति । "मनोवाव वाचोभूयः" इत्युक्त्वा "मनो हि ब्रह्म मनः उपास्स्वेति- - - स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथा काम-चारो भवति" इत्यादिरूपेण साधनायां मनसः महत्त्वं स्पष्टं प्रतिपादितमस्ति । मनसा भूयान् ~~[illegible]~~ संकल्पो भवति संकल्पापेक्षया च चित्तं महद् भवति । चित्ता-पेक्षया ध्यानमुत्कृष्टं भवति,एतदपि च प्रतिपादितमस्ति यत् मनुष्येषु ये महत्त्वं प्राप्नुवन्ति, ते ध्यानेनैव प्राप्नुवन्ति ।

ध्यानं वाव चित्ताद्भूयो, ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं - - - - तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांशा इवैव ते भवन्ति ।[2]

किन्त्वेतस्यायमर्थो न भवति - धर्मनैतिककर्त्तव्यादयो व्यर्था एव

---

1. शंकराचार्यकृत विवेकचूडामणिः - श्लोक 32-33.
2. छान्दोग्योपनिषद् - 7/6/1.

स्युः । आचार्यशंकरः स्वविवेकचूडामणौ साधनचतुष्टयमत एव संकीर्तितवान्.

यथा -

"मोक्षस्य हेतुः प्रथमो निगद्यते,
वैराग्यमत्यन्तमनित्यवस्तुषु ।
ततः शमश्चापि दमस्तितिक्षा,
न्यासः प्रसक्ताखिलकर्मणां भृशम् ॥

ततः श्रुतिस्तन्मननं सतत्त्व-
ध्यानं चिरं नित्यनिरन्तरं मुनेः ।
ततो विकल्पं परमेत्य विद्वा-
निहैव निर्वाणसुखं समृच्छति ॥"[1]

उपर्युक्तसाधनानां पश्चादेव मानवस्य मनः आत्मानात्मविवेकार्थं सक्षमो भवति क्रमशश्च सः महावाक्यस्यार्थं विचार्य स्वब्रह्मत्वस्थे वस्थितोऽभवति, भगवद्गीता-यामप्येषैव तस्य" ब्राह्मी स्थितिः" प्रतिपादिता वर्तते । विवेकवैराग्यशमदमा-दयोऽन्तःकरणस्यैव वृत्तिविशेषाः सन्ति । एतेन साधनायां मनसो विशेषमहत्त्वस्य स्थानं सूचितं भवति ।

(ब) द्वैतमूलकभावना

उपास्योपासकभावसाधनायाः मूले द्वैतभाव आवश्यको भवति । अत एव शाङ्करवेदान्तातिरिक्ता केचन अद्वैतिन आचार्या अपि (श्रीमन्ना रामानुजवल्लभादयः) मोक्षप्राप्तेः साधनं विहितकर्मणामनुष्ठानपूर्विकां भक्तिमुपा-

---

1. विवेकचूडामणि - श्लो० 71-72.

तन्नैव वा स्वीकुर्वन्ति । ते हि केवलेन ज्ञानेन मुक्तिं नाङ्गीकुर्वन्ति । शांकरवेदान्ते सगुणोपासनार्थं भक्तिस्तथा ध्यानयोग उपासना च साधन-रूपेणाङ्गीकृता सन्ति, किन्तु मोक्षस्य प्राप्तौ "ब्रह्मविद्ब्रह्मैव भवति" तथा "तमेव विदित्वा अतिमृत्युमेति" इत्यादि श्रुत्यनुसारं महावाक्यश्रवणमात्रेणोत्पन्न ज्ञानेनैवाविद्याया अज्ञानस्य वा निवृत्तिमङ्गीकुर्वन्ति । असम्भावना तथा विप-रीतभावनादिदोषान् दूरीकर्तुं मननिदिध्यासने कारणत्वे भवतः ।

2. साधनायामधिकारिभेदः-

साधनायामधिकारिभेदस्य महत्त्वमत्यन्तमधिकं प्रतिपादितमस्ति । इत्थमुत्तमाधिकारिणां कृते केवलं श्रवणमात्रम् अर्थात् महावाक्यस्य श्रवणमेव पर्याप्तं भवति । तथा मध्यमाधिकारिणां कृते मनन निदिध्यासनानां सहयोगो एव भवति महावाक्यश्रवणजन्यज्ञानेनाज्ञाननिवृत्तिपुरस्सरं स्वस्वरूपस्थितिः अर्थात् मोक्षप्राप्तिर्जायते ।

श्रीमन्मण्डनमिश्रवाचस्पतिमिश्रप्रभृतयस्तत एव प्रसंख्यानस्याव-श्यकतां स्वीकृतवन्तः । निदिध्यासनस्य अर्थो ध्यानं प्रसंख्यानमेव वा कृतौ वती । इत्थमधिकारिभेदेन शांकरमते कर्मणः उपासनायाश्चापि महत्त्व-पूर्णं स्थानं स्वीकृतमस्ति ।

3. उपासना [भक्ति] ज्ञानयोरन्तरम्

अस्मिन् स्थले उपासनाया ध्यानज्ञानयोश्च भेदस्य स्पष्टं स्वरूपं ज्ञातव्यं भविष्यति । शांकरभाष्ये पूर्वपक्षत्वेन प्रतिपादितमस्ति यज्ज्ञानमपि मान-

किंवा क्रिया अस्ति ? एतत्समाधानाय आचार्यशंकरः कथयति, यदेतन्न समीचीनम् । ध्यानचिन्तनादिमानसिक्यः क्रियाः पुरुषतन्त्राः अर्थात् पुरुषाधीनाः भवन्ति, किन्तु ज्ञानं वस्तुतन्त्रं भवति । न च तद् विधिवाक्यैरधीनं भवति, न च पुरुषाधीनमेव वा भवति । अतश्चिन्तनध्यानोपासनादिमानसिक्यः क्रियाः पुरुषतन्त्राः भवन्ति । पुरुषो यदीच्छेत्, तदा कुर्यात्, नवा, अथवा अन्यथा रूपेणापि तत्कर्तुं शक्नोति, किन्तु ज्ञानन्तु केवलं प्रमाणजन्यमेवास्ति, प्रमाणञ्च यथाभूतमेव वस्तु विषयीकरोति । अतो ज्ञानस्य करणम्, न करणमथवा अन्यथा-करणं नैव सम्भवम् । "ननु ज्ञानं नाम मानसी क्रिया । न वैलक्षण्यात् । क्रिया हि नाम सा, यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च । - - - - ध्यानं चिन्तनं यद्यपि मानसम्, तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यम्, पुरुषतंत्रत्वात् । ज्ञानं तु प्रमाणजन्यम् । प्रमाणं च यथाभूतवस्तुविषयं, अतो ज्ञानं कर्तुमकर्तुमन्यथा वाकर्तुमशक्यम् । केवलं वस्तुतन्त्रमेव तत् न चोदनातंत्रं नापि पुरुषतंत्रम्[1] ।

किन्तु वैष्णवाचार्यद्वारा या भक्तिरुपासनावा मोक्षस्य साधन-भूता स्वीकृता वर्तते, तस्याः स्वरूपं शांकरमतस्य ज्ञानात् सर्वथा भिन्नमस्ति । "नारदभक्तिसूत्रे" पांचरात्रागमे च भगवन्नामश्रुतिमननिदिध्यासनप्राणायामप्रत्याहार-धारणाध्यानसमाध्यादिरूपा या तैलधारावदविच्छिन्नस्मृतिसन्तान-भगवद् ध्यानमेवमोक्षस्य साधनमुक्तमस्ति । एतेषामाचार्याणां मते निर्गुणनिराकार-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. ब्रह्मसूत्रशांकरभाष्यम् - 1/1/4.

निर्विशिष्टतत्त्वस्य ज्ञानं नैव सम्भाव्यते । आचार्यो वल्लभस्तु भक्तेर्लक्षणं "माहात्म्यज्ञानपूर्वकं परानुरक्तिः भक्तिः" अर्थात् भगवतो माहात्म्यज्ञानपूर्वकं भगवन्तं प्रति-परमानुरागस्य नामभक्तिरस्ति, इत्थं कृतवान्। अधिकारिभेदादेतेषां सर्वेषां साधनानां यथासम्भवं यथा अधिकारी उपयोगसाधनायाः मार्गस्य स्वयं निर्धारयति इत्थञ्च सर्वप्रकारकसाधनानामधिकारिभेदद्दृष्ट्या समन्वयो भवति ।

५. शांकरमते भक्त्यर्थः

आचार्यो विद्यारण्यमुनिः भक्तिं "संवादिभ्रम" रूपेणाङ्गीकरोति । अर्थात्तस्मिन् मते भक्तिः भ्रमभूता सत्यपि वस्तु प्राप्तौ सहायिका भवति, अतः सा संवादिभ्रमाख्या भवति ।

"संवादिभ्रमवद् ब्रह्मतत्त्वोपास्त्यापि मुच्यते ।
उत्तरे तापनीयेऽतः श्रुतोपास्तिरनेकधा ॥
दीपप्रभामणिभ्रान्तिर्विसंवादिभ्रमः स्मृतः ।
मणिप्रभामणिभ्रान्तिः संवादिभ्रम उच्यते[1] ॥"

मणिप्रभायां मणिभ्रान्त्या यः पुरुषः प्रवर्तते सः मणिस्वरूपं वस्तु प्राप्नोत्येव । अतः एवम्भूतायाः उपासनायाः संवादिभ्रमस्य संज्ञा प्रदत्ता वर्तते। उपासनयापि च वस्तुभूतस्य ब्रह्मणः प्राप्तिः स्वीकृता वर्तते । उक्तप्रकारद्वय-साधनायां मनसो योगदानं स्पष्टमेव प्रतिभाति । शांकरमते मनननिदिध्यासने मनसः एव व्यापारभूते स्तः । साधनचतुष्टये शमस्यार्थ एव मनसो विशेषावस्था-

---

1. पंचदशी - ध्यानदीपप्रकरण - श्लोक 1, 6.

रहिता स्थितिर्भवति ।

5. <u>साधनायां मनसः स्थानम्</u>

उपासनाद्वारा या साधना क्रियते, सा यद्यपि मानसिकी क्रिया अन्तर्निष्ठास्ति, किन्तु निरन्तरप्रीतिपूर्वकभगवद्भावनाद्वारा भगवतोऽथवा स्वेष्ट प्राप्तिः साधकस्य भवति एव । संसारस्य सर्वेषु धर्मेषु भगवत्प्रेम्णो भक्तौ ध्यानस्य चोपयोगिता स्वीकृता वर्तते ।

विभिन्नदर्शनानां साधनाविषयकमतभेदानां विस्तृतं वर्णनमेतस्य शोधप्रबन्धस्य लक्ष्यं नास्ति । अधिकारिभेदस्य सिद्धान्तं स्वीकृत्याध्यात्मिक-मार्गस्य प्रत्येकप्रकारकसाधनायाः कृते सम्यक् स्थानं वर्तते । प्रेम्णा तथा ध्यान-द्वारा सिद्धिपथस्य विघ्नानां निवारणं भवति, भगवत्कृपायाश्च प्राप्तिर्भवति, इत्थं साधनायाः पथि गच्छतां विश्वस्य सर्वेषां सज्जनानामनुभवो वर्तते । शांकरमतेऽपि उपासनायाः भक्तेः प्रेम्णश्च महत्ता स्वीकृता वर्तते । किन्तु शांकर-मते भक्तेरर्थः "पराप्रीतिः" नास्ति । अपि तु भक्तेरर्थः "आत्मानुसंधान"मेवास्ति। किन्तु मानवस्य बन्धमोक्षौ मनस एव स्वीकृतौ भवतः । "सर्ववेदान्तसिद्धान्तसार-संग्रह"नामके प्रकरणग्रन्थे आचार्यशंकरः स्पष्टत्वेन प्रतिपादितवान् -

"बन्धश्च मोक्षो मनसैव पुंसा-
मर्थोऽप्यनर्थोऽप्यमुनैव सिध्यति ।
शुद्धेन मोक्षो मलिनेन बन्धो,
विवेकतोऽर्थोऽप्यविवेकतोऽन्यः ॥

रजस्तमोभ्यां मलिनं त्वशुद्धं
अज्ञानजं सत्त्वगुणेन रिक्तम् ।

मनस्तमोदोषसमन्वितत्वात्,

जडत्वमोहालसता प्रमादैः ।।

तिरस्कृतं सन्नुपैतिवास्तवं

पदार्थतत्त्वं ह्युपलब्धमानम् ।"

इत्थञ्च मानवस्य बन्धमोक्षयोः कारणं मन एवास्ति तथा मानवस्यावनतिर्मन एव जायते । शुद्धं मनो मोक्षस्य कारणमस्ति, अथ च मलिनं मनो बन्धस्य हेतुर्भवति । मनो विवेकक्रियाद्वारा अभीष्टफलं प्रददाति अविवेकद्वारा चानर्थस्यापि कारणं भवति । रजोगुण-तमोगुणाभ्यामभिभूतं मनः मलिनम्, अशुद्धमनस्त्वञ्चोच्यते, यतो हि तस्य सत्त्वगुणः रजोगुण-तमोगुणैरभिभवो भवति । यदा मनस्तमोदोषेण समन्वितं भवति, तदा जडता, मोहः, आलस्यम्, प्रमादादयश्च तत्र संभवन्ति । इत्थं मनो वास्तविकपदार्थस्य तत्त्वमर्यादात्मनो ग्रहण-योपलब्धमानमपि तस्य साक्षात् ज्ञानं [अनुभवम्] कर्तुं न शक्नोति ।

तत्सम्प्रदायाचार्यैर्न्यवेदान्तप्रवर्तकाचार्य श्रीमद्वल्लभाचार्याणां मते शांकरमते च अहन्तायास्त्यागः समानत्वेन स्वीकृतो वर्तते । श्रीमद्वल्लभाचार्याः अहन्तायाः एवं परित्यागम् "आत्मसमर्पणम्" इति वदन्ति । अर्थात् ते भगवतः शरणे गत्वा स्वकीयं सर्वं व्यक्तित्वं समर्पयन्ति । शांकरमते ज्ञानेनाविद्यायाः विनाशो भवति, तदैव चाविद्यायाः कार्यभूतानां शरीरमनः इत्यादीनामपि नाशो जायते । अहंता [ईगो] अपि मनस एकावृत्तिरस्ति । मनोनाशेन सह अहन्तायाः नाशोऽभवति । जीवो वास्तवे च स्वरूपे अर्थात् ब्रह्मस्वरूपे स्थितो जायते । सुषुप्तौ निर्विकल्पसमाधौ च मनसो लयो भवति, तत्र

वासनायाः सर्वथा अभावो भवति. किन्तु अद्वैतावस्थायामिदं मनः स्वानु-
भूतिसंस्कारैः सह जागरूकं तिष्ठति अतस्तत्कारणाच्च पुनर्द्वैतः कल्पनायां पतति ।

द्वैतमूलकोपास्योपासकभावयुक्तभक्तिमार्गस्य साधनापथे भक्तानां साधकानां स्खलनभयात् पतनमवलोक्यते । अतः शांकरमते साधनायाश्चरमलक्ष्यभूतेन ज्ञानेन अविद्यायास्तत्कार्याणाञ्च सर्वथा नाशो जायते । इत्थञ्च मनो नाशे सति मानवः स्थितप्रज्ञस्य जीवन्मुक्तस्य वा अवस्थां प्राप्नोति । अतः रागादि-कामविवर्जितं मनः सदा तिष्ठति. निरापदोमार्ग इति वक्तुं नैव शक्यते । अतोऽद्वैतसाधनायां मनोनाशस्य लक्ष्यं स्थापितमस्ति. तेन च मानवः पुनः साधनामार्गात् पतनाशंकातः मुक्तो भवितुमर्हति । उपनिषत्सु विशेषरूपेण छान्दोग्योपनिषदि अनेकप्रकारकोपासनानां वर्णनं कृतमस्ति । 'ओमित्येतदक्षरमुद्गीथमुपासीत । लोकेषु पंचविधं सामोपासीत । आदित्य सप्तविधं सामोपासीत । मनो ब्रह्मेत्युपासीत । इत्थमनेकानि उपासनाः विद्यन्ते । अद्वैतमूलकद्वैतमूलकोभयविधायां साधनायां द्वैतभावात् अहंभावाद्योपर्युव्यानस्य दर्शनमुपलभ्यते ।

6. <u>मुक्तिकोपनिषदि साधनाद्वारा मनोनाशः</u>

मुक्तिकोपनिषदि तस्याः साधनायाः अत्यन्तं सुन्दरं वर्णनं वर्तते । यथा -

पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद् बन्धो भवति । तन्निरोधनं जीवन्मुक्तिः । उपाधिविनिर्मुक्त घटाकाशवत् प्रारब्धक्षयाद् विदेहमुक्तिः ।

7. साधनायां पुरुषप्रयत्नस्य महत्त्वम्

एतत्प्रकारद्वयात्मिका मुक्तयवस्था पुरुषप्रयत्नसाध्यभूता भवति । कर्तृत्वादिदुःखनिवृत्तिद्वारा नित्यानन्दस्य प्राप्तिरेव मानवस्य साधनायाः परमं प्रयोजनमस्ति । मानवस्यायं पुरुषप्रयत्नः रूपद्वयेन द्रष्टुं शक्यते: -

1- शास्त्रानुकूल्यविहितः पुरुषप्रयत्नः, तथा

2- शास्त्रप्रतिपादितरीत्या विहितः पुरुषप्रयत्नः ।

यावत्पर्यन्तं मानवहृदये- 1- लोकवासना, 2- शास्त्रवासना, 3- देहवासना च तिष्ठति, तावत्पर्यन्तमात्मनो यथार्थज्ञानन्तु नैव जायते । शुभाशुभभेदेन वासना अपि प्रकारद्वयात्मिका भवति । अशुभवासनानाशहेतौ सति शास्त्रप्रतिपादितेन साधनेन प्रयत्नेन च ताः जेतव्याः । यदा मानवः एकैव सह वासना-क्षयस्य, विज्ञानस्य [आत्मज्ञानस्य] मनोनाशस्य च चिरकालपर्यन्तमभ्यस्यति, तदैव सः स्वाभीष्टफलं प्राप्तुं शक्नोति ।

"जन्मान्तरशताभ्यस्ता मिथ्या संसारवासना ।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥
तस्मात्सौम्यप्रयत्नेन पौरुषेण विवेकिना ।
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेव समाश्रय[1] ॥"

अर्थात् संसारवासनायाः अभ्यासोऽनादिकालादेव जीवः कुर्वन् आगच्छति, अतो यावत्पर्यन्तं चिरकालिकाभेद-वासनायाः आत्मतत्त्वज्ञानस्य चाभ्यासो न क्रियते,

---

1. मुक्तिकोपनिषद् - 2/14-15.

तावत्पर्यन्तं संसारवासनाया उच्छेदोऽपि न सम्भाव्यते । अतो विवेकिपुरुषाणां कृतेऽपेक्षितप्रयत्नद्वारा अर्थात् दीर्घकालनिरन्तरेण सत्कारपूर्वकाभ्यासक्रम-द्वारा च संसारवासनाया अर्थात् द्वैतवासनाया भेदवासनायाः वा उच्छेदः कर्तव्यः । मानवस्य सांसारिकभोगेच्छायाः दूरतः एवं परित्यज्य - [1] तत्त्वज्ञान, [2] वासनाक्षय, [3] प्राणनिरोधेति त्रयाणामेकदैवाभ्यासः कर्तव्यः ।

वासनाभिर्युक्तस्य मनस एव नामबद्धं मन इत्यस्ति सम्यग्वासनाभिः रहितं मनः मुक्तमनः इत्युच्यते । अतः साधकेन निम्नलिखितसाधनानामभ्यासः सत्काल एव कर्तव्यः ।

"अध्यात्मविद्याधिगमः, साधुसंगतिरेव च ।
वासना संपरित्यागः, प्राणस्पन्दनिरोधनम् ।
एतास्तु युक्तयः पुष्टाः सन्ति चित्तजये किल ।।"[1]

अर्थात् [1] वेदान्तशास्त्रस्याध्ययनद्वारा आत्मज्ञानस्य प्राप्तिः, [2] साधु-[सिद्ध]पुरुषाणां संगतिः, [3] शुभाशुभसर्वप्रकारकवासनानाम्परित्यागः, तथा [4] प्राणायामस्याभ्यासेन प्राणस्पन्दनस्य निरोधः, एताभिश्चतुर्भिर्युक्तिभिः अभ्यासे कृते सति चित्तजयो निश्चितरूपेण प्राप्तुं शक्यते ।

यदा चित्तं साधनायाः परिपाकेण प्रशान्तवृत्तिमद् भवति, तदा तत्परमानन्दप्रदायकं भवति । अभ्यासस्य बलेन पुनर्जन्मांकुरमुत्पादयतो मनसः स्थितिः

---

1. मुक्तिकोपनिषद् - 2/44-45.

बहूनि जन्मार्जितं बीजमिव जायते, अर्थात् पुनश्च तत् मनःसाधना पुनर्जन्मप्रदातृभिः सम्पूर्णमलिनवासनाभिः सहिता विनश्यति, पुनश्च तत्र जन्माङ्कुरोत्पादकाभावत्वं तिष्ठति । मुक्तिकोपनिषदि सात्याः स्थितेर्वर्णनं इत्थम्प्रकारेण समुपलभ्यते ।

"अज्ञानसुघनाकारा घनाहंकारशालिनी ।
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥
पुनर्जन्माङ्कुरं त्यक्त्वा स्थितिः संभृष्टबीजवत् ।
बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम्[1] ॥"

अन्वेष्टव्यं प्रयत्नेन मारुते ज्योतिरान्तरम् ।

"दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
य आस्ते कपिशार्दूल ब्रह्म स ब्रह्मवित्स्वयम्[2] ॥"

उक्त साधनाद्वारा मनो नाशे जाते सति जीवन्मुक्तः पुरुषः प्रारब्ध-
प्रारब्धकर्मणां भोगद्वारा विनाशयति, अन्ते च स्वब्रह्मस्वरूपे स्थितः सन् प्रारब्धक्षयानन्तरं विदेहमुक्तिं प्राप्नोति ।

एतत्समग्रसाधनायां मनोद्वारैवाध्यात्मज्ञानस्य प्राप्तिः तथा शुभवासनाद्वारा अशुभवासनानां विनाशः, साधुसंगतिः प्राप्तव्यं शुभसंस्कारं प्राप्नुवन्तो च साधको बन्धस्य परमकारणभूतस्यैतस्य मनसश्च विनाशं करोति, जन्म-मरणचक्रात् सर्वतो भावेन मुक्तः सन् सच्चिदानन्दस्वरूपात्मनि स्थितो भवति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. मुक्तिकोपनिषद् - 2/62-63.
2. ,, - 2/64.

सांख्ययोगदर्शनयोरपि चित्तशुद्धिः, चित्तस्य च वृत्तिराहित्यं वर्णयित्वा निरोधावस्थायाः कथा कथिता वर्तते । एतेषां दर्शनानां लक्ष्यमपि कैवल्यप्राप्तिरेवास्ति । अत्र मनो निरोधस्य वर्णनन्त्वस्ति किन्तु मनोनाशस्य वर्णनं नास्ति यतोहि शाङ्करवेदान्तं परित्यज्य सर्वाणि दर्शनानि एकप्रकारकाणि द्वैतवादीनि दर्शनानि भवन्ति ।

2. मन एवं मतिमत्त्व

पाश्चात्त्यमनोविज्ञाने सामान्यमानवानां सामान्यमनोऽवस्थासु तथा विकृत [एबनार्मल] मनोऽवस्थासु च विचारो विधीयते भारतीयसाधनासु वर्णितयोगभक्तिज्ञानोपासनाध्यात्मज्ञानादीनाञ्च तत्त्वदर्शनस्य धर्मदर्शनस्य च विषयभूतत्वात् मनोविज्ञानस्य क्षेत्राद् बहिरेव निष्कासिताः सन्ति । समन्वयस्यैत- स्याभावेनैकमतयाभावकारणाच्च पाश्चात्त्यमनोविज्ञानस्य क्षेत्रे अनेकप्रकारकाः नूतनाः नूतनाः सम्प्रदायाः प्रादुर्भूता अभवन् । यत्र परस्परं विरोधानां नूतनानां नूतनानां कल्पनानाञ्च स्थापनाया अभिनिवेशो दृष्टिगोचरो भवति । परिणा- मतः तत्रत्याः मनोवैज्ञानिकाः विद्वांसः स्वयं मनोविज्ञानं प्रति असन्तोषमनु- भवन्ति, तच्च "सम्यक् विज्ञान" रूपेण नैव स्वीकुर्वन्ति । ते मनोविज्ञानं गणित- विज्ञान, भौतिकविज्ञान, खगोलविज्ञानादि विज्ञानस्तरेषु स्थापनार्थं नैव प्रयतन्ते ।

भौतिकविज्ञान-खगोलविज्ञान-गणितविज्ञानेषु च यादृशानां घटनानां पूर्वानुमानं सुव्यवस्थितपद्धत्या क्रियते, तथा पाश्चात्त्यमनोविज्ञाने इदानीं यावत् सम्भवो नाभूत् । किन्तु भारतीयमनोविज्ञानस्यानुभवाधारेण मनसः पञ्चभूमीनां

दर्शनं योगदर्शने समुपलभ्यते । मनसः एताः पञ्चभूमयः सांख्ययोग-दर्शनस्य त्रिगुण-सिद्धान्तोपरि आश्रिता वर्तन्ते । [1] मूढ, [2] क्षिप्त, [3] विक्षिप्त, [4] एकाग्र, [5] निरुद्धश्च । मनस एतासु पञ्चभूमिषु पाश्चात्त्यमनोविज्ञाने मानवानां केवलं तस्यैव मनसो विचारः कृतो वर्तते, यद् मूढ-क्षिप्त-विक्षिप्तासु ऽवस्थासु समुपलभ्यते । एकाग्रताया अपि संकेतो यत्र तत्र कृतो वर्तते, किन्तु धारणा-ध्यानसमाधीनामेषां त्रयाणां नाम योगदर्शने संयमेति नामास्ति यस्माद्-त्पन्नस्य मनसः उत्कृष्टपरिणतेः क्वचन विचारः पाश्चात्त्यमनोविज्ञाने नाभूत् । यत्र योगस्योत्तमायाः साधनायाः समुपलब्धानां विभूतीनां प्रायो मिथ्याविश्वास-युक्तत्वमेवेत्यभिमतः आसीत् । योगदर्शनस्य तृतीयस्मिन्नध्याये वर्णितानां योग-विभूतीनां मैक्समूलर "मिटेकिल्स" नाम ददाति । तांश्च "तर्कहीन अतिशयोक्ति" मात्रयुक्त्या त्यजन्ति । योगिनां योगजन्यशक्तिमूलकालौकिककार्याणां विषये ते कथयन्ति -

In xugs reading the accounts of the miracles performed by Yogies in India we have in fact the same feeling of wonderment which we have in reading of the miracles performed by the Newplatonists in Alexandria- - - -ofcourse we know that such thing as the miracle here related are impossible, but it seems almost as great a miracle in human nature that such things should sus over have been blived, and should still continue to be believed.[1]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1. Indian Philosophy; Sankhya and Yoga : By Maxmuller.
- P. 133-138.

किन्तु योगमार्गस्य पथिकः अनेकयोगिनां जीवन्मुक्तानां योगसाधकानामनुभवान् सर्वेषामविश्वसनीयासम्भाव्यानां चोक्त्वा नैवापसारयितुं शक्यते । बौद्धसाधनायां तथा पतञ्जलेः योगदर्शने वर्णिताः योगविभूतयः "केवलमन्धविश्वास" कथनं दुःसाहसमात्रमेवास्ति । मैक्समूलरः स्वयमेव कथयति -

> A part from that, however, we must also remember that the influence of the mind on the body and of the body on the mind is as yet but half explored.[1]

अतो मनसोऽनन्तशक्तीनां प्रकृतिः प्रकृतेश्च पदार्थेषु प्रभावः कदा यावद् भवति, एतस्य समाधानं योगदर्शने समुपलभ्यते । पाश्चात्त्यैरपि जगति साइकिकोलाजीच इत्यस्य परीक्षणद्वारा मनसो लौकिकशक्तीनां संकेतः समुपलभ्यते । विलियमजेम्सकृत "दी वेराइटीज ऑफ रीलिजियस एक्सपीरियेन्स" इत्यादिना तथाभूतानि अनेकान्युदाहरणानि दातुं शक्यन्ते यैः ईसाई सद्भिः अनेकाद्भुतालौकिकशक्तीनां संकेतः समुपलभ्यते, इत्येवं प्रकारकाणि यानेकसाधनाजन्योदाहरणानि भारतीयतन्त्रशास्त्रेषु समुपलभ्यन्ते । भगवद्गीतायां वर्णितभगवद्-विराड्रूपदर्शनस्य व्यासद्वारा संजयाय प्रदत्तदिव्यदृष्टेर्यथार्थो । तथा पैरासाइकालोजीनामकग्रन्थेषु वर्णितानामनेकालौकिकतथ्यानां तादृशाधारेणैव वक्तुं शक्यते, यत् विज्ञानतोऽपि बहिरपि अलौकिकशक्तयः कार्यं कुर्वन्ति, यौगिकसाधनाद्वारा एताः शक्तयः आयत्तीकृताः कर्तुं शक्यन्ते ।

अलेक्जेन्ड्राडेविडनीलमहोदयः स्वतिब्बतयात्रायाः आधारे अनेक-

---

1. Indian Philosophy : Sankhya and Yoga : By Maxmuller. - P. 138.

लामानां अद्भुतयौगिककार्येषु "मिस्टिसिस्टिक एण्ड मैजिशियन्स इन तिब्बत" नामके स्वग्रन्थे प्रकाशं पातितवान् । एतेषां लेखकानां व्यक्तिगतानुभवान् "अन्धविश्वास" मात्रमुक्त्वा नैव त्यक्तुं शक्यन्ते ।

भारतीयसाहित्ये दिव्यमनो दिव्यवागादीनां वर्णनमुपनिषत्स्वपि समुपलभ्यते -

"पृथिव्यै चैनमग्नेश्च दैवी वाग् आविशति ।
सा वै दैवी वाग् यया यद्यदेव वदति तत्तद् भवति ।
यथा - दिवश्चैनमादित्याच्च दैवं मन आविशति ।
तद्वै दैवं मनो येनानन्द्येव भवति अथो न शोचति ।"[1]

अर्थात् साधनया सा दैवी वाणी प्राप्यते, यया यत्किञ्चिदपि उच्यते तदेव जायते । साधनया च योगिनस्तथा दिव्यं मनः प्राप्नुवन्ति, येन ते सदा आनन्दमेवानुभवन्ति, नैव च कदापि शोचन्ति ।

योगदर्शने वर्णितानां समाधेश्चतुर्णां स्वरूपाणां मधुमती मधुप्रतीका-विशोकासंस्कारशेषाख्यानाम् अवस्थानां पाश्चात्त्यमनोविज्ञाने कुत्रापि क्वचन विचारो नाभूत् । योगदर्शने चित्तवृत्तिनिरोधस्यैव नाम "योगः" कथितो वर्तते। क्षिप्तं विक्षिप्तं मूढं चित्तं च योगस्य कृते अनुपयोगि प्रतिपादितमस्ति ।

सम्प्रज्ञातसमाधेः ये चत्वारो भेदाः कृत्वा वर्तन्ते, अर्थात् वितर्कानुगतविचारानुगतानन्दानुगतास्मितानुगतोद्देश्यकः पाश्चात्त्यमनोविज्ञाने क्वचन विचारो नाभूत् । बौद्धसाधनायां मनोविज्ञानस्य यासां सूक्ष्मसाधनानां वर्णनमुप-लभ्यते एतासु साधनासु बौद्धधर्मशीलानाम् महीनां "विशुद्धिमग्ग" नामके ग्रन्थे

---

1. बृहदारण्यकोपनिषद् - 5/18-19.

विस्तारेण यः सूक्ष्मो विचारः कृतो वर्तते, तस्यापि समावेशः पाश्चात्त्यमनो-विज्ञाने इदानीं यावन्नाभूत् ।

पाश्चात्त्यमनोवैज्ञानिकानां ध्यानमेतस्यां शताब्द्यां ततः एतासु अवस्थास्वपि इदानीं किञ्चित्सीमापर्यन्तम् आकृष्टमभूत्, यस्य परिणाम-स्वरूपं "परामनोविज्ञानम्" नाम्ना एकस्य नूतनस्य शास्त्रस्योदयोऽभूत् । परा-मनोविज्ञानस्यैतस्मिन् नूतने क्षेत्रे दूरदर्शन, इन्द्रियातीतप्रत्यक्ष विचाराणामेकाग्रतया वस्तूनां परिचालनं तथा अन्यस्य हृदये स्वविचाराणां सम्प्रेषणादितथ्यानां चर्चा प्रारब्धा अभूत्, इदमित्थंप्रकारेण भारतीययोगग्रन्थे वर्णितानां योगशक्तीनाम् अत्य-न्तास्पष्टविभूतीनाञ्च स्वीकृतिर्जातास्ति ।

विज्ञानस्योन्नत्या मनोमानसिकविचाराणां मानवशरीरस्य प्रक्रियासु प्रभावो वर्तविज्ञाने तदिदानीमपि स्वीकृतो वर्तते । क्राइस्टमहोदयस्य जीवने वर्णिता-श्चमत्कारघटनास्वपि इदानीं विश्वासः प्रारब्धोऽभूत् । जेक्सडीमार्क्वेटमहोदयः "रिलीजन इन दी लाईट आफ साइंसिस" नामके स्वग्रन्थे एवम्प्रकारकालौकिक-घटनानां विज्ञानतत्त्वस्य सत्यं स्वीकरोति । सः कथयति -

All the miracles ascribed to jesus, have been successfully reproduced in thousands of well autheriti-cated cases, in the three great American there peutic churches of 'cristion-science', 'New thought' and 'Unity' and the like.[1]

---

1. Jacques De Marquette : Religion in the lightof Sciences. - P. 13-14.

किन्तु एतद्ध्यानं ध्यातव्यं भवति, यत्पाश्चात्त्यमनोविज्ञानदर्शनस्यैतानि तथ्यानि स्वविचारसीमातो बहिरेवाङ्गीकरोति एतानि तथ्यानि प्रति च चक्षुर्निमीलनमेवोचितं जानाति ।

अतिमनसो र्थः

यथा योपरि प्रतिपादितमस्ति पाश्चात्यमनोविज्ञानस्य मनसः प्रायः तिस्रोऽवस्थाः भवन्ति । निद्रादिषु मूढावस्था, जागरणेषु चञ्चलः सन् इतस्ततो गच्छतो मनसः क्षिप्तावस्था तथैकस्य वस्तुनो कस्मिंश्चिदेकस्मिन् विषये एकाग्रभूता सती अन्यविषयेषु गमनो मनसः विक्षिप्तावस्था भवति । किन्तु एकाग्रतया निरोधस्य च दीर्घकालिकसाधनया निरन्तराभ्यासेन च यदा मनसः अन्तर्निहितशक्तयः अलौकिकशक्त्यावस्थायां विकसिताः भवन्ति तदा इत्थं शक्तिसम्पन्नस्य मनसोऽतिमनः [सुपर माइण्ड] पदेनोच्यते ।

साधनायाः प्रकर्षे मनसि एका इत्थम्भूता प्रज्ञा समुत्पद्यते या केवलं ऋतं सत्यमेव वा केवलं गृह्णाति । योगदर्शने एषा "ऋतम्भरा प्रज्ञा" इत्युच्यते। यदा योगिनां बुद्धितत्त्वं रजोगुण-तमोगुणरूपाभ्यामशुद्धिभ्यां नाभिभवति, तदा बुद्धितत्त्वं स्वच्छं सद् एकस्मिन् स्थितिप्रवाहे प्रवहति । योगदर्शनस्य शब्देषु एतस्या अवस्थायाः नाम वैशारद्यमस्ति । यथा -

"निर्विचारवैशारद्येऽध्यात्मप्रसादः ।"[1]

---

1. पातंजलयोगदर्शन - 1/47.

निर्विचारसमाधिद्वारा यदा बुद्धिसत्त्वमिमां विशारदतां प्राप्नोति, तदा स स्फुटं प्रज्ञालोकं प्राप्नोति ।

तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतंभरेति संज्ञा भवति । अन्वर्था च सा, सत्यमेव बिभर्ति, न च तत्र विपर्यासज्ञानगन्धोऽप्यस्ति । आगमेन अर्थात् योगशास्त्रानुमानेन तथा ध्यानाभ्यासरसेनेयं ऋतंभरा प्रज्ञा प्राप्यते । इयं योगस्यैका उत्तमावस्था कथिता भवति । इयमपि मनस एका उत्कृष्टा अवस्था ज्ञातव्या । पाश्चात्त्यमनोविज्ञाने सर्वसाधारणस्य विशिष्टस्याथवा व्यक्तिविशेषैकाग्रमनसा मनोद्वारा प्रेरितशारीरिकचेष्टाभिरनुमितं ज्ञानं प्राप्यते, तथा सांख्यिकीयसिद्धान्तानुसारम् एवम्भूतमनसोऽवस्थानां सामान्यीकरणं क्रियते । योगशास्त्रे वर्णितसाधनासिद्धयैव ऋतंभरा प्रज्ञा प्राप्तस्य मनसोऽवस्थाभिरत्यन्तनिम्नकोटिकाः अवस्थाः वर्तन्ते ।

भारतीयमनोविज्ञाने क्रियायोगेन अष्टाङ्गयोगस्याभ्यासेन च मनोमनोत्कृष्टभूमिं गच्छति, सामान्यतस्तु मनोऽतिमनस्तत्त्वे परिणमते, तस्यासाधारणशक्तियोगद्वारा प्राप्तासाधारणविभूतीनान्तु केवलमन्धविश्वासमात्रं स्वप्नसुखवन्नैवापलपितुं शक्यते । योगिनां सत्पुरुषाणान्तु जीवनेषु एवम्भूता लौकिकशक्तीनां सिद्धीनान्तु वर्णनं प्रायः सर्वत्रापि उपलभ्यते । त्रिकालसीमानिर्मुक्तस्य योगिनस्तथा मनः प्रमाणैः प्राप्तवतां ज्ञानानामपेक्षया तदपि ज्ञानमनुभवैर्वैऽपतारयति यल्लौकिकसामान्यज्ञानात्सर्वथा भिन्नमस्ति । अत एव कथितमस्ति यत् "नास्ति योगसमं बलम्" अर्थात् योगतुल्या कापि शक्तिर्नास्ति ।

---

1. पातंजलयोगदर्शन - व्यासभाष्य - 1/48.

3. <u>जीवनस्य विभिन्ना अवस्थाः</u>

विश्वस्मिन् सर्वेऽपि मानवाः जाग्रद् स्वप्नसुषुप्त्याख्या अवस्थाः अनुभवन्त्येव, किन्तु योगिनः सविकल्पकनिर्विकल्पकसमाधिद्वारा एकामन्यामपि अवस्थामनुभवन्ति, यातुरीयावस्था चतुर्थावस्थायोच्यते । वस्तुतोऽवलोक्यते तदा एतावत्योऽपि अवस्थाः मनोमूलिका एव ।

[अ] <u>जागरितावस्थाः</u> -

एतस्यामवस्थायां मानवः इन्द्रियद्वारा जगतो विषयान् उपलभ्यति । यथा च पंचदशीग्रन्थे प्रतिपादितमस्ति -

"इन्द्रियैरर्थोपलब्धिर्जागरितम् ।"[1]

प्रत्यक्षानुमानोपमानशब्दादि-प्रमाणद्वारा मानवो जगतो भिन्नभिन्नविषयाणां ज्ञानं प्राप्नोति । जागरितावस्थायां वेद्यविषयः प्रायः स्थिरो भवति । यथा- यं महाविद्यालयमद्याहं दृष्टवान्, तमहं स्थिरकारणात् कालान्तरेऽपि द्रष्टुं शक्नोमि ।

[ब] <u>स्वप्नावस्थाः</u> -

स्वप्नावस्थायाः लक्षणं पंचदशीग्रन्थे एवम्प्रकारं कृतमस्ति -

"करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्नः ।"[2]

अर्थात् स्वप्नावस्था तथाभूता अवस्था वर्तते, यत्रेन्द्रियाणि उप-

---

1/2. पंचदशी तत्त्वविवेकप्रकरण - पृ० 3.

संभूतानि भवन्ति जाग्रदवस्थायाञ्च विविधः वस्तूनामनुभवेन ये संस्काराः मनसि पतन्ति, तैः संस्कारैरन्यविषयाणां ज्ञानं स्वप्ने सञ्जायते । स्वप्नजागरणयो-रुभयोरवस्थयोरेव तेषां विषयाणाञ्च ज्ञानं भवति । किन्तु जागरणावस्थायामनु-भूताः विषयाः स्थिरास्तिष्ठन्ति, यदा च स्वप्ने परिदृश्यमानो वस्तुसमूहः नैव स्थिरो भवति । तेषां वस्तूनां स्वरूपं केवलं प्रतीतिमात्रमेव भाति । स्वप्न-जागरणयोरुभयोरवस्थयोः मनसोऽसंवृत्तिः [अंगो] तिष्ठति ।

[ग] <u>सुषुप्त्यवस्था</u>: -

प्रगाढनिद्राया अवस्था सुषुप्त्यवस्थोच्यते । तस्यामवस्थायां तमो-गुणस्याधिक्यकारणात् मनः सूक्ष्मचित्तस्यावस्थायां वा पतति, स्वकारणे अर्थात् अविद्यायां लीयते । यदा सुषुप्त्यवस्थायां मनुष्य उद्बुद्धो भवति, तदा तस्यैतद् स्मरणं भवति यत् "अहं तथा अस्वाप्सम् येनाहं न किञ्चिदपि अज्ञासिषम्" । एता अवस्थाः सर्वसामान्यानुभूतिविषयाः भवन्ति । आचार्यमधुसूदनः स्वप्रणीतो-टीकायां वेदान्तानुसृत्या एतस्य विस्तृतं वर्णनं कृतवानिति यत्तद्विभावना विदुं ज्ञापयन्ते ।

[द] <u>तुरीयावस्था</u>: -

तुरीयावस्थाया अनुभवः केवलं योगिनां मनसैव भवति । एतस्यामव-स्थायां मनोबुद्धं विक्षिप्ताञ्च कारकैस्तमोगुणरजोगुणसत्त्वगुणद्वारा सर्वथा तिरोहितं भवति । योगिनां चित्ततत्त्वमेतस्यामवस्थायामेकाग्रमथवा सर्वथा निरुद्धमेव तिष्ठति । अथवा योगिनां मनश्चित्तवृत्तिः कस्मिंश्चिदेकस्मिन् विषये एकाग्-

भूता सती स्थिर प्रवाहेण प्रवहति अथवा इतोऽप्यग्रे, समग्रवृत्तीनां निरोधश्च जायते । मनस एतामवस्थां प्राप्तुमेव च स्थिरं स्थापयितुं योगदर्शने वर्णितानां योगाष्टांगानां सत्कारपूर्वकदीर्घकालपर्यन्तनिरन्तराभ्यासः कर्तव्यतया आपतति, तदैव योगिनो मनोनिरोधस्यावस्थामपि प्राप्नुवन्ति । दीर्घकालपर्यन्तं मनो-निरोधस्याभ्यासकरणेन निरन्तरोत्साहेन सह प्रयत्नकरणेनैव सविकल्पकः निर्वि-कल्पको वा समाधिः प्राप्यते । एताः योगिनः साधनापथस्यावस्थाः वर्तन्ते, एताश्च सर्वसामान्यानुभूतेरगम्याभिन्नता अवस्थाः वर्तन्ते अथवा योगभूमयो वर्तन्ते, यासां योगदर्शने विस्तृतं वर्णनं कृतमस्ति । आत्मा अर्थात् चितिशक्तिः एतासां सर्वासामवस्थानां साक्षित्वेन द्रष्टृमात्रमेव केवलं तिष्ठति ।

इत्थमुक्ता अवस्थाः यद्यपि मनस एवावस्थाविशेषाः वर्तन्ते, तथापि अन्तःकरणेन सह तादात्म्यकरणात् इयं जीवस्यापि अवस्था कथिता वर्तते । शुद्धचितिरथवा आत्मा, सांख्य,-योगवेदान्तयोश्च तत्त्वचिन्तने असङ्गनित्यशुद्ध-स्वरूपोक्तो वर्तते । अतः स आत्मा सर्वाभिरवस्थाभिः परो वर्तते ।

५. <u>मुक्तेस्तथा जीवन्मुक्तेरवस्थासु मनसः सत्ताकार्यञ्च</u>:-

एतदुपरि प्रतिपादितमस्ति यदात्मज्ञानद्वारा अज्ञानस्य अज्ञान-कार्यस्य विनाशो भवति । अज्ञानस्य नाशः केवलं ज्ञानेनैव जायते, यतोह्यज्ञानस्य विरोधिज्ञानमेवास्ति, उपासनाभक्तिप्रसंख्यानादयश्च नाज्ञानविरोधिनो भवन्ति। जीवन्मुक्त्यवस्थायां तत्त्वज्ञानकारणान्मनोनाशो जायते । यतोहि मनो ज्ञानस्य अर्थात् प्रकृतेरेवैकं कार्यं वर्तते । समग्रप्रपञ्चः स्वैकरूपया प्रकृतेः कार्यमस्ति, सांख्य-

सिद्धान्तानुसारन्तु प्रकृतेरुत्पद्यमानानि सर्वाणि वस्तूनि त्रिगुणात्मकान्येव सन्ति। अतोऽन्तःकरणं मनोऽपि वा सत्त्वरजस्तमसां त्रयाणां गुणानामेव परिणामभूतमस्ति । द्वैतवादिदर्शनं सांख्यदर्शनमिति कृत्वा प्रकृतिरनादिरनन्ता चेति स्वीकरोति, किन्तु अद्वैतवेदान्तविचारसिद्धान्तमर्थात् आत्मानमेवाभिन्ननिमित्तोपादानकारणमुक्त्वा मायां प्रकृतिं वा महेश्वरस्यैवैकां शक्तिमङ्गीकरोति । उपनिषदि नामरूपात्मकैव तस्याः मायाशक्तेः स्वरूपं प्रतिपादितमस्ति । अतोऽन्तःकरणमपि आत्मनः एकः शक्तिविशेषो भवति । तत्त्वज्ञानेन यदा साधकः अज्ञानमज्ञानकार्यम् [अन्तःकरणादिकञ्च] विनाशयति, तदा स जीवन्मुक्तोऽर्थात् प्राणधारणं कुर्वन्नपि "मुक्त, इति संज्ञां प्राप्नोति । सन्तसाहित्ये एवम्भूताः साधकाः अमरजीवा" पदवाच्याः कथ्यन्ते । मानवस्य श्वासप्रश्वासयोः क्रिया मनोमूलिकैवास्ति । अन्तःकरणरहिते शवे प्राणस्य क्रिया नैवावलोक्यते । अत्रायं प्रश्नो भवितुमर्हति यत् यदा जीवन्मुक्तपुरुषस्य मनो नाशो भवेत् तदा एतस्य प्राणशरीरयोश्च धारणक्रिया कथङ्कारं भवितुमर्हति ? एतस्येदमेव समाधानमस्ति, यत् यथा रज्जौ दग्धायां सत्यामपि यद्यपि रज्जुबन्धनादिकं कार्यं भवितुं नार्हति तथापि दग्धरज्जुस्वरूपं तथैव तिष्ठति । इत्थञ्च ज्ञानेन मनो नाशे जाते सत्यपि मनसः संस्कारस्यो अवस्थितिस्तिष्ठत्येव, एतस्य संस्कारकारणाच्च जीवन्मुक्तस्य व्यावहारिको व्यापारोऽवलोक्यते । अन्यशास्त्रेषु ज्ञानद्वारा संचितानां क्रियमाणानाञ्च कर्मणां नाशो जायते, किन्तु प्रारब्धकर्मणः [अर्थात् तत्कर्म येन मानवस्य जन्म, शरीरादेश्च प्राप्तिरभूत्] क्षयः केवलं भोगेनैव जायते । अतो जीवन्मुक्तव्यक्तेः प्रारब्धकर्मणां कारणात् तदीयप्राणशरीरादिकाः क्रियाः प्रचलन्त्येव यदा च प्रारब्धकर्मणां

प्रतिसर्गेण लीयते, तदा स विदेहमुक्तिं प्राप्नोति ।

वासनाकारणादेव च प्राणः स्पन्दते प्राणस्पन्दनेन च वासना तिष्ठति । यदा चिरकालं निरन्तरमनोनिरोधस्याभ्यासेन । स साधकस्य चित्तं वासनाभिः रहितं जायते, तदा तत् "चित्तम्" वासनाविरहितं सत् "अचित्तताम्" प्राप्नोति, परमशान्ति-प्रदात्री "अमनस्ता" नामिकाया अवस्थाया उदयो जायते। शुद्धतपसा शास्त्रप्रमाणैश्च दुर्वासनानां स्थाने योगिनश्चित्ते शुभवासनानां प्रवाहः प्रवहति, तत्पश्चाच्च योगिनः तासां शुभवासनानां प्रवाहमपि निरुद्धं करोति । इत्थञ्च वासनारहितं चित्तं ज्ञानाग्निनादग्धं सद् नाशं प्राप्नोति ।

मुक्तिकोपनिषदि अत एव मनोनाशस्यावस्थाद्वयं प्रतिपादितमस्ति- [1] सरूपमनोनाशः, [2] अरूपमनोनाशश्च । जीवन्मुक्तस्य मनोनाशः सरूप-मनोनाशो भवति । विदेहमुक्तौ प्राप्तायां तस्यां मनसो रूपनाशो भवति । यथा -

"द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ।
जीवन्मुक्तः सरूपः स्यादरूपो देहमुक्तिगः[1] ॥"

सरूपमनोनाशे सति मनसि कर्मभूतायाः अपि मुक्तेरथवा वासनाया उदयो न भवति । अतः साधकस्य चित्ते आवरणं विक्षेपो वा नैव जायते, किन्तु मनसः संस्कारस्वरूपावशेषस्य स्थितौ सत्यामपि प्राणस्पन्दनं शारीरिक-चेष्टाश्च प्रारब्धकर्मानुसारं प्रचलन्ति । एताः शारीरिकचेष्टाः तथा प्राण-

---

1. मुक्तिकोपनिषद् - श्लोक 32-33.

स्पन्दनसाधकबिम्बव्यक्तीनां प्रतीतिर्जायते । जीवन्मुक्तस्तु शनैर्मुक्त एव जायते । प्रारब्धकर्मणां क्षयः केवलं भोगेनैव जायते । प्रारब्धे कर्मणि नष्टे जीवन्मुक्तस्य शरीरपातोऽपि जायते । ज्ञानस्य कारणं जीवन्मुक्तस्य संचितं क्रियमाणं च कर्म नैव तिष्ठति । शरीरपातात्परं मनोनाशस्य या अवस्था भवति सा च अत्यमनोनाशपदेनोच्यते ।

वैष्णवाचार्याः जीवन्मुक्तेरेतामवस्थां नैव स्वीकुर्वन्ति । ते केवलं विदेहमुक्तिमेव स्वीचक्रुः किन्तु श्रुतिषु गीतादिस्मृतिषु च जीवन्मुक्तावस्थायाः वर्णनमुपलभ्यते । आचार्यविद्यारण्यः "जीवन्मुक्तिविवेक"नामके ग्रन्थे जीवन्मुक्तेरेतस्या अवस्थायाः वर्णनमत्यन्तविस्तरेण कृतवानस्ति । एतेन वर्णिनोक्तोपनिषत्सु वर्णिततथ्यानां पूर्णतः सम्पुष्टिः कृता भवति ।

॥ इति सप्तमोऽध्यायः ॥



सद्विद्यानन्दमयविद्योद्गीथहिरण्मयपुरुषविद्योद्गीथाकाश-
विद्याप्रस्तावप्राणदृष्टिविद्यागायत्रीविद्याप्रतर्दनविद्याशाण्डिल्यविद्या-
नाचिकेतविद्योपकोसलविद्यान्तर्यामिविद्याक्षरविद्यावैश्वानरविद्याभूमविद्या-
गार्ग्यक्षरविद्याभिमानपूर्णविद्यादहरविद्यामधुविद्यासंवर्गविद्यासत्यकामविद्या-
ज्योतिषां ज्योतिर्विद्याबालाकिविद्यामैत्रेयीविद्यादिविभिन्नासूपनिषत्प्रति-
पादितासु विद्यासु सद्विद्यां भूमविद्यां चोररीकृत्य निरस्तसमस्तोपाध्यनव-
च्छिन्नानन्तानन्दैकरसस्वरूपो निर्गुणनिराकारनिर्विकारोऽपि सगुण-साकार-
सविशेष एव प्रतिभासमानः साक्षात्परात्परः परब्रह्मपरमेश्वरो भगवान्नारायणो
निखिलहेयप्रत्यनीकानन्तकल्याणगुणगणविशिष्टश्चतुरशीति लक्षात्मिकासु योनिषु
सञ्चङ्क्रम्यमाणान् उद्भिज्जाण्डजपिण्डजस्वेदजभेदेन चतुर्धा विभक्तान् समस्तानपि
जीवान् स्वेच्छया सर्जति बर्भर्ति हर्ति च ।

सिसृक्षोः पिपालयिषोः संजिहीर्षोः परात्परस्य परमेश्वरस्य
तस्य नारायणस्यैतादृशी इच्छा कथञ्जागरूका इति काचिद्विचिकित्सानूनमेव
सर्वेषां सचेतसां चेतसि स्यादिति तज्ज्ञापकानायामस्यां विचिकित्सायाम्
"एकोऽहं बहु स्याम् प्रजायेय" इति स्वेच्छयैवेच्छाञ्चक्रे । स्वेतरसमस्तवस्तुविलक्षणा-
नन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजः
प्रभृत्यसंख्येय कल्याणगुणगणमहोदधेः स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्य-
निरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधि-

दिव्यरूपस्य स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यापरिमितदिव्यभूषणस्य स्वानुरूपासंख्येयाचिन्त्यशक्तिनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुधस्य स्वाभिमतानुरूपस्वरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभस्य स्वसंकल्पानुविधायिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूपनित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तगुणगणापरिमितसूरिभिरनवरताभिष्टुतचरणयुगलस्य वाङ्मनसापरिच्छेद्यस्वरूपस्वभावस्वोचितविविधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभवानन्तपरिमाणनित्यनिरवद्याक्षरपरमव्योमनिलयस्य विविधविचित्रानन्तभोग्यभोक्तृवर्गपरिपूर्णनिखिलजगदुदयविभवलयलीलस्य परस्य ब्रह्मणः पुरुषोत्तमस्य नारायणस्येच्छायाः तारित्वअनुगुणत्वात् तारित्वकता, परन्तु पाञ्चभौतिकानां जीवानामिच्छा सर्वथा विनाशित्वादनित्यैव ।

अत्र सिद्धान्तकारा आत्मसिद्धावित्थं विवदन्ते - मनसो हि सर्वेन्द्रियेषु प्रधानत्वात् सर्वेन्द्रियैरेकत्वाच्च तथैव व्यवह्रियमाणत्वान्मनस एव चैतन्यमस्तु । तथा सति इन्द्रियात्मवादिनां स्मृतिप्रतिसन्धानानुपपत्तिनानात्वप्रसङ्गादिदोषाणाञ्च नात्र पक्षे प्रसङ्ग इत्याशयेनोपपद्यते चेन्द्रियान्तरेण प्रतिसन्धानम्, दर्शनानुसन्धानाधारस्य मनस एकत्वात् । ततश्चेन्द्रियापायेऽपि मनसो नित्यत्वात् स्मरणमप्युपपद्यत एव । तदपि न समीचीनतां पदवीमधिरोहति । तथाहि- सर्वत्र ज्ञाने करणत्वन्मनसो न तत्र कर्तृत्वमात्मत्वं वा सम्भवति । मनो हि न प्रत्यक्षविषयः । किन्तु युगपज्ज्ञानानुत्पत्तिलिङ्गेन सकलज्ञाने करणविशेषतयाऽनुमीयते । तत्र च मनसो न ज्ञातृत्वं चक्षुरादेरिव सं-

वतीति भावः । बाह्येन्द्रियेषु यथायथं निजविषयसन्निकर्षसद्भावेऽपि यतो युगपदेव सर्वे विषयाः प्रतीयन्तेऽतोऽवगच्छामः – अस्ति किञ्चिदपरमपि तत् यत्सहायकविरहान्न सर्वे प्रकाशन्ते, कश्चिदेवैकः प्रतीयते इति । अत्र सहायकविरहादित्यस्य सन्निकर्षविरहादित्यर्थः। तत्तदर्थग्राहकेन्द्रियस्येति शेषः । एवञ्च बाह्यार्थेषु युगपज्ज्ञानानामनुत्पत्तिलिङ्गेन सर्वेन्द्रियसहकारित्वेनाणुभूतस्य मनसः "मनः करणमिन्द्रियत्वात्" इत्यादिनानुमानमुक्त्वा आन्तरसुखादिसाक्षात्कारेषु करणतयाऽपि मनसोऽनुमानमाह – सुखादिसंवेदनान्यपि करणवन्ति क्रियात्वात्, संवेदनत्वाद्वा रूपादिज्ञानवदिति । न च करणतयानुमितस्यैव मनसो ज्ञानादौ कर्तृत्वमपि लाघवादस्तु इति वाच्यम्, स्वातन्त्र्य-पारतन्त्र्यलक्षणयोः कर्तृत्वकरणत्वयोर्विरोधात् करणस्य कर्तृत्वासम्भवात् । तथाहि आत्मसमवेतमेव सुखान्तरं ज्ञानमिच्छां तन्वीकृत्य च निमित्तीकृत्य प्रवृत्तिः प्रवर्तमानत्वं कर्तुः स्वातन्त्र्यमित्यर्थः । कर्तृत्वं नामस्वेच्छाधीनस्वप्रवृत्तिकत्वरूपस्वातन्त्र्यनियतं स्वेच्छयैव साध्यसिद्ध्युपायविकासप्रतिसम्पादनसामर्थ्यम् । करणत्वञ्च परेच्छाप्रयत्नाधीनस्वव्यापृतिकत्वलक्षणपारतन्त्र्यनियतं परस्य कर्तुः ईप्सितक्रियानिष्पत्तौ प्रकृष्टोपकारकत्वलक्षणम् । न च तयोरेकत्र समावेशः सम्भवतीति भावः । यद्यपि चैतन्यैकत्र कर्तृत्वं करणत्वञ्च सम्भवेदपि आकारभेदात् । तथापि मनसश्चैतन्ये दृढतरप्रमाणाभावात् लोकसिद्धव्यवस्थया च चक्षुरादिवत्परस्य चेतनस्य सुखाद्यनुभवकरणतयैव सिद्धेर्न मनसो कर्तृत्वम् । वस्तुतस्तु अत्यन्तातीन्द्रियेष्वर्थेषु शास्त्रमेव प्रमाणम् । तत्रच मनोविज्ञानशास्त्रे जीवस्योपकरणतयैव सिद्ध्यतीति तात्पर्यम् । न च स्वसुखादिबाह्यान्तरपदार्थानुभवेषु मन एव कर्तृ । आन्तरसुखाद्यनुभवे करणं

पाकजपरमाणुरूपवदिति । द्रव्यान्तरसंयोगस्य सुखादौ असमवायिहेतुत्वात्तस्यात्मनः संयोगस्यैवतथात्वेन परिशेषान्मनसः सिद्धिरिति कश्चन पक्षः, सोऽपि स्खलीयान्। अन्वयव्यतिरेकसहचारदर्शनादेव हि सर्वत्र कारणत्वाध्यवसायः । पार्थिवाणुरूपादौ दहनसंयोगस्य हेतुत्वमपि ततो देहावयवादौ रूपादिपरावृत्तेर्दृष्टत्वाद् दृष्टानु-सारादेव कल्प्यते । इह चानुकूलज्ञानादेरेव सुखादौ हेतुत्वं दृष्टम् । समवायि-रूप आत्मनि प्रत्यासन्नत्वात्तस्यैवासमवायिहेतुत्वं च युक्तं तथेति नादृष्टद्रव्या-न्तरसंयोगस्य तथात्वेन कल्पनावसरः । अतो दृष्टहेतुरूपैव तत्तल्लक्षणयोगेन सम-वायिहेतुत्वादिव्यवस्थाप्यम् । ज्ञानादिदृष्टहेतुभिन्नस्यात्मोभयत्वासिद्धस्य द्रव्यान्तरसंयोगस्य हेतुत्वकल्पनायां तु दृष्टत्यागो अदृष्टपरिकल्पना च । ज्ञानादेरसमवायिहेतुत्वे बाधकस्यानुपलब्धेः तद्भिन्नस्यासमवायिहेतु मध्ये निवेशोऽनर्थकश्च । सुखादौ तु तद्विपर्ययः कारणान्तरोपलम्भश्च दृष्टान्तातो-ह्यन्यम् । एतावता पूर्वोक्तानुमाने प्रयोजकत्वाद्व्याप्त्यासिद्धिरुक्ता । दृष्टा-न्तो नः द्रव्यान्तर संयोगः भौतिकः - भूतारब्धः भौतिकप्रतियोगिक एव दृष्ट इति प्रकृतेऽपि भौतिकदेहादिप्रतियोगिकात्मानुयोगिकसंयोग एवानुमानपर्यवसानान्न-काणादाभिमतनवमद्रव्यस्याभौतिकमनसः सिद्धिरित्यारोति भावः ।

मनो न पार्थिवं तेजसादिव्यञ्जकगन्धानभिव्यञ्जकेन्द्रियत्वाद्रसनावत्.

मनो न जलीयं गन्धग्राहकेन्द्रियत्वाद्घ्राणवदिति अनुमानादिना मनसो भौतिकत्व-निषेधः । युगपज्ज्ञानानुत्पत्तिलिङ्गेनाणुत्वेन सिद्धेर्न मनसो विभुद्रव्यान्तर्भावः । अतो नवमद्रव्यत्वसिद्धिर्मनसो जायत इति कश्चन प्रश्न उदेति सोऽपि नैव युक्ति-पदवीमधिरोहति । धर्मिग्राहकविपरीतसाधनात् । मनसि पक्षेऽभिमतो यो विशेषो-

भौतिकत्वस्य, तद्विपरीतसाधकत्वादुक्तहेतूनामिति भावः । रसग्राहकेन्द्रियत्वं जलीयत्वं गन्धग्राहकेन्द्रियत्वादिपार्थिवत्वादि च मनसः साधयेत् । एवं साधनान्तराण्यपि भूतान्तरव्यतिरेकविधायकतीयभूतगताभावादयन्ति । रूपादिषु मध्ये गन्धाऽग्राहकत्वं पार्थिवत्वसाधकम् । एवं रसाग्राहकत्वादि च जलीयत्वादेः । तथा च मनसः पार्थिवत्वादिसाधकहेतोरसिद्धिरिति । तदपि न, यद्भूतगुणानग्राहकं यदिन्द्रियं तदेव भूतान्तरव्यतिरिक्तत्वेन तद्भूतभिन्नमिति भूतान्तरगुणग्राहकत्वाभावेन च तत्तद्भूतगुणग्राहकस्य मनसः तत्तद्भूतव्यतिरेकसिद्धिः । गन्धाद्यग्राहकत्वमेवापार्थिवादिसाधकम् । तच्च मनसो भौतिकत्वानुमाने पक्षे मनस्य सिद्धमिति भावः । अपार्थिवत्वाद्यनुमाने तत्तद्भूतगुणग्राहकत्वमुपाधिरिति चोक्तं भवति । इत्थञ्चापार्थिवत्वानुमानं प्रकृत्य मनसो भौतिकत्वानुमानमुपस्थापयति मनः पाञ्चभौतिकं पञ्चभूतगुणाकारसाधनत्वाद्देहवदिति । पञ्चभूतोपादानकत्वे गौरवाज्जातिसाङ्कर्यरीत्या "एकद्विकादिकं वा इतरभूतसंसृष्टमस्तु मनः" इति पक्षान्तरमुपस्थापयति देहस्यैकभौतिकस्य भूतान्तरोपष्टम्भवत्त्वाद्भूतान्तरगुणोपलम्भसाधनत्वोपपत्तिर्भवेत् इति तात्पर्यम् । "अन्नमयं हि सोम्य मनः" इति श्रुतिवाक्यमपि मनसः पार्थिवत्वे प्रमाणम् । अन्नरसाप्यायितस्यैव मनसः सङ्कल्पादिव्यापारक्षमतयाऽन्नमयत्वं श्रुतेऽन्नरसपरिपोषितत्वलक्षणम्, वायुविकस्य प्राणस्येवाऽन्नमयत्वं जलरसाप्यायितत्वात् । अत एव मनसो भौतिकत्वादेवापचर्यदशायामप्यनुवृत्तिर्भाव्यते यदि भौतिकं मनो भौतादा देहादिवन्मनसो नानु-

---

५५५ ---

1. BTO - 6/5/4.

स्कारकरणतया मनः कल्पनीयमिति भावः । तथा च सिद्धान्तकाररीत्या मनो न पृथक्तत्त्वमपि तु बुद्ध्यन्तर्गतमेव भाति । श्रीभाष्यकारास्तु इन्द्रियाणि किं सप्त[1], अथैकादशेति संशये सप्तेति पूर्वपक्षेणोपस्थापयन्ति, गतेर्विशेषितत्वात् । गतिस्तावच्छ्रूयमाणेन म्रियमाणेन च जीवेन तल्लोकेषु सञ्चरणस्थानानामेवोक्ता । तथा हि- "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त"[2] इति । विशेषिताश्च ते गतिमन्तः प्राणाः सप्तत्वतो भवन्ति । "[3]यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्" इति । शरीरान्तरसञ्चरणं विहाय मोक्षार्थगमनं परमा गतिः । इत्यत्र जीवेन सह जन्ममरणयोः सप्तानामेव गतिश्रवणात्, योगदशायां ज्ञानानीति विशेषितत्वाच्च जीवस्य करणानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणबुद्धिमनांसि सप्तैवेति गम्यते । "अष्टौ ग्रहाः"[4] "सप्तशीर्षण्याः प्राणाः द्वाववाञ्चौ"[5] इत्यादिषु प्राणश्रुतिवादकवाक्येषु यानि स्थितान्यपि विषयाणां ग्राहकत्वेन चतुर्दशपर्यन्तानि वाक्यानि पाठ्यानूस्थाहङ्कारचित्ताख्यानीन्द्रियाणि प्रतीयन्ते, तेषां जीवेन सह गतिश्रवणाभावात् जीवस्यात्यन्तोपकारकत्वमात्रेणौपचारिकः प्राणव्यपदेशो विधीयते इत्यादि रूपेण पूर्वपक्षे समुपस्थापिते "हस्तादयस्तु स्थितेऽतो नैवम्"[6] इति सूत्रे न सप्तैवेन्द्रियाणि

---

1. "घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रं च पञ्चमम् ।
मनो बुद्धिश्च सप्तैते ज्ञेयाः करणहेतवः ॥"
– भा0 आ0 अनुगीता पर्वणि 26.

3. क0 - 2/6/10.

2. मु0 - 2/1/8.

5. यजु0 - 7/3/10.

4. बृ0 - 5/2/7.

6. ब्र0 सू0 - 2/4/5.

अपि चैकादश, हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपकरणत्वात्, कार्यभेदाच्चश्रूयते हि श्रोत्रादीनामिव हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपकरणत्वात्, कार्यभेदाच्च । श्रूयते हि श्रोत्रादीनामिव हस्तादीनामपि आदानादिकार्यभेदः । अत एकादशेन्द्रियाणि भवन्ति । अतो हस्तादयो न सन्तीत्येवं न मन्तव्यम् । अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इति एकादशेन्द्रियाणि । अतः "दशेमे[1] पुरुषे प्राणाः आत्मैकादशः" श्रुतावपि आत्मशब्देन मनसोऽभिधानं वर्तते, यथा- "इन्द्रियाणि[2] दशैकं च पञ्च चेन्द्रियगोचराः" । "तैजसानीन्द्रियाण्याहुर्देवा[3] वैकारिका दश एकादशं मनश्चात्र" इत्यादि श्रुतिस्मृतिसिद्धेन्द्रियसंख्या स्थिता । अधिकसङ्ख्यावादाः मनोवृत्तिभेदाभिप्रायाः । अनेन सप्तसप्तेति प्राक्पुरुषभेदाभिप्रायकथनं पूर्वपक्षिकृतया, सिद्धान्ते बहुसंग्रहणेन स्वरसनिर्वाह एव । न्यूनत्वपक्षास्तु तत्र तत्र विवक्षितगमनादिकार्यविशेषयुक्ताः भवन्ति ।



---

1. बृ० - 5/9/4.
2. गी० - 13/5.
3. वि० पु० - 1/2/47.

विगतेष्वध्यायेषु भारतीयास्तिकदर्शनेषु मनस्तत्त्वसम्बन्धिनां विविधानां पक्षाणां निरूपणं विभिन्नदृष्टिभिः संक्षिप्तसमीक्षणस्य प्रयासश्च कृतं भवति, तथैव च पाश्चात्त्यमनोविज्ञानभारतीयमनोविज्ञानयोः भेदोऽपि यथा-स्थानं दृष्टिपातः कृतो भवति । विभिन्नदर्शनेषु मनस्तत्त्वस्य यादृग्विवेचनमभूत्, तस्य प्रयोजनमिदमस्ति यदिदं तत्त्वं सम्पूर्णज्ञानस्य प्रक्रियायाः मूले तिष्ठति, तथा सर्वप्रकारकज्ञानेषु तस्या निर्धार्योपयोगिता तथैव तदवस्था भवति । फलतो मनस्तत्त्वस्य सत्तायाः स्वीकृतिः अपरिहार्यत्वे सिद्धा अभूत् ।

भारतीयमनोविज्ञानिकदृष्ट्या मानवशरीरस्य, मनसः, मानव-चेतनायाश्च बाह्यजगतो मध्ये सम्बन्धस्थापने करणस्य कार्यसम्पादकत्वमस्ति, तथैव मानवस्यात्मपर्यन्तं जगतो विषयाणामिन्द्रियैः प्राप्तन्तु ज्ञानं मनोद्वारैव प्रापयितुं शक्यते । अतो भारतीयदार्शनिकचिन्तने मनः "अन्तःकरण" पदवाच्यं भवति ।

मानवस्य विविधशारीरिकचेष्टानां मूलप्रेरकं मन एवास्ति । मानवीयसुखदुःखानुभूतिक्रोधकामाद्यन्तर्विषयाणामनुभूत्यर्थं करणस्यावश्यकता स्वीकर्तव्यतया आपतति तथा अनुमानप्रमाणस्याधारेणेदं करणं मन एव सिध्यति ।

भारतीयचिन्तने शाश्वतसुखस्य [मोक्षस्य] तथा आत्यन्तिकदुःख-निवृत्तिरूपस्य लक्ष्यस्याधारेण भारतीयचिन्तनस्य समन्वयात्मकता एवं क्रमबद्धता च प्राप्यते । पाश्चात्त्यमनोविज्ञाने वर्ण्यविषयः केवलं मानवीयव्यवहारस्या-

ऽध्ययनमङ्गीकृतमस्ति, तत्र भारतीयास्तिकदर्शनेषु मनस्तत्त्वस्य तदध्ययनमधिकव्यापकतया गम्भीरतया च प्रतिपादितमस्ति, यतोहि भारतीयमनस्तत्त्वाध्ययनस्य लक्ष्यं केवलं व्यवहारपर्यन्तमेव सीमितं न भवति, अपितु मनस उत्पत्तिस्वभावविकासकार्याणाञ्च विवेचनकरणमपि वर्तते । विकसितं मनः आत्मपुरुषयोः रहस्यानां स्फुटमुद्घाटनं कृत्वा मानवस्य समग्राः जिज्ञासाः समादधाति ।

भारतीयमनोविज्ञानविषयकमहत्त्वपूर्णां सामग्रीं चिन्तनधारां प्रति च पाश्चात्त्यमनोवैज्ञानिकानाञ्च निःसन्देहमुपेक्षा वर्तते, मनस्तत्त्वविषयकचिन्तनधारां तदीय क्रमबद्धं तुलनात्मकमध्ययनं प्रति च गवेषकाणां दृष्टिर्न गता वर्तते । भारतीयमनोविज्ञानस्य समन्वयात्मकदृष्ट्या समानस्थैर्यप्राप्ति तदवेणोत्पन्ना सुव्यवस्था प्रकटिता भवति । तथैतस्य तुलनायां पाश्चात्त्यमनोविज्ञानस्य चिन्तनधारायां तथाभूतस्य समन्वयस्य ध्येयस्य चाभावः, परिसीमा, अपूर्णता तथा मनोविषयकचिन्तनप्रवाहे परस्परविरोधिसिद्धान्तानां विचाराणाञ्च समुदायः परिलक्ष्यते ।

भारतीयं मनोविज्ञानं विभिन्नास्तिकदर्शनेष्वेव एकमङ्गमासीत्, तथा विद्यानां परिगणनेऽपि मनोविज्ञानस्य समावेशः सर्वथा समीचीन इव प्रतीयते । पाश्चात्त्यदर्शने समुपलब्धेषु विविधेषु नामसु यथा- "माइन्ड", "सोल", "साइक", "स्पिरिट" तथा बुद्धिमधिकृत्य विचारयन् मनस्सम्बन्धिनां विविधानां नाम्नां कारणाद् यथा अस्पष्टता परिज्ञाता वर्तते तथा भारतीयास्तिकदर्शनेषु नोपलभ्यते, यतोहि भारतीयास्तिकचिन्तनधारायां मनः करणत्वेन स्वीकृतमस्ति, तथा आत्मशरीराभ्यां तस्य पृथक् सत्ता स्वीकृता वर्तते । पाश्चात्त्यदर्शने मनः इतरत्

प्रकारेण स्पष्टं स्वरूपं नोपलभ्यते ।

सर्वेषु आस्तिकदर्शनेषु शाश्वतसुखस्य प्राप्तिस्तथा आत्यन्तिकदुःखनिवृत्तिरेव जीवनस्य परमः पुरुषार्थः स्वीकृतो वर्तते, यस्य प्राप्तेः साधनस्थै मन एवैकमात्रं साधनमस्ति । व्यक्तीनां भिन्नानि भिन्नानि मनांसि भवन्ति, तेषान्तु मनसां भिन्नभिन्नविकासावस्था भवन्ति, अतः अधिकारिभेदस्वीकार आवश्यकः परिज्ञायते । आस्तिकदर्शनेषु अधिकारिभेदानुसारं उपदेशभेदस्वीकारोऽप्यावश्यकः । पन्थानो विभिन्नाः सन्ति, किन्तु गन्तव्यं स्थानम् अर्थादात्यन्तिकदुःखनिवृत्तिद्वारा परमानन्दप्राप्तेर्लक्ष्यमेकमेवास्ति ।

न्यायवैशेषिकदर्शनानुसारं मनश्शरीरात्मबाह्येन्द्रियैर्भिन्नमणुपरिमाणमेकः पदार्थो वर्तते, यच्च निखिलज्ञानजनकः सुखादिसाक्षात्कारस्यासाधारणं कारणम् [करणम्] अस्ति । एतानि दर्शनानि लाघवबुद्ध्या एकस्मिन् शरीरे एकमेव मनः स्वीकुर्वन्ति । एतेषां मतेन मनसः संयोगेन आत्मनि स्थिताः सुखदुःखादिविशेषगुणाः उत्पद्यन्ते, तथा मनसः उत्पत्तिर्नाशश्च नैव जायते, यतो हि अयमेकः नित्यः पदार्थोऽस्ति ।

सांख्ययोगदर्शनमतानुसारं मनः पुरुषस्य विवेकख्यात्युत्पादने प्रधानं कारणमस्ति । प्रकृतेः कार्यतत्त्वकारणात् मनः जडं त्रिगुणात्मकञ्चास्ति । चितिशक्तेः [पुरुषस्य] विवेकख्यात्युत्पादनात्परं मनः स्वकारणेऽहंकारे विलीयते । प्रत्येकस्मिन् शरीरे पृथक्पृथक् मनः सत्त्वात् मनो नानाऽस्ति । सांख्ययोगयोः सत्कार्यवादसिद्धान्तानुसारं प्रकृतेः प्रथमः परिणामः महत्तत्त्वमपि स्वकारणा-

हंकारादभिन्नं मनोऽपि विभु परिमाणमेवास्ति ।

पूर्वमीमांसादर्शनैकादशद्रव्येषु मनः एकं द्रव्यमङ्गीकरोति ।
चैतन्याश्रय आत्मा भवति, अतो मनः स्वतो जडमस्ति । मनसात्मनः संयोगेनैव
आत्मनि विशेषगुणाः सुखदुःखादय उत्पद्यन्ते । मनो बाह्येन्द्रियेभिन्नमन्तरिन्द्रिय-
मस्ति एतस्य च परिमाणम् आत्मा इव विभु भवति । मोक्षेऽपि मन आत्मनोः
संयोगेनैव सुखानुभूतिर्जायते । मीमांसादर्शनं मनस उत्पत्तिनाशौ नाङ्गीकरोति ।

उत्तरमीमांसा [वेदान्त] दर्शनानुसारं मनः पञ्च तन्मात्राभि-
रुत्पन्न एको भौतिकः पदार्थो भवति, तथा सम्पूर्णे शरीरे व्याप्तं मध्यमं परि-
माणमस्ति । कार्य-प्रक्रिया भेदैश्चैतस्यान्तःकरणस्य मनोबुद्धिचित्ताहंकार
नामानि भवन्ति । प्रत्येकं शरीरे पृथङ्मनसः सत्ता कारणात् मनोऽनेकमस्ति ।
भौतिकपदार्थतत्त्वोत्पत्तिकारणाच्च मनसः शरीरमिव नाशोऽपि भवति ।
अयं मनोनाश एव मोक्षप्राप्तौ साधन-[कारण]-मस्ति ।

जैनदर्शने मनसः स्वरूपं द्रव्येन्द्रियभावेन्द्रिय भेदेनोभयात्मकमस्ति.
तदैवेदं प्राप्यप्रकाशकारि अपि भवति । मनोद्वारैव मतिज्ञानमप्युत्पद्यते ।
अनिन्द्रियजन्यं ज्ञानन्तु मानसं ज्ञानमेवास्ति । जैनदर्शने मनोमध्यमपरिमाणवद्
पर्यायकं द्रव्यमस्ति, यद् संघातैः सृज्यते ।

बौद्धदर्शने मनः अध्यात्मायतनान्तर्गतं गृह्यते । अतीतसंस्काराणां
वासनानां सन्तानस्य प्रवाहस्य वा नाम मनो भवति । बौद्धदर्शनस्य विज्ञानवाद-
शाखानुसारं शरीरस्याभ्यन्तरस्य विज्ञानं बुद्धिर्वा मन एव वा बाह्यवस्तु स्वत्वे

प्रतीयते । अर्थादयं नानाप्रकारकोपचारसमन्वितं संसारस्य मनोविजृम्भणमस्ति। एतस्य व्यावहारिकीसत्ता भवति । तस्य वर्णिकाऽस्ति ।

भारतीयमनोविज्ञानस्य प्रधानं लक्ष्यं यत्र दुःखस्यात्यन्तिको नाशः, जन्ममृत्युचक्रान्मुक्तिश्च तत्र पाश्चात्त्यमनोविज्ञानस्य लक्ष्यं जीवनस्य बहिर्मुख-समस्यानां समाधानमस्ति । भारतीयाश्चिन्तकाः अन्तर्मुखाः [आवृत्तचक्षुः] सन्तः मूलकारणस्यानुसन्धाने प्रवृत्ताः सन्ति, यदा च पाश्चात्त्यचिन्तकाः बहिर्मुखाः सन्तः मानवीयसंसारस्य जटिलग्रन्थीनां समाधानार्थं प्रवृत्ताः परि-लक्ष्यन्ते ।

आस्तिकदर्शनेषु सूक्ष्मलक्ष्यात्ममनसः संयोगेनैव ज्ञातौ वस्तूनामुपभोगो भवति । मन एव चैतन्यस्यात्मनो बन्धमोक्षयोः कारणमस्ति । उपनिषत्स्वपि मनसः शरीरस्य च सम्बन्धः स्वीकृतो वर्तते, तदनुसारं शरीरान्तर्गते अत्यन्त-सूक्ष्महितादिनाडीसंस्थाने मनसो माध्यमेन चेतनायाः आविर्भावो जायते । एकस्य केशस्य सहस्रतमभागादपि सूक्ष्माणां पुरी तत नाडीनां साहाय्येनैव मनः कार्यं करोति । यद्यपि पाश्चात्त्यमनोविज्ञानेऽपि नाडीसंस्थानद्वारा क्रिया-कलापानां वर्णनं कृतमस्ति, किन्तु तत्र निबद्धवर्णितशरीरविज्ञानादत्यन्तं स्थूलं भवति । जीवात्मनः पृथक्सत्ताया अस्वीकार कारणाद् जीवस्य पुनर्जन्म, एतस्माद देहाद् देहान्तर प्राप्तिः, देवयानपितृयानादि-महत्त्वपूर्णग्रन्थेषु पाश्चात्त्यमनो-विज्ञानस्य ध्यानमिदानीं यावन्नागतम् ।

संकल्पविकल्पात्मकमन्तःकरणं "मनः" पदवाच्यं भवति । निश्चया-

एककस्यान्तःकरणस्य नाम "बुद्धिः"रित्यस्ति, अहंवृत्तिविशिष्टस्यान्तःकरणस्य नाम "अहंकार" इत्यस्ति । चैतन्यानुभावकस्यान्तःकरणस्य नाम "चित्तम्" इत्यस्ति । देहावच्छिन्नान्तःकरणं यद् "अहंकार" पदाभिहितं भवति,"कर्ता" इत्युच्यते । देहघटादिविषयाणां मध्ये विद्यमानइव इव लभ्यमानस्यान्तःकरणस्य "वृत्तिज्ञानम्" "क्रिया" इत्युच्यते । विषयस्य व्याप्तिकारकान्तःकरणमेव "प्रमा" इत्युच्यते ।

प्रत्येकं प्राणिनः शरीरं सामान्यावस्थायां देशकालवस्तुसीमातः परिसीमितं भवति, किन्तु मनोदेशकालवस्तुसीमातः सामान्यतया असक्ते भवे सत्यपि अवस्थाविशेषे एतस्याः परिसीमायाः अतिक्रमणमपि कर्तुं शक्यते । एतद्-तिरिक्तं कल्पनाशक्तिसंकल्पशक्तितया अन्य प्राणिनां मनसि प्रभावोत्पादिका-शक्तिरपि मनसः कृता वर्तते । यस्य निदर्शनमास्तिकदर्शनेषु यथेष्टत्वेन कृतं भवति ।

सर्वाणि आस्तिकदर्शनानि एतत्स्वीकुर्वन्ति यद् प्रत्यक्षज्ञानोत्पत्तौ अन्तःकरणमस्ति, अन्तःकरणस्य स्वे स्वे कार्यं करोति । एतदतिरिक्तं चिन्तितको-सिद्धिकव्यात्युत्पादकं कार्यमपि मनस एव वर्तते । अत एव वेदान्तदर्शने "मन एव कारणम्" इत्युक्त्वा मनसो महत्त्वपूर्णं व्यवहारं प्रकार्यं संकेतयति ।

प्रत्यक्षादिप्रमाणेषु मन एव करणत्वेन वर्तते । मनो साधारणकरण-स्वस्मै प्रमां [यथार्थ ज्ञानम्] उत्पादयति । मनसोऽनिन्द्रियत्वेऽपि ज्ञानस्य कृते प्रत्यक्षत्वेनैव कोऽपि बाधा आगच्छति, यतो हि ईश्वरस्य साक्षात्कारः [प्रत्यक्ष-ज्ञानं] इन्द्रियजन्यं नास्ति । अनुमानप्रमाणे व्याप्तिज्ञानार्थम्, उपमानप्रमाणस्य

प्रक्रियायां तादात्म्यज्ञानार्थम्, शब्दप्रमाणे पदस्य प्रत्यक्षज्ञानार्थं स्मरणाद्यर्थञ्च. अर्थापत्त्यनुपलब्धिप्रमाणेष्वपि तत्त्वानुभूतिहेतु मनसः संयोगो परिहार्यतया सिध्यति । वस्तुतस्समग्रदार्शनिकं चिन्तनं तत्त्वज्ञानञ्च मनसः प्रक्रियायां तदायत्तायां वा अवलम्बितं तिष्ठति । मनसो भावो किमपि व्यावहारिकं ज्ञानं नोत्पत्तुमर्हति ।

आत्मसंतोषः सर्वेषां मुख्यं लक्ष्यमस्ति । वैज्ञानिकानां सम्पूर्णमनुसन्धानं तथा दार्शनिकानां समग्रं चिन्तनं तकनीकि [टेक्नोलोजी] विद्यायाः कुशलाः शिल्पिनोऽपि स्व-स्वक्षमतया प्रेरिताः सन्तः ज्ञानस्य तत्त्वार्थं दूरीकरणप्रयत्ने मनसा सततं संलग्नाः सन्ति । जिज्ञासायाः सत्प्रेरणया मानवः स्वविभिन्नप्रकारकचारित्र्यार्थं शारीरिकान् मानसिकान् सर्वप्रकारकान् क्रियाकलापान् विदधानाः, विविधप्रकारकाणां यन्त्राणामाविष्कारं कृत्वा ततः साहाय्यं परिगृह्णाति ।

समग्रसाधनानां तात्पर्यं सच्चिदानन्दस्वरूपस्थितेः प्राप्तिरथवा एतस्मिन् पथि गमनस्य मनः प्रवृत्तिर्वर्तते, येन सः ईश्वरस्य सान्निध्यलाभं कृत्वा स्वत्वपूर्णासम्पूर्णतां परिसीमाञ्चातिक्रम्य बन्धनान्मुक्तः सन् आनन्दस्वरूपे अवस्थितो भवेत् ।

अद्वैतसाधनायां साधनचतुष्टयाभ्यासात् पश्चादेव मानवस्य मनः आत्मानात्मविवेकार्थं स्वच्छहृदयस्वरूपे स्थितो भवति । विवेकवैराग्यशमदमादयोन्तःकरणस्यैवप्रवृत्तिविशेषाः सन्ति । अतः साधनायां मनसो विशिष्टं महत्त्वपूर्णं स्थानं वर्तते ।

अधिकं ग्राह्यत्वमुपयोगित्वं वा प्रथयति । अनया दृष्ट्या आस्तिकदर्शनेषु विशेषतः सांख्य-योगदर्शनस्य तुलनायां पृष्ठभूमौ वेदान्तदर्शनस्य मनस्तत्त्वसम्बन्धिनिरूपणं नितान्तं युक्तियुक्तं सिध्यति ।

अतो निश्चिनोमि, "भारतीयदर्शनेषु मनस्तत्त्वम्" इति विषयको मौलिकः शोधप्रबन्धो मानवीयमनः शुद्धिहेतुः सांसारिकसंतापानामात्यन्तिक-विनाशहेतुः तथा आवागमनचक्राद् विमुक्तिहेतुरस्ति, अनेन यदि जनजीवनं प्रेरितं प्रवृत्तञ्चाप्युत्तेजितम् एतस्य प्रयासस्य सार्थक्यं ज्ञास्यामि ।

।। इति शम् ।।



## सहायकग्रन्थसूची

### [1] संस्कृत आधारग्रन्थाः

#### [अ] वैदिकवाङ्मयम् -

1. ऋग्वेद [शाकल्यसंहिता], प्रकाशक- वैदिकयन्त्रालय, अजमेर, द्वितीयसंस्करण, सं० 1967.
2. शुक्लयजुर्वेद „ „ „
3. सामवेद [कौथुमसंहिता] „ „
4. अथर्ववेद [शौनकसंहिता] „ „
5. ईशावास्योपनिषद् [शांकरभाष्यसहित], गीताप्रेस गोरखपुर, सं०2021.
   सं० 2022.
6. केनोपनिषद् „ „
7. ऐतरेयोपनिषद् „ „ „
8. मुण्डकोपनिषद् „ „ „
9. कठोपनिषद् „ „ सं०2021.
10. तैत्तिरीयोपनिषद्
11. प्रश्नोपनिषद्
12. माण्डूक्योपनिषद्
13. छान्दोग्योपनिषद्
14. बृहदारण्यकोपनिषद्
15. मुक्तिकोपनिषद्

(10–15:) ईशाद्यष्टोत्तर शतोपनिषद्, सर्वहितैषी कम्पनी, गोरखा-पुस्तकालय, बनारस। प्रथम संस्करण, 1938 ई०.

#### [ब] षड्दर्शनसाहित्यम्

1. पातंजलयोगसूत्रम्, गीताप्रेस, गोरखपुर, पंचदश-संस्करण, सं०2009.
2. न्यायसूत्राणि, आनन्दाश्रम प्रेस, पूना।

3. वैशेषिकसूत्रम् कणाद, चौखम्बा संस्कृत पुस्तकालय, वाराणसी,
संं 2023.

4. सांख्यदर्शन, सांख्यतत्त्वकौमुदी, डा0 आद्याप्रसाद मिश्र, प्रयाग।

5. न्यायसिद्धान्तमुक्तावलिः, चौखम्बा संस्कृत सीरिज, बनारस ।

6. मीमांसादर्शन, आनन्दाश्रम प्रेस, पूना, प्रथम संस्करण ।

7. ब्रह्मसूत्र [शांकरभाष्य], निर्णयसागर प्रेस, बम्बई ।

8. मानमेयोदयः, नारायणकृत, थियासफीकल पब्लिशिंग हाउस,
आडियार, मद्रास, संं 1933.

9. पंचदशी, विद्यारण्यमुनि, निर्णयसागर प्रेस, बम्बई-2,
सप्तम संस्करण, 1949.

10. शास्त्रदीपिका, पार्थसारथि, चौखम्बा संस्कृत सीरिज,वाराणसी।

11. प्रकरणपंचिका, गायकवाड़ सीरीज, बड़ौदा ।

12. सुरेश्वराचार्य वार्तिक, सुरेश्वराचार्य, आनन्दाश्रम प्रेस, पूना ।

13. सांख्यकारिका, ईश्वरकृष्ण, चौखम्बा सं0 सी0, वाराणसी,
द्वितीय संस्करण, संं 1989.

14. तर्कसंग्रह, अन्नम्भट्ट, बम्बई संस्कृत सीरीज, पूना ।

15. प्रशस्तपादभाष्यम्, चौखम्बा, वाराणसी ।

16. तर्कभाषा, केशवमिश्र, चौखम्बा सं0 सी0, बनारस ।

17. श्लोकवार्तिक, कुमारिलभट्ट, आनन्दाश्रम प्रेस, पूना ।

18. तत्त्वयाथार्थ्यदीपनम्, भावागणेशकृत, चौखम्बा सं0सी0,बनारस ।

19. शंकराचार्यविरचित पंचीकरणम्, गुजराती प्रिंटिंग प्रेस, बम्बई ।

20. वेदान्तसारः, सदानन्द, ओरियन्टल एजेन्सी, पूना सं0 1929
तथा कलकत्ता संस्करण ।

21. सिद्धान्तबिन्दुः, अच्युत ग्रन्थमाला, काशी ।

22. तन्त्रसिद्धान्तरत्नावलिः, श्रीचिन्नस्वामिशास्त्री, चौखम्बा
संस्कृत सीरीज, वाराणसी ।

23. षड्दर्शनसमुच्चयः, चौखम्बा संस्कृत सीरीज, वाराणसी.
सं0 1986 वि0

24. प्रमेयकमलमार्तण्डः, प्रभाचन्द्राचार्यकृत, निर्णयसागर प्रेस, बम्बई ।

25. स्याद्वादमंजरी, मल्लिषेण, चौखम्बा सं0 सं0, वाराणसी ।

26. प्रमाणनयतत्त्वालोकः, श्रीवादिदेवसूरिकृत, विजयधर्मसूरि
ग्रन्थमाला, उज्जैन ।

27. सद्धर्मलंकावतारसूत्र, डा0 शीतांशुशेखर, बाग्ची, दरभंगा ।

28. वेदान्तपरिभाषा, धर्मराजाध्वरीन्द्र, कलकत्ता विश्व-
विद्यालय, कलकत्ता ।

29. विवेकचूडामणिः, गीताप्रेस, गोरखपुर ।

30. तुन्माकव्यम्, चौखम्बा संस्कृत सीरीज, वाराणसी ।

31. ब्रह्मसूत्रम्, शा0 भा0 चौखम्बा बुक डिपो, बनारस, प्रथम सं0 ।

32. भामती, श्रीवाचस्पतिमिश्र, चौखम्बा सं0 सी0 आफिस, बनारस,
सं0 1935.

33. मनुस्मृतिः, मनसुखरायमोर, कलकत्ता, प्रथम सं0, सं0 1952.

34. पाणिनिसूत्रम् [अष्टाध्यायी] निर्णयसागर प्रेस, बम्बई,
सं0 1929.

35. द्रव्यसंग्रहगाथा ।

[ख] पुराणसाहित्यम्

1. श्रीमद्भागवतम्, गीताप्रेस, गोरखपुर, सप्तम संस्करणम्, सं02033.

[2] बौद्धजैनसाहित्यम्

1. तत्त्वार्थसूत्रम् [तत्त्वार्थाधिगमसूत्रम्] उमास्वाति, रावजी सखाराम-
दोशी, शोलापुर, तृतीय संस्करण, सं0 1937.
प्रथम-संस्करण ।

2. धम्मपद, साहित्यभण्डार, मेरठ,

